को समझाते हुए उनसे कहा—हे राजन्! यह पृथ्वी आपके द्वारा विधिपूर्वक पालन किये जाने पर ही एवं आपके द्वारा किए गए उपायों से निष्पन्न धान्यादि शस्यों द्वारा आपकी भोग्या बनेगी और आपका जो स्थानादि-विनिवेशन (= शिविर, ग्राम, शहर आदि) रूप अभीष्ट कार्य है, उसे स्वर्ग के आचार्य सर्व-सिद्धिप्रवर्त्तक, प्रभास नामक विभु के पुत्र एवं बृहस्पति के भाञ्जे, सम्पूर्ण विश्व में महाप्राज्ञ ये मुनि विश्वकर्मा सम्पादन करेंगे ॥ १६-२० ॥

**राजन्नसौ महेन्द्रस्य विदधावमरावतीम् ॥ २० ॥**
**अन्या अप्यमुना रम्याः पुर्यो लोकभृतां कृताः ।**
**त्वया क्षेत्रीकृतां मूर्तिं दृष्ट्वा साद्रिद्रुमामसौः ॥ २१ ॥**
**सन्निवेशान् पुरग्रामनगराणां विधास्यति ।**

हे राजन्! वस्तुतः उन विश्वकर्मा ने ही देवराज इन्द्र की नगरी अमरावती का निर्माण किया था और वर्तमान में राजाओं की अन्य मनोरम नगरियों की भी इन्होंने ही रचना की है। आपके द्वारा पर्वतों एवं वृक्षों से आकीर्ण इस साक्षात् मूर्ति (पृथ्वी) को क्षेत्रीकृत (= समीकृत Plain) देखकर विश्वकर्मा अवश्य ही पुर (City) एवं ग्राम तथा नगरों (Town) के सुन्दर-सुन्दर निवेशों का सम्पादन करेंगे ॥ २०-२२ ॥

### समाहितयोः पृथुभूम्योर्विसर्जनम्

**तद् गच्छ वत्स ! लोकानामितस्त्वं हितकाम्यया ॥ २२ ॥**

**ब्रह्मा द्वारा आज्ञा पाकर पृथ्वी एवं राजा पृथु का प्रस्थान**—इसलिए हे पुत्र! (पृथु !) लोकहित की कामना से आप यहाँ से प्रस्थान कीजिए और (पृथ्वी का शासन रूप) अपना अभीष्ट कार्य सम्पन्न कीजिए ॥ २२ ॥

**भयोज्झिता त्वमप्युर्वि! पृथोः प्रियकरी भव ।**
**काले स्मृतः स्मृतः पुण्यो राज्ञः प्रियचिकीर्षया ।**
**त्वमप्यखिलमेवैतद् विश्वकर्मन्! करिष्यसि ॥ २३ ॥**

हे पृथ्वी! आप भी भय छोड़कर और महाराज पृथु की प्रियकरी (= इष्ट साधन करने वाली) बन जाइए और हे विश्वकर्मा जी! आपको जब-जब महाराज स्मरण करें, तो उनकी हित कामना के लिए आप यह अखिल नियोग (भूतल पर ग्रामादि का विन्यास) करेंगे ॥ २३ ॥

**इत्युक्त्वा गमनमुपेयुषि प्रजेशेस्वं**
**स्थानं क्षितिभुजि चाश्रिते मुदोर्व्याम् ।**

**प्रालेयावनिभृतमाजगाम**
**खेलत्सिद्धस्त्रीपरिगतमाशु विश्वकर्मा ॥ २४ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचितसमराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे महासमागमनो नाम प्रथमोऽध्यायः ॥ १ ॥**

...

यह कहकर प्रजापति ब्रह्मा अपने स्थान को चले गए और अत्यन्त हर्ष से पृथु और पृथ्वी भी अपने-अपने स्थान पर आ गये । विश्वकर्मा भी अपने निवास स्थान हिमगिरि पर, जहाँ पर सिद्ध गण अपनी रमणियों के साथ क्रीड़ा करते रहते हैं और विहार करते हैं, वहाँ लौट आये ।

**विमर्श—'प्रालेयं मिहिका चाथ हिमानी हिम संहतिः'**—इत्यमरः । हिम संहति को प्रालेय कहते हैं । पृथ्वी पर भारत के उत्तर दिशा में सबसे अधिक बर्फ जमी रहती है । यहीं पर सिद्ध, गन्धर्व एवं चारण गण अपनी स्त्रियों के साथ विहार किया करते हैं ।

अणिमा, महिमा एवं लघिमा आदि आठ सिद्धियों को प्राप्त करने वाले महात्मागण सिद्ध कहे जाते हैं । **'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः'**—इत्यमरः । 'सिद्ध' देवयोनियाँ कही जाती हैं ॥ २४ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'महासमागमन' नामक प्रथम अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी व्याख्या पूर्ण हुई ॥ १ ॥**



## समीक्षात्मक टिप्पणी

### वास्तु के प्रकार (श्लोक ४-५)

वास्तु के अन्तर्गत जिन विषयों का अध्ययन अभिप्रेत है, उनका उल्लेख अन्य वास्तु ग्रन्थों में भी प्राप्त होता है । उनमें से कुछ उल्लेखनीय प्रसङ्ग इस प्रकार हैं—

(१) **मानसार** के अनुसार पृथिवी, भवन (= हर्म्य), यान एवं पर्यङ्क (आसन) 'वस्तु' अथवा 'वास्तु' शब्द से अभिहित किए जाते हैं—

**तैतिलाश्च नराश्चैव यस्मिन्यस्मिन् परिस्थिताः ।**
**तद्वस्तु सूरिभिः प्रोक्तं तथा वै वक्ष्यतेऽधुना ॥**
**धराहर्म्यादि यानं च पर्यङ्कादि चतुर्विधम् ।**
**धरा प्रधानवस्तु स्यात्तत्तज्जातिषु सर्वशः ॥** (३.१-२)

(२) **मयमत** के अनुसार 'वास्तु' के भेद इस प्रकार हैं—

**अमर्त्याश्चैव मर्त्याश्च यत्र यत्र वसन्ति हि ।**
**तद् वस्त्विति मतं तज्ज्ञैस्तद्भेदं च वदाम्यहम् ॥**
**भूमिप्रासादयानानि शयनं च चतुर्विधम् ।**
**भूरेव मुख्यवस्तु स्यात्तत्र जातानि यानि हि ॥**
**प्रासादादीनि वास्तूनि वस्तुत्वाद् वस्तुसंश्रयात् ।**
**वस्तून्येव हि तान्येव प्रोक्तान्यस्मिन् पुरातनैः ॥** (२.१-३)

अमर (= देव) एवं मरणधर्मा (मनुष्य) जहाँ-जहाँ निवास करते हैं, विद्वज्जन उसे 'वस्तु' (वास्तु) शब्द से अभिहित करते हैं । उन निवासस्थलों के भेदों का मैं (मय ऋषि) वर्णन करता हूँ । वास्तु चार प्रकार के होते हैं—भूमि, प्रासाद (देवालय), यान एवं शयन । इनमें प्रधान वास्तु भूमि ही है क्योंकि शेष (प्रासाद, यान एवं शयन) इसी से उत्पन्न होते हैं । प्रासाद आदि वास्तु प्रधान वस्तु (= वास्तु) भूमि से उत्पन्न होने से एवं उस पर आश्रित होने के कारण 'वास्तु' ही हैं । इसी कारण प्राचीन आचार्यो ने इन्हें 'वास्तु' अभिधान प्रदान किया है ।

(३) **विश्वकर्मा वास्तुशास्त्र के अनुसार** देवों, मनुष्यों एवं हाथी आदि पशुओं की निवास भूमि एवं भवन निर्माण में प्रयुक्त इष्टका (= ईंट, पत्थर) तथा शिला आदि वास्तु पद से अभिहित हैं—

**देवतानां नराणां च गजगोवाजिनामपि ।**
**निवासभूमिश्शिल्पज्ञैर्वास्तुसंज्ञमितीर्यते ॥ १ ॥**
... ... ... ... ... ... ... ... ... ... ..
**इष्टिका च शिला दारुरयःकीलादयोऽप्यमी ।**
**वास्तुकर्मणि चान्यत्र वास्तुसंज्ञमुदीरितम् ॥ ६१ ॥**

(विश्वकर्मवास्तुशास्त्रम्-७)

इनके अतिरिक्त (२.३२-४०) वास्तु के शिल्पगत भेदों में ग्राम, पुरी, खेट, कर्वट, दुर्ग, प्रासाद, हर्म्य, न्यायशाला, सभा, कोशागार, अन्तःपुर, शस्त्रागार, क्रीडागृह, तोरण, मञ्जिक, अधिष्ठान, उपपीठ, गोपुर, सङ्कीर्णभवन, पताका, पारिभद्रक, चारों वर्णों के गृह, वेदिका, पोतिका, स्तम्भ, मण्डप, विमान एवं प्राकार आदि का वर्णन प्राप्त होता है ।



# अथ द्वितीयोऽध्यायः

## * विश्वकर्मणः पुत्रसंवादः *

## (The Conversation Between Viśwakarmā and his Sons)

वास्तुकलाप्रवर्तनम्

**अथ पृष्ठे हिमगिरेः शशाङ्कशुचिरोचिषि ।**
**सिद्धामरवधूभुक्तमणिमञ्जुगुहागृहे ॥ १ ॥**

ब्रह्मनियोगानुष्ठानाय हिमालयं गतस्य विश्वकर्मणः स्वपुत्रस्मरणम्

**विस्तीर्णासनमासीनं सर्वज्ञमथ संस्मृताः ।**
**आययुर्विश्वकर्माणं चत्वारो मानसाः सुताः ॥ २ ॥**

**भगवान् विश्वकर्मा के समक्ष उनके मानस पुत्रों का आगमन**—सिद्धों एवं देवाङ्गनाओं से भुक्त मणिमय तथा मनोरम गुहा गृहों वाले व चन्द्रमा की स्वच्छ ज्योत्स्ना से मण्डित हिम-शिखर पर विस्तीर्ण आसन पर बैठे हुए सर्वज्ञ भगवान् विश्वकर्मा के पास उनके चारों मानस-पुत्र उनके द्वारा स्मरण करने पर उपस्थित हुए ॥ १-२ ॥

स्मरणमात्रोपनतानां तेषां जयादीनां चतुर्णां मानसानां पुत्राणां पितुः पादाभिवन्दनम्

**जयो विजयसिद्धार्थौ चतुर्थश्चापराजितः ।**
**तमुपगम्य शिरसा नेमुः प्राञ्जलयो मुनिम् ॥ ३ ॥**

विश्वकर्मा के जय, विजय, सिद्धार्थ तथा अपराजित नामक (चारों मानस-पुत्रों) ने आकर विश्वकर्मा को बद्धाञ्जलि होकर शिर से प्रणाम किया ॥ ३ ॥

तेभ्यो ब्रह्मनियोगकथनम्

**तानुवाच मुनिर्वत्सा विदितं वो यथा पुरा ।**
**वास्तु ब्रह्मा ससर्जादौ विश्वमप्यखिलं तथा ॥ ४ ॥**
**धर्म्यं कर्म तदा स्वेष्टप्राप्त्यै लोकावनानि च ।**
**व्यवस्थाप्य चकारैष लोकपालस्य कल्पनाम् ॥ ५ ॥**
**अहमप्यमुना विश्वनाथेनाम्बुजजन्मना ।**

**लोकानां सन्निवासार्थमादिष्टोऽस्मि स्वयम्भुवा ॥ ६ ॥**

विश्वकर्मा ने अपने पुत्रों को सम्बोधित कर कहा—हे पुत्रों ! यह आप जानते हैं कि प्राचीनकाल में विधाता ब्रह्मा जी ने इस विश्व की सृष्टि के पूर्व वास्तु (देवता) की सृष्टि की थी । अत: धर्म, कर्म और श्रेष्ठता की प्राप्ति के लिए एवं लोक-रक्षण के लिए व्यवस्था करके उन्होंने लोकपालों की कल्पना की (अर्थात् बिना सुनियोजित समाज के देश में शुभ कार्य नहीं हो सकते, और समाज एवं देश का सुनियोजन अथवा संरक्षण भी राजा के बिना नहीं हो सकता) । मैं (= विश्वकर्मा) भी विश्वनाथ कमल-भू ब्रह्मा जी के द्वारा लोकों के संनिवासार्थ आदिष्ट किया गया हूँ ॥ ४-६ ॥

**रम्याणि नगरोद्यानसभास्थानान्यथो मया ।**
**सुरासुरोरगादीनां निर्मितान्यात्मबुद्धितः ॥ ७ ॥**
**गत्वोर्वी वैन्यनृपतेर्वत्सा: प्रियचिकीर्षया ।**
**नगरग्रामखेटादीन् करिष्यामि पृथक् पृथक् ॥ ८ ॥**

मैंने अपनी बुद्धि से अभी तक (तीनों लोकों में) सुरों, असुरों एवं नागों के मनोहर नगर, उद्यान तथा सभा स्थान आदि की स्थापना की है । अब मैं भूतल पर मृत्युलोक में जाकर वेन के पुत्र महाराजा पृथु की प्रिय चिकीर्षा (= अभिलाषा) की पूर्ति के लिए हे पुत्रों! वहाँ पर नगर, ग्राम, खेट आदि (बस्तियों) को अलग-अलग बनाऊँगा ॥ ७-८ ॥

**स्वसाहाय्यार्थे तत्तत्स्थानादिविनिवेशनाय तेषां विश्वकर्मणा नियोजनं च**

**कार्ये त्वमस्मिन् सकले मम विश्वसृजार्पिते ।**
**सम्यक्साहायकैर्भाव्यं भवद्भिरिति नः स्थितम् ॥ ९ ॥**
**यतस्त्रिभुवनालोकप्रद्योतस्याब्जिनीपतेः ।**
**सहायतां तमश्छेदे कलयन्ति मरीचयः ॥ १० ॥**

**अपनी सहायता का विश्वकर्मा का वचन**—विश्वस्रष्टा ब्रह्मा के द्वारा आदिष्ट एवं अर्पित मेरे इस सम्पूर्ण कार्य में आप लोग भी सहायता करोगे, इसीलिये आप लोगों को यहाँ मैंने स्मरण किया है । जिस प्रकार से भुवन-भास्कर कमलिनी-वल्लभ भगवान् सूर्य की, अन्धकारापनयन में उनकी मरीचियाँ सहायता करती हैं, उसी प्रकार आप लोग भी मेरी सहायता कीजिए ॥ ९-१० ॥

**स्वयं करिष्येऽहमथो निवासाय पृथोः पुरीम् ।**
**विचित्रनगरग्रामखेटामतिमनोहराम् ॥ ११ ॥**
**भवन्तः पुनरागत्य चत्वारोऽपि चतुर्दिशम् ।**

तांस्तान् निवेशान् कुर्वन्तु पृथग्जनकृताश्रयान् ॥ १२ ॥
अन्तरेष्वध्वपाथोधिशैलानां सरितां तथा ।
विधातव्यानि दुर्गाणि नृपाणां भयशान्तये ॥ १३ ॥
वर्णप्रकृतिवेश्मानि संस्थानानि च लक्ष्मभिः ।
विधेयानि प्रतिग्रामं प्रतिभूः प्रतिपत्तनम् ॥ १४ ॥

**राजा पृथु के लिए वास्तु रचना का आदेश**—महाराज पृथु के निवासार्थ, चित्र-विचित्र नगरों तथा सामान्य प्रजा के रहने के लिए ग्रामों और खेटों से अति मनोहर, उनकी राजधानी का निर्माण मैं स्वयं करूँगा और आप लोगों के लिए यह मेरा आदेश है कि आप लोग एक-एक करके चारों दिशाओं में जाकर उन-उन आवश्यक जन निवासों के अलग-अलग निवेश भवनों को प्रस्तुत कीजिए। साथ ही साथ आप मार्गों, समुद्रों, पर्वतों और सरिताओं के बीच-बीच अन्तरावकाश पर राजाओं के भय शमनार्थ दुर्गों की स्थापना कीजिए। इसके अतिरिक्त विभिन्न वर्णोचित एवं उनकी प्रकृति के अनुकूल तत्तदुचित संस्थान एवं चिह्नपुर:सर प्रतिग्राम, प्रतिनगर तथा प्रतिपत्तन में वर्णाश्रम-संस्थान-विभाग (अर्थात् ब्राह्मणादि वर्णों के अनुकूल गृहों का) सम्पादन कीजिए ॥ ११-१४ ॥

तानित्थमात्मतनयानभिधाय सम्यक्
सारार्थभूतमपरिस्फुटतोज्झितं च ।
स्थानार्पितोरुभरनिर्वृतचित्तवृत्ति-
स्तूष्णीं प्रभासतनयो नयविज्जगाम ॥ १५ ॥

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचितसमराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे विश्वकर्मणः पुत्रसंवादो नाम द्वितीयोऽध्यायः ॥ २ ॥**

...

इस प्रकार अपने उन पुत्रों से सारगर्भित एवं प्रत्यक्ष वाणी से अपना मन्तव्य प्रगट कर और अपने सुयोग्य पुत्रों पर इस गौरवशाली सृष्टि के भार के समर्पण से स्वयं सन्तुष्ट होकर नीति के ज्ञाता प्रभास पुत्र (भगवान् विश्वकर्मा) प्रसन्न होकर चले गये ॥ १५ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचितसमराङ्गणसूत्रधार-अपरनाम वास्तुशास्त्र के 'विश्वकर्मा के पुत्रों के संवाद' नामक द्वितीय अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ २ ॥**



# अथ तृतीयोऽध्यायः

## * वास्तुविषयकः प्रश्नः *

## (Questions Related to Vāstu)

**अथ तेषु जयो नाम वाक्यं तद् विश्वकर्मणः ।**
**श्रुत्वा कृताञ्जलिः प्राह स्निग्धगम्भीरया गिरा ॥ १ ॥**
**ज्ञानैकनिधिरप्यस्मान् यत् सहायतया किल ।**
**वृणोषि तेन न वयमात्मानं बहु मन्महे ॥ २ ॥**

**मानस पुत्रों की जिज्ञासा**—इसके बाद उन चारों मानस-पुत्रों में जय नामक पुत्र अपने पिता भगवान् विश्वकर्मा के उस वाक्य (अर्थात् स्थानादि-निवेशन-की योजना) को सुनकर हाथ जोड़ कर स्निग्ध एवं गम्भीर वाणी से कहा—हे प्रभो! आप जैसे ज्ञान के सागर यदि हम जैसे अज्ञानी लोगों को सहायता के लिए वरण कर रहे हैं, तो यह हमारे लिए वास्तव में सौभाग्य की बात है, और हमारे अत्यन्त सम्मान की बात है ॥ १-२ ॥

**तदिदानीं हितार्थे नः प्रजानामपि च प्रभो ।**
**अप्रमेयप्रभावस्त्वं सर्वमाख्यातुमर्हसि ॥ ३ ॥**

इसलिए इस समय हम लोगों के और प्रजाओं के हित के लिए, हे प्रभो ! आप ऐसे अप्रमेय एवं प्रभावशाली सब कुछ बता सकते हैं (अर्थात् हमारे द्वारा किए गए प्रश्नों का उत्तर दे सकते हैं, अथवा इस विषय में आप हमारी जिज्ञासा का शमन कर सकते हैं) ॥ ३ ॥

**अथ शास्त्रप्रमेयभूतान् वास्त्वाश्रयानन्यांश्च विविधान्**
**अर्थानधिकृत्य जयस्य प्रश्नः**

**पूर्वमेकार्णवे जाते जगति प्रलयं गते ।**
**महाभूतामरपुरीज्योतिषां कथमुद्भवः ॥ ४ ॥**

**वास्तु सम्बन्धी जय के प्रश्न**—प्राचीन काल में जब समस्त जगत् एकार्णव

समुद्र अर्थात् सर्वत्र जल ही जल व्याप्त था और पूर्ण प्रलय उपस्थित था, तब पृथिवी आदि पञ्च महाभूत तथा देवपुरी और नक्षत्रों का उद्भव कैसे हुआ ॥ ४ ॥

**किमाकारा किमाधारा किं प्रमाणा च मेदिनी ।**
**विस्तृतिः परिधिश्चास्या बाहुल्यमपि कीदृशम् ॥ ५ ॥**
**उच्छ्रायव्यासदीर्घत्वैः कैः केऽस्यां कुलभूभृतः ।**
**कति ख्यातानि वर्षाणि द्वीपा नद्योऽब्धयस्तथा ॥ ६ ॥**

इस पृथ्वी का आकार क्या है? तथा आधार क्या है? और प्रमाण क्या कहा गया है? इस पृथ्वी का विस्तार कितना है? इसकी परिधि कितनी है और इसका क्षेत्रफल कितना है? इस पृथ्वी पर कितनी ऊँचाई, चौड़ाई और लम्बाई वाले कौन-कौन से कुल पर्वत (Hereditary mountain) है? कितने वर्ष (देश) विख्यात हैं? कितने द्वीप, नदियाँ और सागर कितने हैं? ॥ ५-६ ॥

**विमर्श**—महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥ (देवीपुराणम्)

१. महेन्द्र, २. मलय, ३. सह्य, ४. शुक्तिमान्, ५. ऋक्षपर्वत, ६. विन्ध्य एवं ७. पारियात्र—ये सात कुल पर्वत कहे गए हैं ॥ ५-६ ॥

**काः सूर्येन्दुग्रहर्क्षादिगतयश्च पृथक् पृथक् ।**
**भूमेरुपरि किं चैषामन्योन्यं प्रोक्तमन्तरम् ॥ ७ ॥**

इस पृथ्वी के ऊपर (अर्थात् अन्तरिक्ष में) सूर्य, चन्द्रमा, ग्रह, नक्षत्र आदि की अपनी-अपनी अलग-अलग घूमने की गतियाँ कैसी हैं? और इनका पारस्परिक अन्तर कितना है? ॥ ७ ॥

**किमाधारं दिवि ज्योतिश्चक्रं भ्रमयते च कः ।**
**लोके कथं महाभूतान्यूर्ध्वाधो बिभ्रति स्थितिम् ॥ ८ ॥**

अन्तरिक्ष में इस ज्योतिश्चक्र का आधार क्या है? और कौन इस ज्योतिष् चक्र को घुमाता रहता है? इस विश्व में पञ्चमहाभूत किस प्रकार नीचे और ऊपर अपनी स्थिति को धारण किये हुए हैं? ॥ ८ ॥

**युगधर्मव्यवस्थाभिः काश्चादौ लोकवृत्तयः ।**
**कश्चादिमस्ततो राज्ञां ग्रहाणां वर्णिनां कथम् ॥ ९ ॥**

युगधर्म की व्यवस्थाओं के द्वारा आदि काल में कौन-कौन सी लोकवृत्तियाँ अथवा लोकाचार थे, तदनन्तर इस पृथ्वी पर कौन प्रथम राजा हुआ? तथा पहला

ग्रह कौन सा था और कौन पहला वर्णी (चारो जातियों का व्यक्ति) था? ॥ ९ ॥

**कति देशाः कति भुवः पृथक्त्वेन निरूपिताः ।**
**कार्यः क्व च कथं सन्निवेशो जनपदाश्रयः ॥ १० ॥**

पृथ्वी पर कितने देश हैं? और पृथक् रूप से कितने प्रकार की भूमियाँ निरूपित की गई हैं? किस प्रकार से और कहाँ जनपदाश्रय (अर्थात् जनपद सम्बन्धी) सन्निवेश किया गया है? ॥ १० ॥

**व्यक्तचिह्नैः स्वनस्पर्शगन्धवर्णरसादिभिः ।**
**काः शस्ता निन्दिताः काश्च पुराणामपि भूमयः ॥ ११ ॥**

कौन-कौन सी पुरोचित भूमियाँ (auspicious lands of the cities) शब्द, स्पर्श, गन्ध, वर्ण (colour) और रस आदि के अभिव्यक्ति के चिह्नों के अनुसार भूमि प्रशस्त अथवा अप्रशस्त कही गई हैं? ॥ ११ ॥

**कार्यं केन विधानेन भूभृत्पुरनिवेशनम् ।**
**किं फलं सुनिविष्टेऽस्मिन् दुर्निविष्टे च किं पुनः ॥ १२ ॥**

राजधानी अथवा नगर का निवेश (town planning) किस विधान से करना चाहिये? और नगर के सुन्दर निवेश (well organised plan) का क्या फल है? एवं उसके दुष्ट निवेश (= असम्बद्ध निर्माण) का क्या कुपरिणाम होता है? ॥ १२ ॥

**कतिप्रकारं दुर्गं च दुर्गकर्मक्रमश्च कः ।**
**किमग्रपुरसंस्थानमनिन्द्यं किं च निन्दितम् ॥ १३ ॥**
**कश्चात्रानुक्रमविधिः प्रमाणैरुपपादितः ।**
**प्राकारगोपुराट्टालपरिखावप्रकर्म च ॥ १४ ॥**

दुर्ग कितने प्रकार के होते हैं? तथा दुर्ग रचना का क्रम विधान क्या है? राजधानी (नगर) का कौन सा संस्थान (= भाग) निन्दित है और कौन सा भाग निन्दित नहीं है । राजधानी के निवेश में प्रमाण सहित कौन सी अनुक्रमविधि बताई गई है? और उसका प्राकार कैसा होना चाहिए? उस नगर के गोपुर, अट्टालिका, परिखा तथा वप्र आदि का किस प्रकार का कर्म विहित है? ॥ १३-१४ ॥

**तमङ्गनिर्गमद्वारप्रतोल्यट्टालकादिभिः ।**
**कीदृशः प्रविभागश्च रथ्याचत्वरवर्त्मभिः ॥ १५ ॥**
**भूमिप्रमाणसंस्थानं सीमा च क्षेत्रदिक्पथैः ।**
**नगरग्रामखेटानां निवेशाः स्युः पृथक् पृथक् ॥ १६ ॥**

वहाँ प्रधान नगरद्वार किस प्रकार का विहित होता है। प्रतोली और अट्टालिका आदि के द्वारा एवं रथ्या, चत्वर तथा मार्गों के द्वारा नगर का विभाजन कैसा होना चाहिए? भूमि के किस प्रमाण और उसके संस्थान तथा क्षेत्रीय रास्तों (दिक्पथ) के किस सीमा-विभाग से नगर, ग्राम और खेट (= छोटे गाँव) के निवेश पृथक्-पृथक् कहे गए हैं? ॥ १५-१६ ॥

**पुरस्याभ्यन्तरे पूर्वं कैर्द्रव्यावयवक्रमैः ।**
**कस्मिन् स्थाने कथं कार्यं शक्रध्वजनिवेशनम् ॥ १७ ॥**
**प्रतिसंवत्सरं तस्य नियुक्तस्य कथं पुनः ।**
**हिताय नृपलोकानां विधातव्यो महोत्सवः ॥ १८ ॥**

नगर के अन्दर पहले किन-किन द्रव्यों से और बाद में उसके भिन्न-भिन्न किन-किन अवयवक्रमों से तथा किस स्थान पर कैसे 'इन्द्र-ध्वज' का निवेश करना चाहिये और उस प्रतिष्ठित इन्द्र-ध्वज का प्रतिवर्ष किस प्रकार से राजाओं एवं प्रजाओं के हित के लिए महोत्सव करना चाहिए? ॥ १७-१८ ॥

**गृहेषु केषु केष्वत्र कासु कासु ककुप्सु च ।**
**भागैर्बाह्यान्तरै कैः कैः कार्याः काः काश्च देवताः ॥ १९ ॥**

(नगर-निवेश में) किन-किन गृहों में और किन-किन दिशाओं में तथा भीतर और बाहर के विभिन्न भागों पर कौन-कौन से देवों एवं देवियों की स्थापना करनी चाहिए? ॥ १९ ॥

**कैः कैर्यानपरीवारवर्णरूपविभूषणैः ।**
**कार्याः कैः कैः सुरा वस्त्रवयोवेषायुधध्वजैः ॥ २० ॥**

उन देवों के यान (वाहन), परिवार, वर्ण, रूप, आभूषण, वस्त्र, वय (= उम्र), वेष, आयुध एवं झण्डे आदि का क्या विधान है तथा वे किन-किन उपलक्षण (= चिह्नों) से युक्त होने चाहिए। देव प्रतिमाओं का शिल्प-शास्त्र में किस प्रकार का विधान है? ॥ २० ॥

**प्रमाणमितिसंस्थानसंख्यानोच्छ्रयलक्ष्मभिः ।**
**प्रासादाः कस्य के वा स्युः सुरराजद्विजातिषु ॥ २१ ॥**
**प्राकारपरिखागुप्तं पुरे स्याद् गोपुरं क्व च ।**
**युग्ममध्याम्बुवेश्मानि क्व च स्युः क्व महानसम् ॥ २२ ॥**

देवों, राजाओं और द्विजातियों के घर कैसे होने चाहिए? और उनका प्रमाण, मिति (मान) और संस्थान कैसा हो? संख्यान, उच्छ्रय (ऊँचाई) आदि किन

उपलक्षणों से युक्त हो अर्थात् उनके अपने-अपने प्रासाद कैसे होने चाहिए? नगर में प्राकार और परिखा से सुरक्षित गोपुर कहाँ होना चाहिए? और कहाँ पर क्रीडा-गृह तथा जल संस्थान होने चाहिए और कहाँ पर महानस (रसोई) होनी चाहिए? ॥ २१-२२ ॥

**कोष्ठागारायुधस्थानभाण्डागारनिवेशनैः ।**
**व्यायामनृत्तसङ्गीतस्नानधारागृहादिभिः ॥ २३ ॥**
**शय्यावासगृहप्रेक्षावेश्मादर्शगृहैः पृथक् ।**
**क्रीडादोलालयारिष्टगृहान्तःपुरवेश्मभिः ॥ २४ ॥**
**विटङ्कभ्रमनिर्यूहकक्षासंयमनादिभिः ।**
**अशोकवनिकाभिश्च लतामण्डपवेश्मभिः ॥ २५ ॥**
**वापीभिर्दारुगिरिभिश्चित्राभिः पुष्पवीथिभिः ।**
**एतैर्विशेषैरन्यैश्च विचित्रैर्विपिनाश्रयैः ॥ २६ ॥**
**मानोन्मानक्रियायामद्रव्याकृतिविनिर्मितः ।**
**निकेतननिवेशः स्याद् राज्ञां भागाश्रितः कथम् ॥ २७ ॥**

राजगृह की संरचना में मान, उन्मान, क्रिया, आयाम, द्रव्य, आकृति की रचना में किस-किस भाग में और कहाँ-कहाँ पर कोष्ठागार, आयुधस्थान, भाण्डागार, व्यायामगृह, नृत्तगृह, सङ्गीतगृह, स्नानगृह, धारागृह, शय्यागृह, आवासगृह, प्रेक्षा वेश्म, दर्पणगृह, क्रीडागृह, दोलागृह, अरिष्टगृह, अन्तःपुर आदि होने चाहिए । अशोकवनिकाएँ, लता मण्डप वेश्म, विटङ्क (= कपोतपाली), भ्रम, निर्यूह, कक्षा (प्रकोष्ठ), संयमन (चतुःशाल) आदि, वापियाँ, दारुगिरि, चित्र विचित्र पुष्पवीथियाँ, अनेकविध उद्यान आदि-आदि के स्थान कहाँ-कहाँ विनिवेश्य हैं? ॥ २३-२७ ॥

**पुरोधःसैन्यभूश्रेष्ठदैवचिन्तकमन्त्रिणाम् ।**
**कं कं च भागं प्राप्य स्युर्निवेशा नृपवेश्मनः ॥ २८ ॥**

विशाल राज हर्म्य के किस-किस भाग पर पुरोहित, सेनापति, ब्राह्मण, दैवज्ञ तथा मन्त्रियों के भवन होने चाहिए? ॥ २८ ॥

**पुरे स्युर्दिक्षु भागेषु पदभागेषु केषु च ।**
**विप्रराजन्यविट्शूद्रास्तज्जैरन्तरजैः समम् ॥ २९ ॥**
**तथा कृषितुलाशिल्पकलापण्योपजीविनः ।**
**हिंसाश्रिताश्च पुरुषा निवेश्याः स्युः कथं क्व च ॥ ३० ॥**

निवेशाः कीदृशाश्चैषां कियन्तो वा भवन्ति ते ।
शस्यन्ते केन वा तेषां कैः प्रवेशजलभ्रमैः ॥ ३१ ॥
धिष्ण्यमाद्यं कतिविधं द्रव्याण्याद्यानि कानि वा ।
हेतुरेषां च सर्वेषां स्याच्च कीदृगनुक्रमः ॥ ३२ ॥
भजन्ते योगमन्योन्यं कानि द्रव्याणि कैः सह ।
कानि योगं न गच्छन्ति कैर्वा कः क्व वसेत् पुमान् ॥ ३३ ॥

नगर की किन-किन दिशाओं में तथा उसके किन-किन भागों में और (वास्तुचक्र के) पदभागों पर ब्राह्मण, क्षत्रिय, वैश्य, शूद्र एवं उनसे उत्पन्न अनुलोम या प्रतिलोम सन्तानों के लिए, कृषिजीवी, तुलाजीवी, शिल्पजीवी, कलाजीवी, पण्योपजीवी तथा व्याधादि एवं हिंसाश्रित होकर जीवन यापन करने वाले पुरुषों के भवन बनने चाहिए? कितने प्रकार के कैसे-कैसे भवन होने चाहिए? और उनमें प्रवेशों और जलभ्रमों के द्वारा कौन से भवन प्रशस्त माने गये हैं? प्रथम स्थान कितने प्रकार का होता है? और कौन-कौन प्रथम द्रव्य हैं और इन सब का हेतु क्या है और उनका कैसे अनुक्रम होता है? अन्य द्रव्यों के साथ कौन-कौन द्रव्य परस्पर योग रखते हैं? और कौन-कौन से द्रव्य परस्पर योग नहीं रखते हैं? किन-किन योगों में कौन मनुष्य कहाँ पर बसें? ॥ २९-३३ ॥

इष्टकाकर्म किं चेष्टं कीर्तिता कतिधा च भूः ।
परिकर्मक्रमस्तासां वह्न्यम्बुपवनैश्च कः ॥ ३४ ॥

इष्टका कर्म (ईंटों के बनाने की कारीगरी) कैसी होनी चाहिए? और कितने प्रकार की भूमि बताई गई है (जिनसे इष्टकाएँ निर्मेय होती हैं) और उनका अग्नि, जल और वायु से किस प्रकार शोधन तथा परीक्षण आदि (परिकर्म-क्रम) होना चाहिए? ॥ ३४ ॥

गुरुवर्णिध्वजोर्वीशतद्भृत्यप्रतिमा(: ?) पुराम् ।
वृक्षाः के के प्रशस्ताः स्युर्गृहार्थे के च गर्हिताः ॥ ३५ ॥
तच्छेदस्रावसम्भूतं शब्ददिक्पातगर्भजम् ।
विज्ञायते कथं कर्तृकारकादिशुभाशुभम् ॥ ३६ ॥
प्रमाणं तक्षणच्छेदैः शोधितानां कथं भवेत् ।
आहृत्य स्थापनं पूर्वं दारूणां स्थानके क्व च ॥ ३७ ॥

(ब्राह्मण, क्षत्रिय, वैश्य एवं शूद्र) चारों वर्णों का भवन-निर्माण तथा इन्द्र-ध्वज की रचना एवं राजाओं के महल, देवमन्दिरों एवं देव प्रतिमाओं के निर्माण में कौन से प्रशस्त वृक्ष हैं और कौन से गर्हित वृक्ष बताये गये हैं? उन वृक्षों के छेदन

जन्य स्राव से उत्थित तथा उनके शब्द तथा दिक्पात (अर्थात् किस दिशा में गिरे) तथा उनके गर्भ (मण्डल) में रहने वाले जीव-जन्तु आदि से प्राप्त शकुनों अथवा निमित्तों से कर्ता (स्थपति) तथा कारक (भवनपति) के शुभ एवं अशुभ कैसे फल माने जाते हैं? वृक्षों को काटने से उन परीक्षित वृक्षों का प्रमाण कैसे माना जाता है, उन वृक्षों को जङ्गल से लाकर पहिले उनकी स्थापना कैसे होती है? और किस स्थान पर एवं कहाँ पर रखना चाहिए ॥ ३५-३७ ॥

**सामान्यतोऽखिलानां काः काश्च जातेर्विशेषतः ।**
**प्रशस्तैर्लक्ष्मभिर्युक्ता भूमयः परिकीर्तिताः ॥ ३८ ॥**

सभी वर्णों एवं जातियों के अनुरूप सामान्य रूप से कौन-कौन सी लक्षण वाली भूमियाँ होती हैं तथा उनकी कौन-कौन सी जातियाँ कही गई हैं? ॥ ३८ ॥

**शल्योद्धारविधिः कीदृक् कीदृशं भूमिकर्म च ।**
**दिग्ग्रहः सूत्रणं चाधिवासनं च कथं भवेत् ॥ ३९ ॥**
**प्रमाणं मूलपादस्य शिलान्यासे च को विधिः ।**
**विभज्यते कथं वेश्म शालालिन्दविभाजनैः ॥ ४० ॥**
**मानानि कानि भित्तीनां पीठानामुच्छ्रयाश्च के ।**
**कथं तानि विकल्प्यानि वर्णानां मेखलादिभिः ॥ ४१ ॥**
**समस्तकानां स्तम्भानां द्वारस्तम्भासनैः सह ।**
**नागवीथ्युपधानानां समं कण्ठविनिर्गमैः ॥ ४२ ॥**
**जयन्तीसंग्रहतुलाकार्याणां वास्तुनोऽपि च ।**
**कीदृशं फलकानां च प्रमाणं परिकीर्तितम् ॥ ४३ ॥**
**स्वमानात् सर्ववर्णानां तलोच्छ्रायास्तु कीदृशाः ।**
**का गवाक्षकपोतालिवेदिकाजालकक्रियाः ॥ ४४ ॥**

शल्योद्धार-विधि (= भूमि-शोधन) की विधि कैसी होती है? भूमि-कर्म कैसा होता है? दिग्ग्रह (दिशा-ज्ञान), सूत्रण तथा अधिवासन कैसा होता है? मूल-पाद अर्थात् केन्द्रीय स्तम्भ का प्रमाण क्या है? शिलान्यास की विधि क्या है? शाला तथा अलिन्द (बार्जा) आदि विभाजनों से भवन का विभाग किस प्रकार से पृथक् किया जाता है? भित्तियों के मान क्या हैं? पीठों की ऊँचाइयाँ क्या हैं? और (ब्राह्मणों, क्षत्रियों, वैश्यों एवं शूद्रों आदि के पृथक्-पृथक्) किस प्रकार से वर्णानुरूप भवन के विकल्प हैं अर्थात् घटाव और बढ़ाव कर किस प्रकार किये जाते हैं? द्वार के स्तम्भों और पट्टिकाओं के साथ घर के सभी स्तम्भों में सभी के

प्रमाण क्या बताये गये हैं? इसी प्रकार कण्ठ-विनिर्गमों के साथ नागवीथी और उपधानों के प्रमाण कैसे बताये गए हैं? जयन्ती, संग्रह तथा तुला के कार्यों के और वास्तु के तथा फलकों के कैसे-कैसे प्रमाण परिकीर्तित हैं? और गवाक्ष, कपोताली (= कबूतर के बैठने का छत्ता), वेदिका तथा जालक की क्रियाएँ कितनी होती है और कौन-कौन सी हैं? ॥ ३९-४४ ॥

**स्थूणा निसृष्टिकोत्सूका मृगा(ल्यो?)ल्युपतुलास्तथा ।**
**सान्तः प्राणिशिरोवंशाः किंप्रमाणाः प्रकीर्तिताः ॥ ४५ ॥**

स्थूणा (खूँटा), निसृष्टिका, उत्सूका, मृगाली तथा उपतुला एवं प्राणिसहित शिरोवंशों के कौन-कौन प्रमाण कीर्तित किये गये हैं? ॥ ४५ ॥

**छाद्योदयाः कियन्तः स्युर्वृत्तच्छाद्यक्रमश्च कः ।**
**त्र्यस्त्राणां खण्डवृत्तानां लुपानां च क्रियाः कथम् ॥ ४६ ॥**
**सीमालिन्दशिर(स्त्वा?)स्तासां कीदृशी चावलम्बना ।**
**कतिप्रकाराः प्रासादशिरसां च विकल्पनाः ॥ ४७ ॥**
**यच्चान्यदेवमादि स्यात् प्रासादभवनादिषु ।**
**द्रव्यकाष्ठकलासङ्गि प्रमाणं तस्य कीदृशम् ॥ ४८ ॥**

छाद्योदय (पाटने के ढङ्ग) कितने हैं? और गोल पाटन का क्रम क्या है? तिकोनी खण्डवृत्त लुपाओं (मेहराब) की क्रियाएँ कैसी होती हैं? और इन मेहराबों की सीमा, अलिन्द (= बार्जा या बरामदा) और शिखर का आधार क्या है? इसी प्रकार प्रासाद शिखरों की कितनी विकल्पनाएँ हैं? इसी प्रकार प्रासाद, भवन आदि में अन्य जो भी विशेष ज्ञातव्य हैं, उनके द्रव्य, काष्ठ और कला सम्बन्धी कैसे प्रमाण विहित कहे गए हैं? ॥ ४६-४८ ॥

**शालालिन्दप्रमाणानि चतुःशालेषु धामसु ।**
**ज्यायोमध्ययवीयस्सु मूषाभिः काष्ठकल्पना ॥ ४९ ॥**

उत्तम, मध्यम और अधम चतुःशाल भवनों में शाला (= भवन के कमरे) और अलिन्द के क्या प्रमाण हैं? तथा मूषाओं (मूषाकार झरोखों) के द्वारा काष्ठ कल्पना कैसी विहित होती है ॥ ४९ ॥

**एकद्वित्रिचतुःशालान्येषां संयोगतोऽपि च ।**
**कथं कति च वेश्मानि कल्प्यन्ते प्रविभागशः ॥ ५० ॥**

इसी प्रकार एकशाल, द्विशाल, त्रिशाल तथा चतुःशाल और इनके संयोग से पञ्चशालादि दशशालान्त किस प्रकार के और कितने भवन-भेद कल्पित होते हैं ॥५०॥

**कथं च षोडशचतुःषष्ट्येकाशीतयः शतम् ।**
**संविभागाः पदानां स्युः कथमत्रामरस्थितिः ॥ ५१ ॥**

पदों के षोडश (१६ पद-वास्तु), चतुःषष्टि (६४ पद-वास्तु), एकाशीति (८१ पद-वास्तु) तथा शत (१०० पद-वास्तु) के कैसे संविभाग होते हैं? और किस प्रकार से इन पदों पर वास्तु-देवों की स्थिति बताई गई है? ॥ ५१ ॥

**आद्यो नवपदो वास्तुरन्त्यः साहस्रिकः कथम् ।**
**अङ्गप्रत्यङ्गभागेषु केषु केषु क्व तस्थुषः ॥ ५२ ॥**
**कथमेते सुराः सर्वे वास्तोरस्य व्यवस्थिताः ।**
**एतद्वंशशिरश्चक्षुः कुक्षिहृन्मूर्धमर्मसु ॥ ५३ ॥**
**जायेत पीडा द्रव्येषु सन्निविष्टेषु कस्य का ।**

प्रथम नौ पद-वास्तु तथा अन्तिम सहस्र पद-वास्तु, किस प्रकार से बताया गया है? और किन-किन अङ्ग प्रत्यङ्ग भागों पर कहाँ-कहाँ पर वास्तु के देवता इन वास्तु पदों पर व्यवस्थित बताये गये हैं? अथच वास्तु पुरुष के वंश, शिर, चक्षु, कुक्षि, हृदय, मूर्धा एवं मर्मों पर किन-किन द्रव्यों के सन्निवेश (= बनाने) से किसकी कैसी पीड़ा बताई गई है? ॥ ५२-५४ ॥

**वास्त्वारम्भप्रवेशेषु यात्रायां स्थापनेषु च ॥ ५४ ॥**
**दूतस्वप्ननिमित्ताद्यैः कथं ज्ञेयं शुभाशुभम् ।**

वास्तु के आरम्भ, गृह-प्रवेश तथा यात्राओं में एवं गृहारम्भ स्थापनाओं में दूत, स्वप्न आदि निमित्तों के द्वारा किस प्रकार के शुभ शकुनों और अशुभ शकुनों का ज्ञान होता है? ॥ ५४-५५॥

**दारुक्रियासु चित्रेषु तथा लेप्यक्रियासु च ॥ ५५ ॥**
**योज्यं किं किमयोज्यं च किं भूपभवनादिषु ।**

राज-हर्म्य आदि में दारु-क्रियाओं (लकड़ी के कारीगरी), चित्रों और लेप्य-क्रियाओं के साथ-साथ योज्यायोज्य-व्यवस्था कैसी विहित है? अर्थात् भवन में कौन-कौन से चित्र नियोज्य हैं और कौन-कौन से अप्रयोज्य हैं ॥ ५५-५६ ॥

**हस्तस्य लक्षणं मानसंज्ञा वै ज्ञायते कथम् ॥ ५६ ॥**
**किं हव्येष्वग्निलक्ष्म स्यात् किं च निर्युक्तलक्षणम् ।**
**अनुक्रमेण वर्णानां बलिकर्म च कीदृशम् ॥ ५७ ॥**
**विधेयं विधिना केन भवने च प्रवेशनम् ।**

**पतिते स्फुटिते जीर्णे प्लुष्टे वज्राशनिक्षते ॥ ५८ ॥**
**निमग्नभग्ननिर्भिन्नप्रशीर्णेषु च वास्तुषु ।**
**मधुवल्मीकसम्भूतौ प्रविरूढे च दारुणि ।**
**जायते किं फलं कुत्र प्रायश्चित्तेन को विधिः ॥ ५९ ॥**

हस्त का लक्षण क्या है और मान की संज्ञाएँ कितनी होती हैं? हव्य में अग्नि का चिह्न क्या है और निर्युक्त लक्षण क्या है? अथच वर्णानुक्रम से बलिकर्म कैसा विहित है? और किस विधि से भवन में प्रवेश करना चाहिए? इसी प्रकार पतित, स्फुटित, जीर्ण, प्लुष्ट (जले हुए), वज्र तथा अशनि (= बिजली) से क्षत एवं निमग्न, भग्न, निर्भिन्न तथा प्रशीर्ण भवनों एवं अन्य वास्तु में क्या-क्या फल बताया गया है? और क्या प्रायश्चित्त की विधि बताई गई है? इसी प्रकार लकड़ी के मधु (कीड़े) के लगने से और वल्मीक से खोखली हो जाने पर क्या फल होता है और उसके प्रायश्चित्त का कैसा विधान है? ॥ ५६-५९ ॥

**इत्येवमादिकमनेकविधं विधानं**
**वेश्मोपगं च पृथगाश्रयसम्भृतं च ।**
**अस्मास्वनल्पकरुणार्द्रितचित्तवृत्ति-**
**र्व्याख्यातुमर्हसि समस्तमनुक्रमेण ॥ ६० ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचितसमराङ्गणसूत्रधारापरनाम्नि-वास्तुशास्त्रे प्रश्नो नाम तृतीयोऽध्यायः ॥ ३ ॥**

...✿...

हे प्रभु! इस प्रकार के अनेकविध भवन-सम्बन्धी विधान तथा भवनेतर सम्भार हम लोगों पर अपनी महाकरुणा से आर्द्रित-चित्त-वृत्ति वाले आप क्रमशः समस्त प्रमेय (= वास्तु) का व्याख्यान करें । यह हम लोगों की प्रार्थना है ॥ ६० ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गणसूत्रधार-अपरनाम वास्तुशास्त्र के 'प्रश्न' नामक तृतीय अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ३ ॥**

...✿...

# अथ चतुर्थोऽध्यायः

## * महदादिसर्गः *

## (The Description of Creation)

जयस्येति समाकर्ण्य विश्वकर्मा च तद् वचः ।
जगाद गर्जदम्भोदध्वनिगम्भीरया गिरा ॥ १ ॥
साधु वत्स! त्वया सम्यक् प्रज्ञयातिविशुद्धया ।
प्रश्नोऽयमीरितो वास्तुविद्याब्जवनभास्करः ॥ २ ॥
स त्वं निधाय प्रश्नानां समुदायममुं हृदि ।
वदतो मेऽवधानेन शृणु यद् ब्रह्मणोदितम् ॥ ३ ॥

**महत् आदि सृष्टि वर्णन**—इस प्रकार अपने पुत्र जय के इन वचनों को सुनकर भगवान् विश्वकर्मा ने मेघ की ध्वनि के सदृश गर्जना युक्त गम्भीर वाणी से कहा—हे वत्स! आपने अपनी अत्यन्त विशुद्ध प्रज्ञा से जो इस प्रकार प्रश्न पूछे हैं वे वस्तुत: 'वास्तु' विद्यारूपी कमल को खिलाने के लिए भास्कर सदृश हैं । सूर्य के उदय होने से जिस प्रकार कमल के वन खिल जाते हैं उसी प्रकार वास्तु-शास्त्र की विषय वस्तु आपके प्रश्नों से अपने आप प्रत्यक्ष हो गयी है । इसलिये आप इन सभी प्रश्नों को अपने मन में रखकर मुझसे इनका उत्तर सुनिए जिसे पितामह ब्रह्मा ने मुझे बताया था ॥ १-३ ॥

### जयेन जिज्ञासितानामर्थानां यथासम्भवमनुक्रमेण विश्वकर्मणोपदेशः, तत्र प्रथमं महाप्रलयावस्थावर्णनम्

इदमासीद् युगान्ताग्निप्लुष्टं संवर्तकादिभिः ।
समुत्सृजद्भिरम्भांसि विश्वमेकार्णवीकृतम् ॥ ४ ॥

जय के द्वारा जिज्ञासित प्रश्नों के उत्तर में प्रथमत: महाप्रलय अवस्था का वर्णन करते हैं—यह समस्त संसार युगान्त अग्नि से निर्गर्भित था अर्थात् इस भूतल पर ऊष्मा विद्यमान थी । पुन: संवर्तक नामक मेघों के द्वारा मूसलाधार वृष्टि किये जाने पर यह पृथ्वी एकार्णवी अवस्था में अर्थात् जलमयी सृष्टि में

परिणत हो गई अर्थात् शनैः शनैः पृथ्वी बुझी और ठण्डी हो गई (Earth cooled down) ॥ ४ ॥

**विमर्श**—आधुनिक भूगर्भ शास्त्री भी यही कहते हैं कि 'Earth was a burnning ball' ।

**तमोभूते ततस्तस्मिन् भोगिपर्यङ्कमाश्रितः ।**
**हरिः सुष्वाप सलिले कृत्वोदरगतं जगत् ॥ ५ ॥**

पुनः समस्त विश्व जब तमसाच्छन्न था तो शेष शय्या पर समस्त जगत् को अपने में ही उदरस्थ करके भगवान् विष्णु सलिल में सो गये (क्षीराब्धिशयन—यह सृष्टि का तीसरा उपक्रम है जिसको गर्भावस्था कह सकते हैं) ॥ ५ ॥

**प्रलयावसाने ब्रह्मण आविर्भावः, सृष्ट्युपक्रमश्च**

**अथास्य नाभावम्भोजमभूत् तस्मिन्नजायत ।**
**सर्वज्ञानाश्रयः श्रीमांश्चतुर्वक्त्रः सुरेश्वरः ॥ ६ ॥**

**सृष्टि का उपक्रम**—अब विष्णु की नाभि से कमल उत्पन्न हुआ और इस कमल से सर्वज्ञानाश्रय श्रीमान् चतुरानन सुरेश्वर ब्रह्मा का जन्म हुआ (यह सृष्टि का चौथा उपक्रम हुआ जब प्राणियों की सृष्टि प्रारम्भ हुई) ॥ ६ ॥

**महदहङ्कारदीनां सृष्टिः**

**स कदाचिद् दधच्चेतः प्रजासृष्टिं प्रति प्रभुः ।**
**महान्तमसृजत् तत्र पूर्वं विश्वस्य हेतवे ॥ ७ ॥**

**महद् एवं अहङ्कार आदि की सृष्टि का वर्णन**—उन भगवान् ब्रह्मा ने किसी समय जब प्रजा की सृष्टि के लिए अपने मन में विचार किया तो इस विश्व की सृष्टि के कारणरूप 'महान्' की सर्वप्रथम सृष्टि की ॥ ७ ॥

**त्रिधाहङ्कृतमेतस्मान्मनोऽभूत् सात्त्विकादतः ।**
**राजसादपि चाक्षाणि तन्मात्राणि च तामसात् ॥ ८ ॥**

फिर महत् से तीन प्रकार के अहङ्कार की सृष्टि हुई । फिर उस महत् के सात्विक् विकार से मन तथा राजस विकार से इन्द्रियाँ और तामस विकार से तन्मात्राएँ उत्पन्न हुई ॥ ८ ॥

**महदादिभ्यः पञ्चमहाभूतानां स्वस्वगुणयुक्तानामाविर्भावः**

**तेभ्यः पञ्च महाभूतान्याविरासन्ननुक्रमात् ।**
**व्योमादीनि धरान्तानि स्वैः स्वैर्युक्तानि तैर्गुणैः ॥ ९ ॥**

**न तप्तं येषु येष्वम्भः प्रदेशेष्वर्करश्मिभिः ॥ २१ ॥**
**नीतं न वानिलैः शोषं तत्र तत्राब्धयोऽभवन् ।**

सृष्टि में जिन-जिन प्रदेशों में सूर्य की किरणों से जल तप्त नहीं हुआ और न वायु से ही वह सूख पाया वहाँ-वहाँ वह जल समुद्र के रूप में सृष्ट (= निष्पन्न) हो गया ॥ २१-२२ ॥

**महाम्भोवीचिसङ्घाता विक्षिप्ताश्चण्डमारुतैः ॥ २२ ॥**
**यत्र यत्रापुरैक्यं ते तत्र तत्राद्रयोऽभवन् ।**

प्रचण्ड वायु के द्वारा क्षोभ को प्राप्त प्रलयकालीन समुद्र (महाम्भोधि-विचिसङ्घात) की (बड़ी-बड़ी जलतरङ्गों के समूह) जहाँ जहाँ ऐक्य को प्राप्त हुए वहाँ-वहाँ वे पहाड़ों एवं पर्वतों में बदल गये ॥ २२-२३ ॥

**निश्चलत्वार्थमवनिश्चर्मवद् वितताथ तैः ॥ २३ ॥**
**शैलैः कीलैरिव स्थानेष्वाचिता तेषु तेष्वियम् ।**

इन पर्वतों के द्वारा यह पृथ्वी भी निश्चलता के लिए चर्म के समान विस्तृत हो गई । जहाँ पर पर्वत थे, उन-उन स्थानों पर कीलों के समान पर्वतों से यह पृथ्वी मानो कीलित हो गई ॥ २३-२४ ॥

**वृद्धिं गताद्रिनिःष्यन्दैर्भूभृतां प्रविभागजा ॥ २४ ॥**
**निम्नगाभूत् ततोऽम्भोधेः कान्ता निम्नानुसारिणी ।**
**मेदिन्यन्तेषु जलधिपर्यन्तेषु विनिर्ययुः ॥ २५ ॥**

पर्वतों से निकलने वाले झरनों से वृद्धि को प्राप्त हुए भिन्न-भिन्न प्रदेशों को भिन्न-भिन्न भागों में विभक्त करने वाली नदियाँ उत्पन्न हुई । फिर सागर की कान्ता के समान प्रदेशों में जाने वाली ये नदियाँ पृथ्वी (मेदिनी) के अन्त अर्थात् सागर पर्यन्त सब ओर बहने लगीं ॥ २४-२५ ॥

**अम्भांसि यत्र यत्रासंस्ते द्वीपाश्चित्ररूपिणः ।**
**सनिम्नगाम्बुधिद्वीपा विभक्ताखिलभूधरा ॥ २६ ॥**
**व्यक्ता बभूव कृत्स्नैवं भूमिर्भूतानि बिभ्रती ।**

जहाँ-जहाँ पृथ्वी के अगल-बगल पानी था, वहाँ-वहाँ विचित्र प्रकार के द्वीप बन गये । इस प्रकार नदी, समुद्र और विविध द्वीपों वाली यह पृथ्वी जीवों (भूतों) को धारण करती हुई अनेक पर्वतों के द्वारा विभक्त होकर सम्पूर्ण रूप से दिखाई पड़ने लगी ॥ २६-२७ ॥

भूमेरधो रौरवादि-नरकाणां सृष्टिः

**स चक्रे रौरवादीनां निरयाणमधः क्षितेः ॥ २७ ॥**
**स्वकर्मफलभुक्त्यर्थं स्थानं दुष्कृतकर्मणाम् ।**

**भूमि के नीचे रौरव आदि नरकों की सृष्टि**—फिर सृष्टिकर्ता ब्रह्मा ने पाप कर्म करने वाले मानवों के अपने-अपने कर्मफल के भोगने के लिए पृथ्वी के नीचे रौरव आदि नरकों का सृजन किया ॥ २७-२८ ॥

जरायुजादीनां चतुर्णां भूतानां सृष्टिः

**जरायुजाण्डजोद्भिज्जस्वेदजैः सह स प्रभुः ॥ २८ ॥**
**चतुर्धेत्यसृजल्लोके भूतग्रामचराचरम् ।**

**जरायुज आदि चार भूतों की सृष्टि**—फिर उस सृष्टिकर्ता ब्रह्मा ने १. जरायुज, २. अण्डज, ३. उद्भिज्ज, ४. स्वेदज इन चार विभागों में इस चराचर जगत् की सृष्टि की ॥ २८-२९ ॥

तत्र जरायुजानां विभागः

**द्वेधा जरायुजास्तत्र मनुष्याः पशवस्तथा ॥ २९ ॥**

**जरायुज का विभाग**—इनमें जरायुज दो प्रकार के हैं→१. मनुष्य, तथा २. पशु ॥ २९ ॥

ग्रामारण्यभेदेन पुनर्द्विधा भिन्नानां तेषां विवरणम्

**ग्राम्याः सप्ताभवंस्तेषु सप्तारण्यकृताश्रयाः ।**
**पुमान् गौस्तुरगच्छागौ मेषो वेगसरः खरः ॥ ३० ॥**
**ग्रामवासैकनिरताः सप्तैते परिकीर्तिताः ।**
**सिंहद्विपोष्ट्रमहिषाः शरभो गवयः कपिः ॥ ३१ ॥**
**अरण्यगोचरा जीवाः सप्तैते वत्स! निर्मिताः ।**

**ग्राम एवं अरण्य भेदों का निरूपण**—पुनः इन दोनों के सात ग्राम्य तथा सात आरण्य भेद बताये गये हैं । सात ग्रामवासी जीव हैं—१. मनुष्य, २. गौ, ३. अश्व, ४. छाग, ५. मेष, ६. खच्चर (वेगसर) तथा ७. गदहा (खर) और अरण्य में विचरण करने वाले जङ्गली जीव हैं—१. सिंह, २. गज, ३. उष्ट्र, ४. महिष, ५. शरभ, ६. नीलगाय (गवय) तथा ७. कपि (बन्दर) ॥ ३०-३२ ॥

**धर्माधर्मविवेकित्वाच्छ्रेयान् ग्राम्येषु पूरुषः ॥ ३२ ॥**
**अरण्यचारिषु श्रेष्ठः सिंहः शौर्यबलादिभिः ।**

इस ग्राम्य जरायुजों में धर्म (piety) एवं अधर्म (impiety) रूप विवेकित्व गुण के कारण 'मनुष्य' सभी जीवों में श्रेष्ठ हुआ और अरण्यचारी मृगादिक पशुओं में अपने पराक्रम एवं बल आदि गुणों के कारण 'सिंह' सभी पशुओं में श्रेष्ठ हुआ ॥ ३२-३३ ॥

अण्डजस्वेदजोद्भिज्जानां विभागादिकम्

**सुपर्णा भुजगाः कीटाः येऽपि च स्युः पिपीलिकाः ॥३३॥**
**चतुर्धेत्यण्डजन्मानो जन्मिनस्ते प्रकीर्तिताः ।**

**अण्डज, स्वेदज एवं उद्भिजों के विभाग**—१. **अण्डज** चार प्रकार के हैं—१. सुपर्ण (पक्षी), २. भुजङ्ग (सर्प आदि), ३. कीट (कीड़े-मकोड़े) और ४. चीटियाँ (= पिपीलिकाएँ) ॥ ३३-३४ ॥

**क्लेदकेशसमुद्भूताः कृमियूकादिजन्तवः ॥ ३४ ॥**
**सर्वेऽपि स्वेदजन्मानस्ते प्रजापतिना कृताः ।**

२. **स्वेदज**—पसीना (क्लेद) तथा केश से उत्पन्न कृमि, जूं, खटमल, (यूकादि) जन्तुओं को प्रजापति ने उत्पन्न किया ॥ ३४-३५ ॥

**उद्भिजाः पञ्चधा भू(त्वा?)त्था निर्दिष्टा स्थावराश्च ते॥३५॥**
**द्रुमा वल्ल्यश्च गुल्माश्च वंशाः सतृणजातयः ।**
**छन्नान्तःकरणत्वं च स्वस्थानत्यागितापि च ॥ ३६ ॥**
**छिन्नप्ररोहिता चैषां वैशेषिकगुणत्रयम् ।**

३. **उद्भिज्ज** पाँच प्रकार के होते हैं—जो स्थावर हैं अर्थात् वृक्ष, लता, गुल्म, बाँस (वंश) और तृण जाति के उद्‌भिज विभाग में आते हैं । इन उद्भिज्जों के तीन विशेष गुण हैं १. इनका अन्तःकरण संवेदना शक्ति से अन्तरित रहता है (छन्नान्तः-करणत्व) । २. ये जहाँ पर उत्पन्न होते हैं वहीं खड़े रहते हैं (स्वस्थानत्यागिता) तथा ३. काटने पर फिर उग जाते हैं (छिन्न-प्ररोहिता)—ये तीन इनके वैशेषिक गुण हैं ॥ ३५-३७ ॥

**गायत्री भूतसंज्ञै(षां?षा) चतुर्विंशतिपर्विका ।**
**ज्ञात्वैनां पुरुषः पुण्यां भवति स्वर्गभाजनम् ॥ ३७ ॥**

इस प्रकार चतुर्विंशति पर्वों वाली (Twenty four joints) यह 'भूत' नामक गायत्री है । इस पुण्यभूत गायत्री को जो जानता है वह मृत्यु के बाद स्वर्ग को प्राप्त करता है ॥ ३७ ॥

भुवनभूजलवह्निमरुद्वियत्-
प्रमुख एष भवस्तव कीर्तितः ।
वसुमतीपरिमाणविनिश्चयं
कथयतः शृणु सम्प्रति वत्स! मे ॥ ३८ ॥

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचितसमराङ्गणसूत्रधारापरनाम्नि-वास्तुशास्त्रे महदादिसर्गश्चतुर्थोऽध्यायः ॥ ४ ॥**

...

जिसमें तीन भुवन, भू, जल, अग्नि एवं आकाश प्रमुख हैं ऐसे इस विश्व की व्याख्या यहाँ की गई है । हे पुत्र! अब पृथ्वी के परिमाण आदि का जो मैं निरूपण कर रहा हूँ उसको आप सुनिए ॥ ३८ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'महदादिसर्ग' नामक चतुर्थ अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ४ ॥**



# अथ पञ्चमोऽध्यायः

## * भुवनकोशः *

## (The Geographical Data and the Description of the Earth)

**अथो यथाक्रमं भूमेः कृत्स्नायाः कथयामि ते ।**
**विष्कम्भपरिधी वत्स! बाहुल्यमपि च स्फुटम् ॥ १ ॥**

**भूगोल वर्णन**—अब महदादि सर्ग का वर्णन करने के बाद हे पुत्र! इस सम्पूर्ण पृथ्वी के विस्तार का तथा गोलार्ध एवं क्षेत्रफल (विष्कम्भ, परिधि) का स्पष्ट रूप से क्रमानुसार वर्णन करता हूँ ॥ १ ॥

### क्षित्यादीनां प्रमाणकथनम्

**विष्कम्भोऽस्याः समुद्दिष्टो दशयोजनकोटयः ।**
**लक्षाण्यपि च मेदिन्यास्तद्वदेकोनविंशतिः ॥ २ ॥**
**विष्कम्भत्रिगुणो यावद् विष्कम्भांशश्च पञ्चमः ।**
**मेदिन्याः परिधिस्तावद्योजनैः परिकीर्तितः ॥ ३ ॥**
**द्वात्रिंशत्कोटयः षष्टिर्लक्षाणि परिधिः क्षितेः ।**
**अशीतिश्च सहस्राणि योजनानां प्रकीर्तितः ॥ ४ ॥**
**योजनानां सहस्राणि विंशतिर्लक्षयोर्द्वयम् ।**
**इति बाहुल्यमेतस्याः क्षितेर्वत्स! तवोदितम् ॥ ५ ॥**

**पृथ्वी का प्रमाण कथन**—इस भूमि का विष्कम्भ अर्थात् विस्तार दस करोड़ उन्नीस लाख योजन बताया गया है और इसकी (परिधि) गोलाई विस्तार का तिगुना है । यह गोलाई विष्कम्भ का पाँचवा भाग अर्थात् बत्तीस करोड़ साठ लाख अस्सी हजार (योजन) कही गई है, दो लाख बीस हजार योजन इसका (बाहुल्य) क्षेत्रफल माना गया है । हे पृथ्वीपुत्र! इस प्रकार भूमि का क्षेत्रफल का प्रमाण विवेचन किया गया है ॥ २-५ ॥

**चतुर्णां सलिलादीनां भूतादेर्महतोऽपि च ।**

**उत्तरोत्तरमुर्वीतो मानं शतगुणं विदुः ॥ ६ ॥**
**तोयादिषु स्थितेयं भूश्चक्रवद् वृत्तशालिनी ।**

जल, अग्नि, वायु एवं आकाश तथा महत् तत्त्व का प्रमाण पृथिवी से उत्तरोत्तर सौ गुना अधिक है अर्थात् पृथिवी से जल सौ गुना तथा जल से अग्नि सौ गुना अधिक है और अग्नि से वायु सौ गुना अधिक है एवं वायु से आकाश का क्षेत्रफल सौ गुना अधिक कहा गया है । इस प्रकार जलादिकों में स्थित यह पृथिवी चक्र के समान वृत्तात्मक अर्थात् गोल है ॥ ६-७ ॥

**पात्रस्थापरपात्रश्रीहारीण्यन्यान्यपि क्रमात् ॥ ७ ॥**
**प्रमाणमिदमेतेषां क्षित्यादीनां तवोदितम् ।**

जिस प्रकार एक पात्र पर दूसरे पात्र शोभित होते हैं वैसे ही अन्य लोक भी इसी क्रम से ब्रह्माण्ड में स्थित है । इस प्रकार हे पुत्र! इस पृथ्वी के प्रमाण तथा उसके परिधि आदि का यहाँ निरूपण कर दिया गया है ॥ ७-८ ॥

### द्वीपादीनां पाथोधिनिवेशकथनम्

**द्वीपादीनां तु पाथोधिनिवेशः पुनरुच्यते ॥ ८ ॥**

**द्वीपादि एवं समुद्रों का वर्णन**—अब इसके बाद द्वीपादि एवं समुद्र अर्थात् किस द्वीप में कौन-कौन से समुद्र एवं पर्वत स्थित हैं इसका वर्णन करते हैं ॥ ८॥

### सप्तसु द्वीपेषु जम्बूद्वीपवर्णनम्

**द्वीपानामम्बुधीनां च सप्तानामपि मध्यगः ।**
**जम्बूद्वीपो भवेद् वृत्तः सहस्त्रशतविस्तृतः ॥ ९ ॥**
**हिमाद्रिर्हेमकूटाख्यो निषधो नीलसंज्ञितः ।**
**श्वेतः शृङ्गी च षडमी भवन्त्यस्मिन् कुलाचलाः ॥ १० ॥**

**जम्बूद्वीप**—इस पृथ्वीतल के सातों द्वीपों तथा सातों समुद्रों के मध्य में सौ हजार योजन के विस्तार में गोलाकार आकृति वाला जम्बूद्वीप स्थित हैं । इस जम्बूद्वीप में १. हिमाद्रि, २. हेमकूट, ३. निषध, ४. नील, ५. श्वेत और ६. शृङ्गी नामक छह (महापर्वत) कुलाचल पर्वत श्रेणियाँ हैं ॥ ९-१० ॥

**एतस्मादुत्तरेणाद्रेस्तुषाराङ्कितमेखलात् ।**
**पूर्वापरायताः सर्वेऽप्यद्रयो यावदम्बुधि ॥ ११ ॥**

**१. हिमालय**—तुषाराच्छादित मेखला वाले हिमालय के उत्तर से लेकर पूर्व एवं पश्चिम तक फैले हुए समुद्र पर्यन्त इन छह पर्वतों का विस्तार है ॥ ११ ॥

**अन्तरा नीलनिषधौ जम्बूद्वीपस्य नाभिगः ।**
**वृत्तः पुण्यजनाकीर्णः श्रीमान् मेरुर्महाचलः ॥ १२ ॥**

**२. मेरु पर्वत**—नील एवं निषध नामक दो पर्वतों के मध्य में जम्बूद्वीप की नाभि रूप से विद्यमान पुण्यजनाकीर्ण (पुण्यजन अर्थात् यक्षों से सेवित) गोलाकार श्रीसम्पन्न 'मेरु' नाम का महापर्वत स्थित है ॥ १२ ॥

**विमर्श**—रघुवंश में कालिदास ने पुण्यजन शब्द का प्रयोग यक्षों के लिए किया है—'पयोधरैः पुण्यजनाङ्गनानाम् ।' (रघु० १३.६०)

**उदग्याम्यायते मेरोः प्राग्भागे माल्यवान् गिरिः ।**
**सेवितः सिद्धनारीभिरानीलनिषधायतः ॥ १३ ॥**
**सुमेरोः पश्चिमेनाद्रिर्गन्धर्वकुलसङ्कुलः ।**
**माल्यवत्सदृशायामो महीभृद् गन्धमादनः ॥ १४ ॥**

**३. माल्यवान् एवं ४. गन्धमादन**—मेरु के उत्तर एवं दक्षिण की ओर फैले हुए प्राग्भाग में 'माल्यवान्' नाम का पर्वत स्थित है । नील और निषध तक फैले हुए सुमेरु के पश्चिम भाग में गन्धर्वों के समूहों से व्याप्त माल्यवान् पर्वत के समान ही विस्तार वाला 'गन्धमादन' नाम का पर्वत है ॥ १३-१४ ॥

**पर्वतावुभयान्तस्थौ हिमवान् शृङ्गवांस्तथा ।**
**योजनानां सहस्रे द्वे सार्धे स्यादुच्छ्रयस्तयोः ॥ १५ ॥**

**५. हिमवान् एवं ६. शृङ्गवान्**—इन दोनों पर्वतों के अन्तराल में 'हिमवान्' और 'शृङ्गवान्' नामक दो पर्वत स्थित हैं और उन दोनों की ऊँचाई ढाई-ढाई हजार योजन है ॥ १५ ॥

**श्वेतश्च हेमकूटश्चेत्यन्तयोः पृथिवीधरौ ।**
**योजनानां सहस्रार्धमेकैकस्योच्छ्रयस्तयोः ॥ १६ ॥**

**७. श्वेत एवं ८. हेमकूट**—इन दोनों पर्वतों के अन्तराल में फैंले हुए श्वेत और हेमकूट पर्वत स्थित है जिनकी ऊँचाई पाँच-पाँच सौ योजन है ॥ १६ ॥

**निषधाचलनीलाद्रिमाल्यवद्गन्धमादनाः ।**
**सहस्रयोजनोच्छ्रायाश्चत्वारोऽमी पृथक् पृथक् ॥ १७ ॥**

निषधाचल, नीलाद्रि, माल्यवान् तथा गन्धमादन इन चारों पर्वतों की ऊँचाई एक-एक हजार योजन है ॥ १७ ॥

**एतेऽष्टावपि शैलेन्द्राः सहस्रद्वयविस्तृताः ।**

**उच्छ्रयार्धमधश्चापि विलग्नाः सह मेरुणा ॥ १८ ॥**

इस प्रकार ये आठों पर्वतराज दो हजार योजन के विस्तार में फैले हुए हैं तथा इनके नीचे के अधःभाग का विस्तार उनकी ऊँचाई का आधा कहा गया है और ये सब मेरु पर्वत से जुड़े हुए हैं ॥ १८ ॥

**मेरोः समुच्छ्रयोऽशीतिः सहस्राणि चतुर्युताः ।**
**षोडशाधः सहस्राणि द्वात्रिंशन्मूर्ध्नि विस्तृतिः ॥ १९ ॥**

इस पर्वतराज मेरु की ऊँचाई तो चौरासी हजार योजन है, नीचे का फैलाव सोलह हजार योजन है तथा ऊपर का विस्तार बत्तीस हजार योजन है ॥ १९ ॥

**जम्बूतरुर्महान् मध्ये सुमेरोर्निषधस्य च ।**
**द्वीपस्यामुष्य यद्योगाज्जम्बूद्वीप इति श्रुतिः ॥ २० ॥**

सुमेरु और निषध पर्वतों के बीच में एक जम्बू वृक्ष स्थित है जिसके संयोग से इस द्वीप की 'जम्बू द्वीप' संज्ञा प्रसिद्ध हुई है—ऐसा जनश्रुति कहती है ॥२०॥

**शृङ्गैर्हिमशिलानद्धैः सर्वतो हिमवानयम् ।**
**महान्तो निवसन्त्यत्र पिशाचा यक्षराक्षसाः ॥ २१ ॥**

**१. हिमवान् पर्वत**—यह पर्वत हिम की शिलाओं से आच्छादित एवं ऊँची शिखरों से सुशोभित है और यहाँ पर महान् पिशाच, यक्ष एवं राक्षस निवास करते हैं ॥ २१ ॥

**कूटैर्हेममयैर्हेमकूट इत्यवनीधरः ।**
**यं सर्वतो निषेवन्ते सदा चारणगुह्यकाः ॥ २२ ॥**

**२. हेमकूट पर्वत**—यह पर्वत अपने स्वर्ण की शिखरों के कारण लोक में प्रसिद्ध है । यहाँ पर सर्वत्र सदैव चारण तथा गुह्यक (देवयोनि विशेष) विचरण किया करते हैं ॥ २२ ॥

**तरुणार्कप्रभाजालप्रतिभो निषधाचलः ।**
**निवसन्ति सुखं तत्र शेषवासुकितक्षकाः ॥ २३ ॥**

**३. निषधाचल**—यह निषध पर्वत प्रातःकालीन तरुण सूर्य के प्रभा मण्डल के सदृश अरुण वर्ण का है । इस पर्वत पर शेष, वासुकि तथा तक्षक गण सुखपूर्वक निवास करते हैं ॥ २३ ॥

**हेमाब्जकर्णिकाकारः सुमेरुर्मणिकन्दरः ।**
**अत्रामराः साप्सरसस्त्रयस्त्रिंशद् वसन्ति ते ॥ २४ ॥**

**४. मेरु पर्वत**—यह पर्वत स्वर्ण कमल की कर्णिका के आकार का है तथा इसकी कन्दराएँ अनेक प्रकार की मणियों से युक्त हैं । इस पर्वत पर तैंतीस करोड़ देव अपनी अप्सराओं के साथ निवास करते हैं ॥ २४ ॥

**वैडूर्यनद्धैः शिखरैर्नीलो नीलमहीधरः ।**
**कलयन्ति तपोनित्या यत्र ब्रह्मर्षयः स्थितिम् ॥ २५ ॥**

**५. नील महीधर**—यह पर्वत अपने वैडूर्यमय शिखरों के कारण विश्व में प्रसिद्ध है । यहाँ पर तपोनिष्ठ ब्रह्मर्षिगण निवास करते हैं ॥ २५ ॥

**श्वेत स काञ्चनैः शृङ्गैर्गगनोल्लेखिभिर्वृतः ।**
**दोर्दर्पशालिनां यत्र निवासस्त्रिदशद्विषाम् ॥ २६ ॥**

**६. श्वेत पर्वत**—यह श्वेत पर्वत स्वर्ण की आकाश छूने वाली ऊँची-ऊँची शिखरों से घिरा हुआ है । यहाँ पर अपने भुजाओं के बल पर गर्व करने वाले देव-द्रोहियों का निवास है ॥ २६ ॥

**महानीलमयो बर्हिपिच्छच्छायो बहिर्महान् ।**
**पितृणामालयः शृङ्गैरुच्छ्रितैः शृङ्गवान् गिरिः ॥ २७ ॥**

**७. शृङ्गवान् पर्वत**—इस पर्वत पर महानीलमयी मयूर के पङ्ख के समान (बर्हिपिच्छ) छाया है अर्थात् यहाँ पर मयूरों का आधिक्य है । इसके शिखर ऊँचे-ऊँचे उठे हुए हैं और यह पितरों का निवास स्थान है ॥ २७ ॥

### जम्बूद्वीपे नववर्षस्य भूगोलकथनम्

**हिमाचलस्य याम्येन क्षाराब्धिवृतमन्यतः ।**
**वर्षं स्याद् भारतं नाम प्रथमं कार्मुकाकृति ॥ २८ ॥**

**जम्बूद्वीप के वर्ष (देश) का भूगोल—१. भारतवर्ष**—जम्बूद्वीप में हिमालय के दक्षिण भाग में क्षार (नमकीन जल वाले) समुद्र तक फैला हुआ धनुषाकार आकृति वाला भारत वर्ष नाम का पहला वर्ष विख्यात है ॥ २८ ॥

**तुषारनिलयस्याद्रेर्हेमकूटाचलस्य च ।**
**मध्ये किंपुरुषं नाम द्वितीयं वर्षमीरितम् ॥ २९ ॥**

**२. किम्पुरुष वर्ष**—हिमालय और हेमकूट पर्वत के मध्य में 'किम्पुरुष वर्ष' नाम का दूसरा वर्ष बताया गया है ॥ २९ ॥

**अन्तरे हेमकूटस्य निषधस्य च भूभृतः ।**
**हरिवर्षमिति प्रोक्तं तृतीयं वर्षमुत्तमम् ॥ ३० ॥**

**३. हरिवर्ष**—हेमकूट पर्वत एवं निषधाचल के मध्य में तीसरा उत्तम वर्ष 'हरिवर्ष' नामक स्थित है ॥ ३० ॥

**निषधाचलनीलाद्रिमाल्यवद्गन्धभूभृताम् ।**
**चतुर्णां मध्यगं वर्षं तुर्यमस्मिन्निलावृतम् ॥ ३१ ॥**

**४. इलावृतवर्ष**—निषधाचल, नीलाद्रि, माल्यवान् एवं गन्धमादन इन चारों पर्वतों के मध्य में चौथा वर्ष 'इलावृतवर्ष' है ॥ ३१ ॥

**उत्तरे नीलशैलस्य याम्ये च श्वेतभूभृतः ।**
**पञ्चमं वर्षमत्यर्थरम्यं रम्यकसंज्ञितम् ॥ ३२ ॥**

**५. रम्यकवर्ष**—नीलाचल के उत्तर भाग में तथा श्वेताचल के दक्षिण में अत्यन्त 'रम्य रम्यक' नाम का पाँचवाँ वर्ष है ॥ ३२ ॥

**श्वेतश‍ृङ्गवतोः शैलराजयोरनयोरिह ।**
**मध्ये षष्ठं हिरण्यांशुरम्यं हैरण्यकाह्वयम् ॥ ३३ ॥**

**६. हैरण्यक वर्ष**—श्वेताचल तथा श‍ृङ्गाचल इन दो पर्वतों के बीच में स्वर्णिम किरणों के सदृश मनोहर छठा वर्ष 'हैरण्यक' वर्ष नाम का है ॥ ३३ ॥

**अस्योत्तरे श‍ृङ्गवतो याम्ये च क्षारवारिधेः ।**
**कुरुवर्षाभिधं वर्षमुत्तरेण प्रचक्षते ॥ ३४ ॥**

**७. कुरुवर्ष**—इसी श‍ृङ्गाचल के उत्तर भाग में तथा क्षार समुद्र के दक्षिण भाग में सातवाँ वर्ष 'कुरुवर्ष' के नाम से जाना जाता है ॥ ३४ ॥

**अन्तरा नीलनिषधौ प्राग्भागे माल्यवद्गिरेः ।**
**भद्राश्वमष्टमं वर्षं प्राक्समुद्रान्तमीरितम् ॥ ३५ ॥**

**८. भद्राश्व वर्ष**—नीलाचल तथा निषधाचल के बीच में तथा माल्यवान् पर्वत के प्राग्भाग में पूर्वी समुद्र तक फैला हुआ आठवाँ वर्ष 'भद्राश्ववर्ष' नाम से लोक में प्रसिद्ध है ॥ ३५ ॥

**गन्धमादनशैलस्य प्रत्यक् प्राक् चापराम्बुधेः ।**
**नवमं वर्षमाचार्याः केतुमालं प्रचक्षते ॥ ३६ ॥**

**९. केतुमाल**—गन्धमादन पर्वत के पश्चिम भाग में तथा पश्चिम समुद्र के पूर्व की ओर स्थित 'केतुमाल' के नाम से पुकारा जाने वाला नौवाँ वर्ष है ॥ ३६ ॥

**इति प्रोक्तानि वर्षाणि नवामूनि मया तव ।**
**साम्प्रतं पुनरेतेषां प्रमाणमवधारय ॥ ३७ ॥**

हे वत्स! यहाँ आपके ज्ञान के लिए इन नव वर्षों का विवेचन किया गया है। अब आप इनका प्रमाण समझिए ॥ ३७ ॥

### नववर्षस्य प्रमाणकथनम्

**प्रमाणेन सहस्राणि चतुस्त्रिंशच्चतुर्दिशम् ।**
**योजनानामिहेच्छन्ति चतुरस्रमिलावृतम् ॥ ३८ ॥**

**नौ वर्षों का प्रमाण**—चारों दिशाओं को मिलाकर चौंतिस हजार योजन के प्रमाण में चौकोर आकृति का इलावृत (इला)वर्ष का प्रमाण समझना चाहिये ॥३८॥

**प्राक्प्रत्यग्भागगे वर्षे तस्योदग्याम्यतः समे ।**
**एकत्रिंशत्सहस्राणि किञ्चित् प्राक्प्रत्यगायते ॥ ३९ ॥**
**यान्युक्तानि षडन्यानि वर्षाण्येभ्योऽवराणि ते ।**
**तेषां नवसहस्राणि प्रत्येकं विस्तृतिर्मता ॥ ४० ॥**

इस इलावृत वर्ष के पूर्व से पश्चिम तक जाने वाले और उत्तर से दक्षिण तक दोनों वर्षों का समान प्रमाण इकतीस हजार योजन है । शेष जो उनसे अपेक्षाकृत छह छोटे वर्ष हैं तथा कुछ पूर्व तथा पश्चिम दिशा का स्पर्श करने वाले हैं, उनका प्रत्येक का विस्तार नौ हजार योजन कहा गया है ॥ ३९-४० ॥

### नववर्षस्य भोजनादि व्यवस्थाकथनम्

**वर्षे किम्पुरुषे नार्यो नराश्च प्लक्षभोजनाः ।**
**जीवन्त्ययुतमब्दानां जात्यजाम्बूनदत्विषः ॥ ४१ ॥**

**२. किम्पुरुष** नामक वर्ष में स्त्रियाँ एवं पुरुष पाकड़ (प्लक्ष) का भोजन करते हैं । ये लोग अयुत (१० हजार) वर्ष की आयु तक जीते हैं और इनका रङ्ग विशुद्ध सोने के समान चमकीला होता है ॥ ४१ ॥

**हरिवर्षे नरा नार्यो वसन्तीक्षुरसाशिनः ।**
**सायुतं च सहस्रं ते जीवन्ति रजतत्विषः ॥ ४२ ॥**

**३. हरिवर्ष** के स्त्रियाँ एवं पुरुष इक्षुरस का पान करने वाले होते हैं और उनका रङ्ग चाँदी के समान गौर वर्ण का होता है अर्थात् उनकी आयु अयुत सहित एक हजार अर्थात ११ हजार वर्ष होती है ॥ ४२ ॥

**इलावृते नराः पद्मरागभासोद्गतास्तथा ।**
**जम्बूफलरसाहाराः सपादायुतजीविनः ॥ ४३ ॥**

**४. इलावृतवर्ष** (= इलावृत्त) में पद्मराग मणि की कान्ति वाले नर-नारीगण

जामुन के फल के रस का आहार ग्रहण करते हैं और वे साढ़े बारह हजार वर्ष पर्यन्त जीवित रहते हैं ॥ ४३ ॥

**नास्मिन् मेरुतटच्छन्ने तारकार्केन्दुरश्मयः ।**
**स्वाङ्गप्रभाभिः किन्त्वत्र कृतोद्योता वसन्त्यमी ॥ ४४ ॥**

मेरु पर्वत की सतह से आच्छन्न होने के कारण इस वर्ष में सूर्य, चन्द्र और तारों की किरणें नहीं पहुँच पाती हैं अतः यहाँ के नर-नारी अपने अङ्ग की कान्तियों से ही प्रकाशित होकर निवास करते रहते हैं ॥ ४४ ॥

**कैरवोदरसच्छाया भद्राश्वे साङ्गना नराः ।**
**नीलाम्रकफलाहारा भवन्त्यत्रायुतायुषः ॥ ४५ ॥**

**५. भद्राश्व** नामक वर्ष के स्त्री-पुरुष कैरव पक्षी (काकावली) के श्वेत उदर की कान्ति के समान उज्ज्वल कान्ति वाले होते हैं तथा नीले वर्ण के आम्रफल का भोजन करने वाले होते हैं और उनकी अवस्था दस हजार वर्ष की होती है ॥४५॥

**दलत्कुवलयश्यामाः केतुमाले शरीरिणः ।**
**शरदामयुतं तेषामायुः पनसभोजिनाम् ॥ ४६ ॥**

**६. केतुमाल** नामक वर्ष के नर नारियाँ खिले हुए नील कमल के समान नील वर्ण वाले होते हैं । वे खजूर (पनस) का भोजन करते हैं । उनकी आयु भी दस हजार वर्ष की है ॥ ४६ ॥

**विमर्श**—पनसः कण्टकिफलो........इत्यमरः । (२.४.६१)

**श्वेताभो रम्यके रम्ये न्यग्रोधफलभुग् जनः ।**
**हरिवर्ष इव प्रोक्तमेतस्मिन् मानमायुषः ॥ ४७ ॥**

**७. रम्यक** नामक वर्ष में मनुष्य धवल वर्ण के होते हैं और न्यग्रोध (बरगद) के फल को खाते हैं । इस वर्ष में प्राणियों की आयु हरिवर्ष के समान ग्यारह हजार बताई गई है ॥ ४७ ॥

**श्यामत्विषः स्त्रियो वर्षे पुमांसश्च हिरण्यके ।**
**जीवन्त्ययुतमब्दानां सर्वेऽपि लकुचाशिनः ॥ ४८ ॥**

**८. हिरण्यक** नामक वर्ष में स्त्री-पुरुष श्याम वर्ण के होते हैं । वे लकुचाशी (लुकाट खाने वाले) होते हैं और सभी दस हजार वर्ष तक जीते हैं ॥ ४८ ॥

**कुरुष्वभीष्टदैर्वृक्षैर्जीवन्ति स्त्रीयुता नराः ।**
**सपादमयुतं देवगर्भभा गौरकान्तयः ॥ ४९ ॥**

**९. कुरु** नामक वर्ष में नर-नारी मनचाही वस्तुएँ देने वाले वृक्षों के सहारे जीते हैं। उनका रङ्ग देवतुल्य गौर वर्ण का होता है और उनकी आयु साढ़े बारह हजार वर्ष होती है ॥ ४९ ॥

**पुण्यकर्मा वसत्येषु वर्षेषु निखिलो जनः ।**
**शोकव्याधिजरातङ्कशङ्कोन्मुक्तः सदा सुखी ॥ ५० ॥**

इन सभी वर्षों में समस्त पुण्यकर्मा भक्तजन ही निवास करते हैं। शोक, व्याधि, जरा, रोग की शङ्का से यहाँ के भक्तजन सदैव मुक्त रहकर सुखी जीवन व्यतीत करते हैं ॥ ५० ॥

**वनैः कीर्णानि सर्वाणि कुसुमस्तवकानतैः ।**
**उद्भिज्जाद्भिर्नदीभिश्च तैस्तैस्तुङ्गैश्च पादपैः ॥ ५१ ॥**
**उदञ्चद्वीचिमालेन लावणेनाब्धिना बहिः ।**
**परिक्षिप्तोऽयमुक्तस्ते जम्बूद्वीपो मयाखिलः ॥ ५२ ॥**

ये सभी वर्ष कुसुमों के स्तबकों (= गुच्छों) से लदे हुए वनों से आच्छन्न रहते हैं। उद्भिज्ज सृष्टि (वृक्ष, लता, गुल्म एवं तृण आदि) से, नदियों से और उन ऊँचे-ऊँचे वृक्षों से ये सभी वर्ष शोभित रहते हैं। ऊपर उठती हुई लहरों की मालाओं से सुशोभित लवण समुद्र से यह जम्बूद्वीप बाहर से घिरा हुआ रहता है। हे वत्स! इस प्रकार इस सम्पूर्ण जम्बूद्वीप का यहाँ वर्णन किया गया है ॥ ५१-५२ ॥

**द्वादशाम्बुनिधावत्र पृथग् भूमिभृतः स्थिताः ।**
**त्रयस्त्रयो दिशि दिशि स्फारोर्मिस्थगितोपलाः ॥ ५३ ॥**

**लवणसमुद्र के पहाड़**—इस लवणसमुद्र के भीतर बारह पहाड़ अलग-अलग स्थित हैं। चारों दिशाओं में तीन-तीन पहाड़ हैं। लवणसमुद्र की ऊँची-ऊँची लहरों से इनकी बड़ी-बड़ी शिलाएँ कटती रहती हैं ॥ ५३ ॥

**क्षारसमुद्रमध्ये द्वादशं पर्वतानां स्थितिकथनम्**

**मैनाकश्च वलाहश्च चक्रनामा च दक्षिणे ।**
**नारदाख्यो वराहाख्यः सौमकाख्यश्च पश्चिमे ॥ ५४ ॥**
**उदग्भागेऽपि च द्रोणकङ्कचन्द्रा इति त्रयः ।**
**धूम्रको दुन्दुभिश्चैव सार्द्रकश्चेति पूर्वतः ॥ ५५ ॥**

**क्षार समुद्र के मध्य बारह पर्वतों की स्थिति**—दिशा के क्रमानुसार इन बारहों पर्वतों की दिक्-स्थिति इस प्रकार है—पूर्व में १. धूम्रक, २. दुन्दुभि तथा ३. आर्द्रक पर्वत हैं। दक्षिण में ४. मैनाक, ५. बलाहक तथा ६. चक्र पर्वत हैं।

समान प्रदक्षिण क्रम से प्रागग्र अपने शयन गृह में लाकर रख देना चाहिए ॥७८॥

**कुर्यात् तत्रैव नक्षत्रे शय्यास्थस्यामरेशितुः ।**
**भ्रमे कुष्ये च संयोगं यथाभागविकल्पितम् ॥ ७९ ॥**

वहीं पर शुभ नक्षत्र में शय्या स्थित इन्द्र का यथाभाग विकल्पित कर भ्रम एवं कुष्य को संयुक्त कर देवे ॥ ७९ ॥

**कुष्ये संयोज्यमानश्चेद् ध्वजो निपतति क्षितौ ।**
**तदा नरपतेः स्थानभ्रंशो भवति निश्चितः ॥ ८० ॥**

कुष्य में (ध्वज का दण्ड जिसमें खोसा जाए) उससे संयुक्त होते हुए यदि ध्वजा भूमि पर गिर पड़ती है तो राजा की स्थान च्युति निश्चित ही होती है ॥८०॥

**कुष्ययोगे यदा शक्रो वामतो परिवर्तते ।**
**तदा स्यात् स्थपतेर्मृत्युभवेद् भङ्गश्च दक्षिणे ॥ ८१ ॥**

कुष्य के संयोजन में यदि शय्या के वामभाग पर इन्द्र परिवर्तित हो जाएँ तो स्थपति की मृत्यु होती है और यदि दक्षिण भाग में भङ्ग उपस्थित हो जाये तो भी यही दारुण कष्ट प्राप्त होता है ॥ ८१ ॥

**स्ववेधं प्रतिपद्येत तद्यष्टिर्यदि कृच्छ्रतः ।**
**प्रमादिनस्तदा राज्ञो जायते व्यसनं महत् ॥ ८२ ॥**

यदि उसकी यष्टि (बाँस) क्लेश से अपना वेध (खोंसना) प्राप्त करे, तो प्रमादी राजा को भारी व्यसन प्राप्त होता है ॥ ८२ ॥

**निष्कुष्य योजितः शक्रध्वजो विघटते यदि ।**
**विश्लिष्यति तदा सन्धिः सामन्तैः सह भूपतेः ॥ ८३ ॥**

कुष्य में संयोजित करता हुआ शक्रध्वज यदि विघटित हो जाय तो यजमान राजा की अन्य माण्डलिक राजाओं के साथ सन्धि समाप्त हो जाती है ॥ ८२ ॥

**स्फुटेद् भज्येत् वा कुष्ये योज्यमानोऽथ सर्वतः ।**
**तदा भङ्गे नृपव्याधिः स्फुटनादङ्गनावधः ॥ ८४ ॥**

यदि कुष्य में संयोजन करते हुए स्फोटन अथवा भग्नता प्राप्त हो जाय तो उस भङ्ग से राजा के लिए रोग-व्याधि और स्फोटन से स्त्री का वध (= मृत्युतुल्य कष्ट) उपस्थित होता है ॥ ८४ ॥

**अविदीर्णमपर्यस्तमव्यङ्गमविलम्बितम् ।**
**यथावन्न्यासमायाति योगं चेद् वासवध्वजः ॥ ८५ ॥**

**धनभृत्याङ्गनापत्यैः सामन्तैश्चान्वितोऽनुगैः ।**
**निरातङ्को बलाङ्गैश्च वृद्धिमेति तदा नृपः ॥ ८६ ॥**

बिना कूटे, बिना अस्तव्यस्त हुए (अथवा अङ्ग विकल होते हुए), बिना विलम्ब से यदि शक्रध्वज का न्यास एवं संयोजन प्राप्त होता है तो धन, नौकर, स्त्री, पुत्र, सामन्तों आदि अनुगामियों से युक्त, बिना भय के बलवान अङ्गों से पुष्ट, राजा अभिवृद्धि को प्राप्त होता है ॥ ८५-८६ ॥

**यत्नतो रक्ष्यमाणस्य शय्यास्थस्यैव वज्रिणः ।**
**तस्याङ्गान्यखिलान्येव कुटान्यादीनि योजयेत् ॥ ८७ ॥**

शय्या (couch) में स्थित होकर ही यत्नपूर्वक शक्रध्वज (= इन्द्र) की रक्षा करते हुए उसके कुटनी आदि यन्त्र के सम्पूर्ण अङ्गों की योजना करे ॥ ८७ ॥

**ऐन्द्रं बलाकं यक्षेशं सर्पमादं दिगाह्वयम् ।**
**मयूरं चेन्द्रशीर्षं च पिटकाष्टकमित्यदः ॥ ८८ ॥**

ध्वज के आठ पिटकों (= अलङ्करणों) के नाम हैं—१. ऐन्द्र, २. बलाक, ३. यक्षेश, ४. सर्प, ५. आद, ६. मयूर, ७. इन्द्र और ८. शीर्ष ॥ ८८ ॥

**स्वप्रमाणेन कर्तव्यं स्पष्टरूपसमन्वितम् ।**
**तदाख्याश्चान्तरेष्वेषां सन्धयो वस्त्रनिर्मिताः ॥ ८९ ॥**

इन अलङ्करणों को अपने-अपने प्रमाण से स्पष्ट स्वरूप से नाप जोखकर बनाना चाहिए और इन्हीं अलङ्करणों के नाम की सन्धियों को वस्त्र से निर्मित कर इनके बीच में रखना चाहिए ॥ ८९ ॥

**मूलादन्वग्रमायातैः स्ववंशैर्विदलैर्दृढैः ।**
**गुणैश्च वेष्टयेदेनं घनैरशिथिलैर्ध्वजम् ॥ ९० ॥**

नीचे से ऊपर तक लम्बी एवं मजबूत, घनी और अपने बाँस से निर्मित कठोर रस्सियों से इस इन्द्र की ध्वजा को लपेटे ॥ ९० ॥

**साङ्घ्रिणा ध्वजनाहेन सत्र्यंशेनाथ विस्तृतिः ।**
**विधेया शक्रपिटकस्योच्छ्रयस्तु तदर्धतः ॥ ९१ ॥**

ध्वजा की चौड़ाई की सवाई चौडाई (= सङ्घ्रिण) और तीसरा भाग अधिक जोड़ कर शक्र पिटक का विस्तार करे और उसके भी आधे भाग से उसकी ऊँचाई संयोजित करे ॥ ९१ ॥

**अस्मिन्नष्टौ दिशः कृत्वा वंशव्यहिते ततः ।**

**न्यस्येद् दिगीशांश्चतुरस्तस्योपरि यथादिशम् ॥ ९२ ॥**

ध्वजा के बाँस को छोड़कर इस शक्र पिटक में आठ दिशाएं बनाए और चारों दिक्पालों को उस पर क्रम से अपनी-अपनी दिशा में प्रतिष्ठित करना चाहिए ॥ ९२ ॥

**पञ्चमांशगते कुष्याद् वज्रिणः पिटके कृते ।**
**शेषाण्यप्यष्टभागोनान्यस्मिन् न्यस्येद् यथाक्रमम् ॥ ९३ ॥**
**बलाकादीनि विस्तृत्या चरणोनानि चोच्छ्रितौ ।**

शक्रध्वज के कुष्य से पञ्चमांशगत पिटकों (अलङ्करणों) के बना लेने पर बचे हुए आठ भागों में भी बलाक आदि ध्वज के अन्य पिटकों का यथाक्रम न्यास करे जो विस्तार से ऊँचाई में एक चरण कम हों ॥ ९३-९४ ॥

**स्ववर्णवन्ति वृत्तानि रामणीयकवन्ति च ॥ ९४ ॥**
**भङ्गपातविपर्या (सा?स) सिद्धयः पिटकोद्भवाः ।**
**पीडार्त्तिमृत्यवेऽत्यर्थमेकैकस्य प्रकीर्तिताः ॥ ९५ ॥**

वे बलाक आदि अपने-अपने वर्ण वाले हों एवं सुन्दर-सुन्दर हों और गोल हों। पिटकों से उत्पन्न होने वाले भङ्ग, पात एवं विपर्यास आदि से क्रमशः पीड़ा, दुःख तथा मृत्यु होना संभावित है ॥ ९४-९५ ॥

**शुद्धान्तामात्यचित्तानां बलस्य यशसोऽपि च ।**
**वसुमत्याश्च धाम्नां च नृपते राष्ट्र(म?प)स्य च ॥ ९६ ॥**
**केतुषड्भागविस्तारा रज्जवोऽष्टौ सुवर्तिताः ।**
**विधेयाः स्युर्ध्वजायामत्रिगुणयतयो दृढाः ॥ ९७ ॥**

अन्तःपुर, अमात्य, राष्ट्रचिन्ता, सेना, कीर्ति, पृथ्वी, भवन, राजा, राष्ट्राधीश, इन सभी की ध्वजाओं के अनुरूप बटी हुई आठ रज्जुओं को बनाना चाहिए और फिर उनको ध्वजाओं में लगाना चाहिए ॥ ९६-९७ ॥

### ध्वजप्रतिष्ठापनविधानम्

**छादितं छ(वि?दि)भिः पूर्वं कुट्टनीसहितं शुभम्।**
**यत्नेनासन्नदिवसे विदध्यादमरध्वजम् ॥ ९८ ॥**

**इन्द्रध्वजोत्थान का काल**—कुट्टनी सहित शुभ इन्द्रध्वज का उत्थान यत्नपूर्वक अक्षय तिथि में करना चाहिए अर्थात् तिथि क्षय में यह शुभ कर्म न करे ॥ ९८ ॥

**अर्केन्दुग्रहताराङ्कं वेणुगुल्मेन्द्रशीर्षकम् ।**
**साष्टकण्ठगुणं दण्डसूत्रादर्शान्वितं शुभम् ॥ ९९ ॥**

**ससस्यफलपुष्पाढ्यं शुभवस्त्रमलङ्कृतम् ।**
**दृढमन्वितमष्टाभिः सन्तताभिश्च रज्जुभिः ॥ १०० ॥**
**ध्वजपट्टं विदध्याच्च चित्रं सुरचितं तथा ।**

सूर्य, चन्द्र, ग्रहों एवं ताराओं से चिह्नित; वेणु, गुल्म और इन्द्र से सुशोभित; आठ रज्जुओं से बद्ध कण्ठ वाले; मङ्गलकारी दण्ड से युक्त, सूत्र, शीशा (आदर्श) से युक्त; शस्य (= धान्य), पुष्प, फलादि से अलंकृत एवं सुवस्त्र से सुसज्जित और सतत आठ रज्जुओं से बंधी हुई ध्वजा की पताका को बनाना चाहिए और अच्छी प्रकार से उसे विभिन्न चित्रों से चित्रित करना चाहिए ॥ ९९-१०१ ॥

**निमित्तार्थं च लोकानां शोभाहेतोर्ध्वजस्य च ॥ १०१ ॥**
**सपत्तनपुराराम-गन्धर्वत्रिदशासुरम् ।**
**निखिलं जगदालेख्यमस्मिन्नद्रिद्रुमाकुलम् ॥ १०२ ॥**

**विभिन्न प्रकार के चित्रों का आलेखन**—समस्त लोकों के शुभ निमित्त एवं ध्वजा की शोभा के लिए इसमें समस्त स्थावर एवं जङ्गम संसार के मनोहर एवं रमणीय चित्र चित्रित करने चाहिये । इनमें पत्तन, पुर, नगर, ग्राम, गन्धर्व, देवता एवं आराम (= बाग-बगीचे) के चित्र विशेष रूप से उल्लिखित होने चाहिए ॥ १०१-१०२ ॥

ध्वजपट्टविधानम्

**ध्वजाग्रे रश्मिभिर्नद्धं (स?सु)विन्यस्तं च भूतले ।**
**विन्यसेत् तमसम्मूढमधोभागसमाश्रितम् ॥ १०३ ॥**
**प्रमोदगीतवादित्रनटनर्तकसंयुतः ।**
**तदग्रे जागरः कार्यः समस्तामेव तां निशाम् ॥ १०४ ॥**

ध्वजा के अग्रभाग को डोरियों से बाँध कर और भूतल पर अच्छी तरह से रख कर उस ध्वजा के अधोभाग में आश्रित एवं असंमूढ (= जो टेढ़ा-मेढ़ा न हो) विन्यास करना चाहिए । प्रमोद, कीर्तन, वादित्र (गायन, वादन एवं नर्तन), नटों और नर्तकों के नाच सहित उस ध्वजा के समक्ष उस रात्रि जागरण करना चाहिए ॥ १०३-१०४ ॥

शान्तिहोमविधिः

**पुरोहितस्ततो भास्वत्युदिते प्रयतेन्द्रियः ।**
**अग्नेः परिग्रहं कुर्यान्मूलस्य प्रागुदग्दिशि ॥ १०५ ॥**

**इन्द्रध्वजोचित शान्ति होम का विधान**—तदनन्तर भगवान् सूर्य के उदित

होने पर संयमी पुरोहित को ध्वज के मूल भाग के सम्मुख पूर्वोत्तर दिशा में अग्नि का परिग्रह (= आवाहन) करना चाहिए ॥ १०५ ॥

**कृतोपलेपनं तस्मिन्नुल्लेखाभ्युक्षणैस्ततः ।**
**संस्कृत्यास्तीर्य दर्भांश्च ज्वालयेत् तत्र पावकम् ॥ १०६ ॥**

अग्नि जलाने के बाद उस स्थान पर उल्लेख और अभ्युक्षण कर्म करने के बाद लेपन करे फिर उसको शुद्ध कर और कुशों को बिछाकर वहाँ पर अग्नि जलानी चाहिए ॥ १०६ ॥

**तत्राज्यपात्राण्याज्यं च गन्धांश्च कुसुमानि च ।**
**द्रव्याणि वाचनीयानि समिधश्च पलाशजाः ॥ १०७ ॥**

वहाँ पर घृत के पात्र, घृत, गन्ध, पुष्प, पलाश की समिधाएँ आदि हवनीय द्रव्यों को एकत्रित करना चाहिए ॥ १०७ ॥

**सौवर्णौ स्रुक्स्रुवाविन्द्रभक्तं च बलयोऽपि च ।**
**इत्येतत्सर्वमाहृत्य जुहुयात् पावकं ततः ॥ १०८ ॥**

अन्य यज्ञ सम्भारों में सोने के बने स्रुक् तथा स्रुवा, इन्द्रभक्त तथा बलय भी एकत्रित कर फिर अग्नि में हवन करे ॥ १०८ ॥

### यथावद् हुतस्याग्नेर्वर्णादिना शुभाशुभपरीक्षणम्

**पुत्रदारपशुद्रव्यसैन्ययुक्तस्य भूपतेः ।**
**विजयावाप्तिजनकैर्मन्त्रैः शान्तिविधायिभिः ॥ १०९ ॥**
**सुस्वनः सुमहार्चिश्च स्निग्धश्चेद्धोऽपि च स्वयम् ।**
**कान्तिमान् सुरभिर्जिघ्रन् होतारं शस्यतेऽनलः ॥ ११० ॥**

**होम की अग्नि का उसके वर्ण आदि से शुभाशुभ विचार**—पुत्र, स्त्री और पशु, द्रव्य (खजाना) एवं सैन्य से युक्त राजा की विजय प्राप्त कराने वाले शान्तिकारक मन्त्रों के द्वारा उद्दीप्त एवं मधुर स्वर युक्त, सुन्दर एवं ऊर्ध्व ज्वालाओं वाले, स्निग्ध और स्वयं वृद्धि को प्राप्त, कान्तिमान तथा सुगन्धित वातावरण वाले अग्नि होता (ऋत्विज) के लिए मङ्गलकारी होता है ॥ १०९-११० ॥

**तप्तकाञ्चनसच्छायो लाक्षाभः किंशुकच्छविः ।**
**प्रवालविद्रुमाशोकसुरगोपसमद्युतिः ॥ १११ ॥**
**ध्वजाङ्कुशगृहच्छत्रयूपप्राकारतोरणैः ।**
**सदृशार्चिः प्रशस्तोऽग्निर्माङ्गल्यैरपरैस्तथा ॥ ११२ ॥**

तपाए हुए सोने के सदृश लाक्षा की कान्ति वाला, पलाश के समान शोभा वाला, प्रवाल, विद्रुम, अशोक, वीरवहूटी (= सुरगोप) के समान लाल दीप्ति वाला, ध्वजा, अङ्कुश, गृहछत्र, यूप, प्राकार, तोरण आदि अन्य माङ्गलिक द्रव्यों के तुल्य कान्ति वाले अग्नि भी उसी प्रकार प्रशस्त कहे गए हैं ॥ १११-११२ ॥

**स्निग्धः प्रदक्षिणशिखो विधूमो विपुलोऽनलः ।**
**सुभिक्षक्षेमदः प्रोक्तो दीप्यमानश्चिरं तथा ॥ ११३ ॥**

स्निग्ध, प्रदक्षिणशिखा वाला, धूमरहित, विपुल अनल यदि बहुत देर तक दीप्यमान दिखाई पड़ता है, तो वह अग्नि सुभिक्ष और क्षेम अर्थात् कल्याण का देने वाला कहा गया है ॥ ११३ ॥

**धूम्रो विवर्णः परुषः पीतो वा नीलकोऽथवा ।**
**विच्छिन्नो भैरवरवो वामावर्तशिखोऽल्पकः ॥ ११४ ॥**
**मन्दार्चिर्द्युतिमुक्तोऽसृग्वसागन्धः स्फुलिङ्वान् ।**
**धूमावृतः सफेनश्च हुतभुग् न जयावहः ॥ ११५ ॥**

धूम्रवर्ण अथवा विवर्ण, परुष (= कठोर), पीला अथवा नीला, विच्छिन्न, भयङ्कर शब्द करने वाला तथा बाई ओर शिखा वाला, मन्द दीप्ति वाला, बिना द्युति वाला, खून, अथवा वसा की गन्ध करने वाला, स्फुलिङ्गों को उड़ाने वाला, धूम से आवृत तथा फेन सहित अग्नि विजयप्रद नहीं होता है ॥ ११४-११५ ॥

**होमद्रव्याणामाज्यसमित्कुशपुष्पपत्रादीनां दुष्टत्वे फलम्**

**दर्भाणां संस्तरं वह्निर्होमाङ्गान्यपराणि च ।**
**हूयमानो दहति चेद्धानिस्तदभिनिर्दिशेत् ॥ ११६ ॥**

**होम द्रव्यों का शुभाशुभ फल**—कुशों के संस्तर (= कूँची) को अथवा होम के अन्य स्रुवा आदि अङ्गों को होम करते हुए यदि हूयमान अग्नि जला देता है तो उससे हवनकर्त्ता के लिए हानि होना निश्चित है ॥ ११६ ॥

**होमे वोत्सर्पयेत् पीठं दह्यमानो(?) यदाग्निना ।**
**भूम्येकदेशनाशः स्याल्लाभः स्यादुपकर्षणात् ॥ ११७ ॥**

होम करते समय यदि पीठ (= हवन वेदी) से जलता हुआ लुकारा हट जाए, तो भूमि के एक देश का विनाश समझना चाहिए है और उसके पास में खींचने (उपकर्षण) से लाभ कहा गया है ॥ ११७ ॥

**सर्वतो वाप्यगाधो यः स वर्धयति पार्थिवान् ।**

**यां दिशं यान्ति च ज्वालास्तस्यां विजयमादिशेत् ॥ ११८ ॥**

सभी ओर से यदि वह अग्नि अगाध है तो राजाओं की वृद्धि करता है और जिस दिशा में उसकी ज्वालाएँ घूम जाती हैं उन दिशाओं की विजय के लिए वह राजा को आदेश देता है ॥ ११८ ॥

**दुर्वर्णाशुचि दुर्गन्धि मक्षिकाखुविडम्बितम् ।**
**आज्यं राज्यच्छिदे प्राहुर्हूयते यच्च भस्मनि ॥ ११९ ॥**

दुर्वर्ण, अशुद्ध एवं दुर्गन्धि युक्त, मक्खी अथवा चूहों के द्वारा जूँठे किए गए घृत से राख में जो हवन किया जाता है उनसे राज्य का विनाश उपस्थित होता है ॥ ११९ ॥

**हीनाधिकप्रमाणाश्च विदीर्णा घुणभक्षिताः ।**
**वातरुग्णद्रुमोत्थाश्च समिधोऽर्थक्षयावहाः ॥ १२० ॥**

कम अथवा अधिक प्रमाण वाली विदीर्ण और टूटी एवं घुन लगी हुई तथा रुग्ण वृक्ष की शाखाओं की समिधाएँ हवनकर्त्ता (= यजमान) के धन का नाश करने वाली होती हैं ॥ १२० ॥

**सगर्भाश्च सपुष्पाश्च विच्छिन्नाग्रास्तृणान्विताः ।**
**कुर्वन्त्युपद्रवं दर्भा दुष्प्रलूनाश्च ये तथा ॥ १२१ ॥**

सगर्भ (ठूँठ), सपुष्प, अग्रभागों से टूटी हुई तथा तृणों से युक्त कुश अर्थात् दुष्प्रलून (नोक से टूटी हुई) कुश के द्वारा कोई न कोई उपद्रव अवश्य होता है ॥ १२१ ॥

**दुष्टानि पांसुकीर्णानि कीटजर्जरितानि च ।**
**बीजानि बीजनाशाय स्युरपुष्टानि यानि च ॥ १२२ ॥**

दुष्ट (दाग युक्त), धूलि धूसरित, कीड़े लगने से जर्जर एवं अपुष्ट अर्थात् चुचुके हुए बीज अन्य बीजों का नाश करते हैं ॥ १२२ ॥

**माल्यं विगन्धि प्रम्लानं न पीतं न सितं च यत् ।**
**कीटैः खण्डितपीतं च न जयाय न वृद्धये ॥ १२३ ॥**

दुर्गन्ध युक्त सड़ी एवं मुर्झाई हुई मालाएँ पूजा के लिए प्रयुक्त नहीं करनी चाहिए जो न पीली हों, न श्वेत हों । वही पूजा के लिए उपयुक्त है जो कीड़ों से खाई गई अथवा पान की गई हैं, वे मालाएँ न जय के लिए ही होती हैं और न वृद्धि के लिए युक्त होती हैं ॥ १२३ ॥

**विस्रावीण्युद्धतान्युग्रखण्डितस्फुटितानि च ।**
**दुर्भिक्षरोगकारीणि प्राहुः पात्राणि सर्पिषः ॥ १२४ ॥**

चूने वाले पात्र, टेढ़े-मेढ़े तथा टूटे फूटे घृत के पात्र घर में दुर्भिक्ष और रोग उत्पन्न करने वाले कहे गये हैं ॥ १२४ ॥

बलिदानप्रकारः

**अशुचौ पतिते च स्यान्मक्षिकाकीटदूषिते ।**
**बलौ च शक्रभक्ते च क्षुन्मारः केशभाजि च ॥ १२५ ॥**

**बलिदान विधान**—इन्द्र की बलि यदि अशुद्ध स्थान में गिर जाए या मक्खियों एवं कीड़ों से दूषित हो जाए अथवा उसमें बाल पड़ें हों तो भुखमरी से मृत्यु का दारुण कष्ट प्रदान करने वाले कहे गए है ॥ १२५ ॥

**यथोदितान्यरूपाणि सर्पिरादीन्यनुक्रमात् ।**
**भवन्ति राष्ट्रपुरयोर्भयाय निखिलान्यपि ॥ १२६ ॥**

उपर्युक्त घृतादि दूषित हविर्द्रव्य क्रमशः राष्ट्र एवं पुर के लिए सब की सब भय प्रदान करने वाली होती है ॥ १२६ ॥

**वितीर्य गन्धमाल्यादीन् देवताभ्यो यथादिशम् ।**
**पुरोधाः स्थपतिर्वाथ प्रीतचित्तः क्षिपेद् बलिम् ॥ १२७ ॥**

सुगन्ध और मालाओं को अपनी-अपनी दिशा के देवों की पूजा के लिए निवेदित कर पुरोहित अथवा स्थपति प्रसन्न मन से बलि प्रदान करे ॥ १२७ ॥

शीलवृत्तविद्यावयस्सम्पन्नानां ब्राह्मणानां सन्तर्पणम्

**ध्वजनैर्ऋतदिग्भागे द्विजमुख्यानुपस्थितान् ।**
**शीलवृत्तयुतान् भूरिगन्धमाल्यैः स्वलङ्कृतान् ॥ १२८ ॥**
**वृद्धान् षट्कर्मनिरतान् सुहृदो वेदपारगान् ।**
**मनःप्रियान् पूर्णगात्रान् समर्थान् सर्वतः शुचीन् ॥ १२९ ॥**
**शुक्लाम्बरान् दर्शनीयान् गौरप्रायान् बलान्वितान् ।**
**अमुण्डाजटिलाक्लीबा(न्?)दीक्षितान् व्याधिताकृशान् ॥१३०॥**

तैः स्वस्तिवाचनम्

**यथेष्टं दक्षिणाभिस्तान् संयोज्याष्टशतेन वा ।**
**साक्षतैः प्रीतमनसः कुसुमैः स्वस्ति वाचयेत् ॥ १३१ ॥**

**शीलसम्पन्न ब्राह्मणों द्वारा स्वस्तिवाचन**—ध्वजा के नैर्ऋत्य दिशा में उपस्थित सच्चरित्र अनेक गन्ध मालाओं से अलंकृत प्रधान ब्राह्मणों को, अध्ययन-अध्यापनादि षट्कर्म में निरत वृद्धों को, वेद के पारदृश्वा विद्वानों को सुहृदों को, मन को प्रिय लगने वाले अविकलाङ्ग, शुद्ध एवं शुभ्र वस्त्र धारण किए हुए, दर्शनीय प्राय: गौरवर्ण वाले, बलशाली, अमुण्ड, अजटिल (जटारहित), अक्लीव, व्याधि आदि से अदुर्बल दीक्षित ब्राह्मणों को यथेष्ट दक्षिणा देकर अथवा १०८ रुपये की दक्षिणा देकर उनको कर्म में नियुक्त कर प्रसन्न मन से उनसे अक्षत एवं पुष्पों से आशीष लेते हुए स्वस्तिवाचन करावे ॥ १२८-१३१ ॥

**प्रतिष्ठाङ्गभूतोऽभिषेकः**

**शक्रं ते चाष्टभिः कुम्भैः सुदृढैर्वारिपूरितैः ।**
**स्वर्चितैरभिषिञ्चेयुर्मूले चाकृष्टमण्डलैः ॥ १३२ ॥**

**ध्वजप्रतिष्ठा के अङ्गभूत अभिषेक का विधान**—फिर वे ब्राह्मण जल से भरे हुए अच्छी प्रकार से अर्चित एवं आकृष्ट मण्डल वाले सुदृढ़, आठ घड़ों से शक्र ध्वज को उसके मूल में स्नान करावे ॥ १३२ ॥

**स्तुतैर्वैजयिकैर्मन्त्रैः स्तुतिभिश्च द्विजोत्तमैः ।**
**राज्यमाघोषयेदेतैरात्मना च महीपतिः ॥ १३३ ॥**

विजय प्रदान करने वाली स्तुतियों से उन उत्तम ब्राह्मणों के द्वारा स्तुति कर लेने पर राजा अपने को राज्य के महीपति की घोषणा करे ॥ १३३ ॥

**कुर्वीत सर्वबन्धानां मोक्षं हिंसां समुत्सृजेत् ।**
**दोषान् जनपदस्यापि दशाहं विषहेत वै ॥ १३४ ॥**

राजा को अपने सभी बन्दियों को बन्धन मुक्त कर देना चाहिए और हिंसा को त्याग देना चाहिए और जनपद के दस दिन तक समस्त दोषियों को माफ कर देना चाहिए ॥ १३४ ॥

**ध्वजदण्डसमुच्छ्रयविधिः**

**सुवासा भूषितः स्नातः सदाचारप्रयत्नवान् ।**
**ध्वजोच्छ्रायं शुचिर्भूपः सबलः प्रतिपालयेत् ॥ १३५ ॥**

**ध्वजोत्थान विधि**—सुन्दर वस्त्र एवं आभूषणादि धारण कर, स्नान कर, सदाचार का आचरण करते हुए अपने बल (= सेना) के सहित (मनसा, वाचा, कर्मणा) पवित्र राजा ध्वजा को उठावें और उसकी प्रतिपालना करें ॥ १३५ ॥

**सोपवासः शुचिः स्नातः प्रयतो विजितेन्द्रियः ।**
**कृताञ्जलिपुटश्चेमं मन्त्रं स्थपतिरुच्चरेत् ॥ १३६ ॥**
**ओं नमो भगवति वागुले सर्वविटपप्रमर्दनि स्वाहा।**
**सुरासुराणां संग्रामे प्रवृत्ते त्वं यथोत्थितः ।**
**तथा नृपस्य देवेन्द्र! जयायोत्तिष्ठ पूजितः ॥ १३७ ॥**

उपवास कर धारण किये हुए, पवित्र, स्नात, शान्त एवं विजितेन्द्रिय स्थपति हाथ जोड़ कर इस मन्त्र का उच्चारण करे—'**ॐ नमो भगवति वागुले सर्वविटपप्रमर्दनि स्वाहा**'। 'हे देवेन्द्र! जिस प्रकार आप सुरों और असुरों के संग्राम में उठ खडे हुए थे, उसी प्रकार पूजित होकर राजा की जय के लिए तैयार होकर उठिए' ॥ १३६-१३७ ॥

**स्तुत्वेति स्थपतिस्तस्य कृत्वा चानुप्रदक्षिणम् ।**
**कारयेद् देवराजस्य ध्वजदण्डसमुच्छ्रयम् ॥ १३८ ॥**

इस प्रकार से स्तुति करने के पश्चात् वह स्थपति उस ध्वजा की प्रदक्षिणा करे और फिर तब उस देवराज इन्द के ध्वज-दण्ड को उठावे ॥ १३८ ॥

**स्वलङ्कृतैः सितस्वच्छमाल्याम्बरविलेपनैः ।**
**पौरैर्जानपदैस्तद्वत् प्रयतैः परिचारकैः ॥ १३९ ॥**
**सालिङ्गझल्लरीशङ्खनन्दिडिण्डिमगोमुखैः ।**
**हृष्टैरन्यैश्च वादित्रैर्वाद्यमानैर्महास्वनैः ॥ १४० ॥**

इस प्रकार भूषणादि से अलंकृत, शुभ्र, स्वच्छ, माला, वस्त्र एवं विलेपनादि से सुसज्जित पुरवासियों, नागरिकों एवं प्रयत्नशील परिजनों के द्वारा झल्ली, शङ्ख, नन्दी, घण्टा, डिण्डिम (डुगडुगी), गोमुख (= तुरही) आदि बाजे बजाने वाले और जोरदार उद्घोष करने वाले अन्य हृष्ट पुरुषों के द्वारा गायन करते हुए ध्वज दण्ड उठाते हैं ॥ १३९-१४० ॥

**गायद्भिश्च नटद्भिश्च गायनैर्नटनर्तकैः ।**
**हृष्टोत्कृष्टोद्गतध्वानैर्गजस्यन्दनवाजिभिः ॥ १४१ ॥**
**तैश्च वादित्रनिनदैस्तैश्च पुण्याहनिस्वनैः ।**
**दृढरज्जुभिराकृष्टं श्रवणे ध्वजमुच्छ्रयेत् ॥ १४२ ॥**

गायकों तथा नृत्य करते हुए नटों, नर्तकों, शोरगुल करते हुए हाथियों, रथों एवं घोड़ों आदि के द्वारा शब्द और निनाद करते हुए पुण्याहवाचन करते हुए दृढ़ रस्सी के द्वारा खींची हुई, श्रवण नक्षत्रों में, ध्वजा को उठाना चाहिए ॥ १४१-१४२ ॥

**यत्नेनोत्थाप्यमानस्य तस्योच्छ्रायगतस्य च ।**
**नृ-पक्षिवाहनादीनां निमित्तान्यवलोकयेत् ॥ १४३ ॥**

यत्नपूर्वक ध्वजा का उन्नयन करते उसके उठाने पर मनुष्यों, पक्षियों और वाहनों आदि के शकुनों (= निमित्तों) को देखना चाहिए ॥ १४३ ॥

**सपरिकरे ध्वजदण्डे यथावदविलम्बिते स्वस्थानस्थिते फलम्**

**कुटनीनिहिताभोगं पताकादर्पणोज्ज्वलम् ।**
**चित्रपट्टस्फुटाटोपमर्केन्दुगुणभूषणम् ॥ १४४ ॥**
**अस्त्रस्तमाल्यालङ्कारमशीर्णच्छत्रमस्तकम् ।**
**अकम्पितमदीर्णाङ्गमदिग्भ्रष्टं सुरेश्वरम् ॥ १४५ ॥**

**परिकरों के सहित ध्वजदण्ड के उत्थान से यथावत् स्वस्थान में स्थित रहने का फल**—कुट्टुनियों में निहिताभोग (?), सर्प के फण के समान टेढ़ी लहराती हुई पताका और दर्पण के समान समुज्ज्वल, चित्रपटों से सुसज्जित, सूर्य एवं चन्द्र के गोलाकार प्रकाश से भूषित, अस्त-व्यस्त रहित मालाओं और अलङ्कारों से भूषित, छत्र एवं मस्तक विशीर्णता ही छल एवं मस्तक वाले, निष्कम्प (= कम्परहित), स्खलन हीन अङ्गों वाले तथा वाञ्छित दिशा की तरफ ही उत्थित देवों के ईश्वर शक्रध्वज के उत्थान से राजा विजय प्राप्त करते हैं ॥ १४४-१४५ ॥

**सममूर्ध्वसमाश्लिष्टमनवक्षतमद्रुतम् ।**
**अविलम्बितविभ्रान्तमृजुमार्गसमुद्गतम् ॥ १४६ ॥**
**इत्थं शक्रध्वजोत्थानं कृतं राज्ञो जयावहम् ।**
**पौरजानपदानां च क्षेमारोग्यसुभिक्षकृत् ॥ १४७ ॥**

बराबरी से ऊपरी भाग परस्पर एक दूसरे से मिला हुआ, सुडौल गोलाई वाले, इधर-उधर न झूलने वाले, शान्त दिखने वाले तथा ऋजु (सीधे) मार्ग पर उठाया हुआ इन्द्र ध्वज हो तो इस प्रकार के शक्रध्वज का उत्थान राजा के लिए विजय देने वाला कहा गया है और पुरवासियों के लिए कल्याणकारी, आरोग्य और सुभिक्ष प्रदान करने वाला कहा गया है ॥ १४६-१४७ ॥

**सतुच्छ्रितस्य शक्रध्वजस्य प्राच्यादिदिगाश्रयेण फलम्**

**यदा शक्रध्वजः प्राचीमुच्छ्रितः प्रतिपद्यते ।**
**तदा मन्त्रिगणक्षत्रनृपप्राग्वासिवृद्धिदः ॥ १४८ ॥**

**ध्वजोत्थान में प्राच्यादि दिशा के आश्रयण का फलाफल विचार**—उठाने पर यदि शक्रध्वज पूर्व दिशा की ओर झुका होता है तो वह मन्त्रिगणों, क्षत्रियों और राजाओं समीपस्थ जनों को वृद्धि प्रदान करने वाला होता है ॥ १४८ ॥

**आग्नेयीं ककुभं याते वर्धन्ते वह्निजीवितः ।**
**प्रारब्धकार्यनिष्पत्तिरयत्नाच्चोपजायते ॥ १४९ ॥**

आग्नेयी (पूर्व-दक्षिण का कोण) दिशा में शक्रध्वज के झुकने पर अग्निजीवी (= बिजली के कर्मचारी या भुजवा) व्यक्ति वृद्धि को प्राप्त होते हैं और प्रारम्भ किये हुए उनके कार्य की बिना यत्न के सिद्धि हो जाती है ॥ १४९ ॥

**दक्षिणां दिशमायाते केतने नमुचिद्विषः ।**
**तदा स्युर्वैश्यलोकस्य पूजाधान्यधनर्द्धयः ॥ १५० ॥**

शक्रध्वज के दक्षिण दिशा में आश्रयण करने पर वैश्य लोगों के लिये पूजा, धान्य एवं धन सम्पन्नता प्राप्त होती हैं ॥ १५० ॥

**सर्वाशासंपदः श्रेष्ठा जायन्ते नैर्ऋताश्रिते ।**
**न स्याद् गर्भो वृथा तद्वत् वधबन्धभयं न च ॥ १५१ ॥**

नैर्ऋत (दक्षिण-पश्चिम कोण) दिशा में शक्रध्वज के आश्रित होने पर सभी जनों की समस्त आशाएँ पूर्ण होती हैं तथा सम्पदाएँ प्राप्त होती हैं और न गर्भ व्यथा होती है और न वध, न (राजा से) बन्धन का भय ही होता है ॥ १५१ ॥

**श्रिते प्राचेतसीमाशामस्मिन्न् शूद्रजयो भवेत् ।**
**क्षुत्तृष्णाग्निभयं न स्याद् वृष्टिरिष्टा च जायते ॥ १५२ ॥**

पश्चिम दिशा में ध्वज के आश्रित होने पर शूद्रों के लिए जय (मङ्गलकारी) कहा गया है और उन्हें क्षुधा, तृष्णा एवं अग्नि का भय नहीं रहता और लोक में अभीष्ट वृष्टि भी होती है ॥ १५२ ॥

**द्रुमसस्यफलर्द्धिः स्यात् केतौ वायोः श्रिते दिशम् ।**
**चतुष्पदविवृद्धिश्च रोगीच्छित्तिश्च जायते ॥ १५३ ॥**

वायु की दिशा में ध्वजा के आश्रयण करने पर वृक्षों और धान्यों एवं फलों की वृद्धि होती है और उसके साथ-साथ चौपाए जानवरों की भी वृद्धि कही गई है। रोग भी नाश हो जाता है ॥ १५३ ॥

**चतुर्णामपि वर्णानां सम्पत् स्यात् सौम्यदिग्गते ।**
**विशेषात् सा द्विजेन्द्राणां तथा सिध्यन्ति चाध्वराः ॥ १५४ ॥**

सौम्य दिशा में ध्वज के आश्रण करने पर चारों वर्णों की सम्मृद्धि होती है । और विशेषरूप से द्विजेन्द्रों की उन्नति होती है और उनका यज्ञ सफल होता है ॥ १५४ ॥

**ऐशीमाशां श्रिते धर्मपरो भवति पार्थिवः ।**
**वृद्धिर्जनपदस्य स्यात् तथा पाषण्डिनामपि ॥ १५५ ॥**

ईशान कोण की दिशा में यदि ध्वज झुकता है तो यह राजा के धर्मपरायण होने की सूचना देता है, इससे जनपद और पाखण्डियों दोनों की ही वृद्धि होती है ॥ १५५ ॥

**रज्जुच्छेदे फलम्**

**यदि किञ्चिद् व्रजेत् पूर्वं रज्ज्वाकृष्टः शतक्रतुः ।**
**विजिगीषोर्नरेन्द्रस्य तदा यात्रा प्रसिध्यति ॥ १५६ ॥**

**इन्द्रध्वज के रस्सी टूटने का फल**—इन्द्रध्वज, रस्सियों के खींचने से पूर्व, यदि कुछ खिसक जाता है तो विजय की इच्छा रखने वाले राजा की विजय यात्रा सफल होती है ॥ १५६ ॥

**भ्रमं भित्वा भूमौ प्रतिष्ठमाने तस्मिन् फलम्**

**प्रतिष्ठां लभते भूमौ भ्रमं भित्वा यदि ध्वजः ।**
**सशैलकाननामुर्वीं तदा जयति पार्थिवः ॥ १५७ ॥**

घुमान का भेदन कर यदि ध्वजा भूमि पर प्रतिष्ठित हो जाती है तो वनों एवं पर्वतों से युक्त पृथिवी को वह राजा जीत लेता है ॥ १५७ ॥

**तस्य स्थानान्तरभ्रंशादिषु फलम्**

**दिक्सर्पणे फलं प्रोक्तमित्यव्यङ्गस्य वज्रिणः ।**
**विपरीतं तदेवोक्तं व्यङ्गस्य निखिलं पुनः ॥ १५८ ॥**

**ध्वज के अन्य स्थान में गिरने का फल**—बिना अङ्ग भङ्ग हुए इन्द्रध्वज के विभिन्न दिशाओं में झुकने (= विसर्पण) का यह फल कहा गया है । अब उसके विपरीत ध्वज के अङ्ग भङ्ग होने पर सभी दोष समझे जाते हैं ॥ १५८ ॥

**इन्द्रध्वजस्य भङ्गे फलम्**

**यदि स्वलङ्कृतः पूर्वं योज्यमानः शतक्रतुः ।**
**उत्क्षिप्तो रज्जुयन्त्रेण स्तोकमर्धे स्थितोऽपि वा ॥ १५९ ॥**
**शय्यायां यदि वा भूमावुत्सङ्गे वा पतत्यसौ ।**
**तदा नृपं राजदारान् कुमारं वा विनाशयेत् ॥ १६० ॥**

**इन्द्रध्वज भङ्ग होने का फल**—यदि अलंकृत होने से पूर्व ही इन्द्रध्वज योज्यमान होते समय रज्जुयन्त्र से थोड़ा सा उठाया हुआ अथवा बीच में स्थित या भूमि अथवा शय्या (couch) में गिर पड़ता है तो राजा और रानियों अथवा राजकुमारों को नष्ट करता है ॥ १५९-१६० ॥

**उत्थितोऽर्धोत्थितो वापि यदि क्षुभ्यति कम्पते ।**
**स्थानान्तरं व्रजेद् वापि सञ्चरेद् वा कथञ्चन ॥ १६१ ॥**
**विगृह्यते तदा भूपो भ्रश्यति स्थानतोऽपि वा ।**
**भयाज्जनपदो वास्य चलत्येव न संशयः ॥ १६२ ॥**

उठाया हुआ अथवा आधा ही उठाया गया ध्वज यदि क्षोभ अथवा प्रकम्पन को प्राप्त होता है, अथवा दूसरे स्थान पर चल देता है अथवा किसी प्रकार से सञ्चरण करता है, तो राजा पीड़ा को प्राप्त करता है, अथवा वह अपने स्थान से च्युत हो जाता है या भय से जनपद को विचलित कर देता है, इसमें संशय नहीं ॥ १६१-१६२ ॥

**आकृष्टासु यदाष्टासु च्छिद्यते कापि रज्जुषु ।**
**अमात्यमरणं तत् स्यादेकैकांशेन निश्चितम् ॥ १६३ ॥**
**मूलमध्याग्रभागे वा प्रोच्छ्रितो यदि भज्यते ।**
**पौरसेनापतिनृपान् क्रमशो हन्त्यसौ तदा ॥ १६४ ॥**

इन्द्रध्वज की आठों रस्सियों के खींचने पर यदि एक भी रस्सी टूट जाती है तो एक-एक अंश से मन्त्री का मरण निश्चित समझना चाहिए । मूल में अथवा मध्य में या अग्रभाग में उठाने पर यदि टूट जाता है तो क्रम से पौरों, सेनापति अथवा राजा को ही समाप्त कर डालता है ॥ १६३-१६४ ॥

**छत्रादीनामिन्द्रध्वजस्य वा पाते फलम्**

**छत्रार्कवेणुगुल्मेन्द्रशीर्षकण्ठगुणा यदि ।**
**पतन्ति भूमाविन्द्रो वा तदा हन्ति महीपतिम् ॥ १६५ ॥**
**नृपो वधमवाप्नोति तैर्भग्नैः पतितैर्धुतैः ।**

**छत्र आदि ध्वजाङ्ग के पतन का फल**—छत्र, सूर्य, वेणु, गुल्म, इन्द्रशीर्ष, कण्ठ की रस्सी अथवा इन्द्र (ये सभी ध्वजाङ्ग हैं) यदि ये भूमि पर गिर पड़ते हैं, तो वे राजा का मरण सूचित करते हैं । इन (ध्वजाङ्गों) के भग्न होने पर या गिर जाने पर या कम्पित होने पर भी राजा की हत्या सम्भावित होती है ॥ १६५-१६६ ॥

**अभग्नैर्विधुतैरेतैः क्षयं व्रजति साधनम् ॥ १६६ ॥**

क्रमशो हन्युरादर्शवैजयन्तीन्दुतारकाः ।
पतन्त्यो दृक्चमूनाथपुरोधःस्त्रीर्महीपते ॥ १६७ ॥

अथ च बिना भग्न हुए भी यदि कम्पन प्राप्त होता है तो साधन (अर्थात् सेना) क्षय को प्राप्त होती है । आदर्श (= शीशा), वैजयन्ती (= माला), इन्दु तथा तारकाओं (ध्वजाङ्गों) के गिरने पर क्रमशः सेनापति, पुरोहित अथवा पुरोहित की स्त्री और राजा की आँख मारी जाती है ॥ १६६-१६७ ॥

माल्यविभूषणादीनां च्युतौ फलम्

माल्यैर्विभूषणैर्यानैः शस्त्रवस्त्रफलाशनैः ।
यान्ति केतुच्युतैरेतै राज्ञस्तान्येव संक्षयम् ॥ १६८ ॥

**माला एवं भूषण आदि के च्युति का फल**—मालाओं, आभूषणों, यानों, शस्त्र या वस्त्र, फल एवं अशन के केतु (= झण्डे) से चित्त गिरने पर राजा की ये ही सब वस्तुएँ अर्थात् माल्य, भूषण आदि विनाश को प्राप्त होते हैं ॥ १६८ ॥

शक्रवेश्मादीनां विशरणे फलम्

शीर्यते शक्रपिटकं कूटेभ्यः शक्रवेश्म वा ।
यस्यां ककुभि तत्राहुर्हानिं पूर्वे विपश्चितः ॥ १६९ ॥

**शक्रवेश्म आदि के गिरने का फल**—चोटी (कूटों) से शक्रपिटक ही टूट जाए अथवा शक्रवेश्म ही यदि टूट जाता है तो जिस दिशा में यह पतित होता है उस दिशा में अवश्य हानि होती है—ऐसा प्राचीन शास्त्रकारों का मत है ॥१६९॥

मृगालीलकटादीनां भङ्गे फलम्

भङ्गे मृगालीलकटाक्षार्गलानामनुक्रमात् ।
पीडा सञ्जायते वेश्यानुपतिश्रेष्ठिरक्षिणाम् ॥ १७० ॥

**मृगाली एवं लकट आदि के च्युत होने का फल**—ध्वज की मृगाली, लकट, अक्ष अथवा ध्वज की अर्गलाओं के भङ्ग होने पर क्रमशः वेश्या, राजा, श्रेष्ठि (= सेठ) और रक्षकों को पीड़ा उत्पन्न होती है ॥ १७० ॥

भग्ना भ्रमाक्षपादैर्वा मल्लमातृकुमारिकाः ।
राष्ट्रं हन्युर्नरेन्द्रस्य प्रियामातृसुतान् क्रमात् ॥ १७१ ॥

ध्वज के भ्रम, अक्ष और पादों के द्वारा मल्ल, शक्रमाता अथवा कुमारिकाएँ यदि भग्न हो जाती हैं तो ये क्रमशः राजा के राष्ट्र को, उसकी प्रिया को अथवा पुत्रों को समाप्त कर देता है ॥ १७१ ॥

ध्वजे निर्घातादीनां पाते फलम्

**निर्घातोऽशनिरुल्का वा ध्वजे यदि पतेत तदा ।**
**अनावृष्टिभयं राज्ञः पराजयमथादिशेत् ॥ १७२ ॥**

**ध्वज के ऊपर विद्युत् आदि गिरने का फल**—निर्घात (= वज्र), अशनि (विद्युत्) अथवा उल्का यदि ध्वजा पर गिर पड़ें, तो अनावृष्टि का भय होता है और राजा की पराजय को सूचित करता है ॥ १७२ ॥

शक्रोपरि मक्षिकाभिर्मधुच्छत्रकरणे फलम्

**कुर्वन्ति मक्षिका शक्रे मधुच्छत्रं समुच्छ्रिते ।**
**यस्मिंस्तत्र द्विषद्रोधं षण्मासाच्चादिशेत् पुरे ॥ १७३ ॥**

**ध्वजा के ऊपर मधु मक्खियों के छत्ते का फल**—ध्वजा के उठाने पर यदि मधु मक्खियाँ मधुछत्र (= छत्ता) बनाती हैं या उस पर भनभनाने लगती हैं तो छह महीने के अन्दर नगर पर शत्रुओं की चढ़ाई को सूचित करता है ॥ १७३ ॥

शक्रपार्श्वे मक्षिकादीनां भ्रमणे फलम्

**मक्षिका वा खगा वा चेद् भ्रमेयुः पार्श्वतो हरेः ।**
**प्रदक्षिणा बहिस्थानमासाद्याहुस्तदा मृतिम् ॥ १७४ ॥**

**शक्रध्वज के आसपास मधुमक्खियों के घूमने का फल**—मधु मक्खियाँ अथवा अन्य पक्षी ध्वज के पास यदि भ्रमण करें अथवा बाहरी स्थान से इस ध्वज की प्रदक्षिणा करें तो मृत्यु की चेतावनी कही गई है ॥ १७४ ॥

शक्रमूर्धनि श्येनादीनां सङ्गे फलम्

**गृध्रश्येनकपोताश्चेल्लीयन्ते शक्रमूर्धनि ।**
**तदा कुर्वन्ति दुर्भिक्षविग्रहक्षितिपक्षयान् ॥ १७५ ॥**

**इन्द्रध्वज के ऊपर बाज के मँडराने का फल**—गीध, बाज, कपोत यदि शक्रध्वज के मस्तक पर उड़ते रहते हैं तो दुर्भिक्ष, विग्रह (= सन्धिविच्छेद) और राजा का विनाश प्राप्त होता है ॥ १७५ ॥

वायसादीनां सङ्गे फलम्

**यदि केतौ निलीयन्ते कुररोलूकवायसाः ।**
**राज्ञः क्रमात् तदा हन्युर्मन्त्रिपुत्रपुरोधसः ॥ १७६ ॥**

**कौआ आदि के मँडराने का फल**—यदि ध्वजा में उलूक और कौवे उड़ते हुए दिखाई पड़ते हैं तो क्रमशः राजा के मन्त्री, पुत्र अथवा पुरोहित के नाश (= कष्ट) की सूचना देते हैं ॥ १७६ ॥

**मयूरो यदि वा हंसः समाश्रयति वासवम् ।**
**समस्तलक्षणोपेतस्तदा स्यान्नृपतेः सुतः ॥ १७७ ॥**

**मयूरादि के बैठने का फल**—यदि इन्द्रध्वज पर मयूर अथवा हंस आकर बैठ जाता है तो राजा को समस्त लक्षणों से युक्त पुत्र प्राप्त होता है ॥ १७७ ॥

**चक्री बलाका हंसी वा यदि केतौ निलीयते ।**
**तदा नरपतिर्भार्यामवाप्नोत्यतिसुन्दरीम् ॥ १७८ ॥**

चकवी, बलाका (बक पंक्ति) या हंसिनी आदि इन्द्रध्वज पर बैठ जाते हैं तो राजा अत्यन्त सुन्दर भार्या को प्राप्त करता है ॥ १७८ ॥

**खगैः सुवृष्टिर्जलजैः सुभिक्षं स्यात् फलाशिभिः ।**
**विष्ठाशिभिश्च दुर्भिक्षं भीतिः स्यात् पिशिताशिभिः ॥ १७९ ॥**

**जलज पक्षियों के मँडराने का फल**—जलज पक्षियों से इन्द्रध्वज के समाश्रित होने पर सुवृष्टि होती है और फल के खाने वाले पक्षियों से समाश्रित होने पर सुभिक्ष और विष्टा खाने वाले पक्षियों से दुर्भिक्ष समझना चाहिए और मांसाहारी खगों से डर पैदा होता है ॥ १७९ ॥

### चित्रपटे सुराद्याकाराणां यथावन्निवेशने फलम्

**यदि चित्रपटन्यस्ताः सुरयक्षोरगोत्तमाः ।**
**विचित्राकृतिभिर्युक्ता वाहनायुधभूषणैः ॥ १८० ॥**
**अष्टौ च ककुभो मूर्ताः प्रनृत्ताश्चाप्सरोगणाः ।**

**ध्वज चित्रपट पर देवों के यथावत् चित्रण का फल**—यदि चित्र पट पर विचित्र आकृतियों वाले वाहन, आयुध और आभूषणों से सुसज्जित देवता, यक्ष और उरग चित्रित होते हैं और आठों दिशाएँ मूर्तिमती-सी चित्रित होती है तथा नाचते हुए अप्सराओं के समूह चित्रित होते हैं तो भवन स्वामी के लिए यह चित्रावली अत्यन्त शुभ होती है ॥ १८०-१८१ ॥

**सग्रहास्तारका मेघाः स्फीताः नद्यस्तथाब्धयः ॥ १८१ ॥**
**वाप्यः पङ्केरुहच्छन्ना हंसवन्ति सरांसि च ।**
**फलपुष्पावतंसानि वनान्युपवनानि च ॥ १८२ ॥**
**देवतायतना(न्याद्य?न्यद्रि)गोपुराणि पुराणि च ।**
**भवनान्यतिशुभ्राणि शयनासनवन्ति च ॥ १८३ ॥**
**प्रहृष्टाः पार्थिवा भृत्या बलवाहनशालिनः ।**

**पौरा जानपदा लोकाः क्रीडाभाजः कुमारकाः॥ १८४ ॥**

ग्रहों के सहित तारिकाएँ, मेघ, समुद्रगामिनी नदियाँ और सागर, कमलों से आच्छन्न वापियाँ, हंसों से युक्त तालाब, फल एवं पुष्पों से सुशोभित वन और उपवन, मन्दिर, पर्वत, गोपुर तथा पुर, शयन एवं आसन से युक्त अति शुभ्र भवन, हृष्ट एवं प्रसन्न राजा, बल (= सेना) और वाहन से शोभित नौकर, पुरवासी एवं जनपद निवासी मनुष्यगण क्रीड़ा करते हुए राजकुमारों का इन्द्रध्वज पर चित्रण शुभ एवं कल्याणकारी होता है ॥ १८२-१८४ ॥

**चत्वारो मुदिता वर्णा नटनर्तकशिल्पिनः ।**
**सगोव्रजलतागुल्मद्रुमौषधिभृतो नगाः ॥ १८५ ॥**

प्रसन्न मुद्रा में ब्राह्मणादि चारों वर्ण, नट, नर्तक और कारीगर, गौओं के समूहों, लताओं, गुल्मों, वृक्षों एवं औषधियों को धारण करने वाले पर्वतों का यथावत् चित्रण शुभ होता है ॥ १८५ ॥

**मृगपक्षिगणाः शस्ता मङ्गलान्यखिलानि च ।**
**विचित्रापानवसुधाः फलभक्षाश्च पक्षिणः ॥ १८६ ॥**
**यथानिवेशं शोभन्ते तदा देशे पुरेऽपि च ।**
**क्षेमारोग्यसुभिक्षाणि जयं राज्ञश्च निर्दिशेत् ॥ १८७ ॥**

उत्तम मृग एवं पक्षी तथा समस्त माङ्गलिक वस्तुएँ, चित्र विचित्र झरनों की जमीनें, फल खाने वाले पक्षी आदि के यथावत् चित्रण शुभ कहे गये हैं । इससे देश एवं पुर में क्षेम, आरोग्य और सुभिक्ष निर्दिष्ट होता है और राजा को भी विजय प्राप्त होती है ॥ १८६-१८७ ॥

### एतेषां कुट्टनपातच्छेदप्लोषादिषु फलम्

**एतेषां कुट्टने पाते छेदे नाशेऽथवा हृतौ ।**
**प्लोषे वाप्यशुभं वाच्यं यथायोनि यथादिशम् ॥ १८८ ॥**

**चित्रपट्ट के कुट्टन, च्छेदन एवं पातादि से प्राप्त फलाफल का विचार—** इनके कुट्टन, पात, छेद एवं नाश या अपहरण अथवा दग्ध होने पर जिस योनि में अथवा जिस दिशा में यह कुट्टनादि होता है तो उसका अमङ्गल करता है ॥१८८॥

### चित्रपटस्य पातादिषु फलम्

**स्थिते वा पतिते वापि चित्रपट्टे भुवस्तले ।**
**उपप्लवो नरेन्द्रस्य भवेज्जनपदस्य च ॥ १८९ ॥**

चित्रपट के पृथ्वी पर स्थित होने या गिर जाने पर राजा का तथा जनपद का उपप्लव उपस्थित होता है ॥ १८९ ॥

**ध्वजोच्छ्रयविधौ नरादीनां चेष्टादिभिर्निमित्तावलोकनम्**

**राजते यद्यलङ्कारः सकलो यावदुत्सवम् ।**
**अनस्तोऽविप्लुतश्चोर्वीं तदा कृत्स्नां जयेन्नृपः ॥ १९० ॥**

**ध्वजोत्थान विधि में मनुष्यों की चेष्टा आदि निमित्तों का अवलोकन**—जब तक इन्द्रध्वज का उत्सव होता है, तब तक यदि सभी अलङ्करण सुशोभित रहते हैं, तो राजा बिना विप्लव (दंगा-फसाद) आदि के सम्पूर्ण पृथ्वी पर विजय प्राप्त करता है ॥ १९० ॥

**नटनर्तकसङ्घेषु प्रनृत्यसु पठत्सु च ।**
**शुभे शुभं समादेश्यमितरस्मिन्नशोभनम् ॥ १९१ ॥**
**ये वर्गाः सम्प्रहृष्यन्ति मङ्गल्या गजवाजिनः ।**
**सुवेषचेष्टालङ्काराः शुभं तेष्वादिशेद् ध्रुवम् ॥ १९२ ॥**

नटों और नर्तकों के नृत्यों एवं वादनों पर शुभ में शुभ का समावेश करना चाहिए और अशुभ में अशुभ का । मङ्गलकारी हाथी (गज) और घोड़े यदि सम्प्रहृष्ट होते हैं और सुन्दर वेष में यदि उनकी चेष्टाएँ अलङ्कारों से युक्त होती हैं तो उन वर्गों में शुभ का शीघ्र ही आदेश करना चाहिए ॥ १९१-१९२ ॥

**अमङ्गलैषिणो ये स्युर्विकृता दीनचेतसः ।**
**पुरुषा योषितो वापि निर्दिशेत् तेषु वैशसम् ॥ १९३ ॥**

अमङ्गल शब्द करने वाले, विकृत एवं दीन चेष्टा करने वाले यदि पुरुष अथवा स्त्री ही क्यों न हों उनमें अमङ्गलकारी मृत्यु का निर्देश उपस्थित होता है ॥ १९३॥

**प्रभिन्नकरटा नागा बृहन्तस्तोयदा इव ।**
**अदीनाश्च स्वतन्त्राश्च नृपतेर्विजयावहाः ॥ १९४ ॥**

मेघों के समान बड़े-बड़े मद स्रावी दैन्य रहित और स्वतन्त्र हाथी राजा के विजय सूचना देते हैं ॥ १९४ ॥

**आलिखन्तः खुरैः क्षोणीं दक्षिणैर्हृष्टचेतसः ।**
**हेषमाणा हयाश्चापि शंसन्ति नृपतेर्जयम् ॥ १९५ ॥**

अपने दक्षिण खुरों से पृथ्वी खोदने वाले, हृष्ट-चित्त, हिनहिनाने वाले घोड़े भी राजा के विजय की सूचना देते हैं ॥ १९५ ॥

तदानीं वृष्टिपाते फलम्

**सतडिद्गर्जिताम्भोदा वृष्टिश्चेज्जायते तदा ।**
**महीपतेर्जयं विद्यात् सुभिक्षं क्षेममेव च ॥ १९६ ॥**

**उत्सव के समय वृष्टि का फल**—यदि उस समय बिजली चमके और मेघ गरजना करें तथा वृष्टि होवे तो राजा की विजय, प्रजा में सुभिक्ष और सभी का कल्याण जानना चाहिए ॥ १९६ ॥

उत्सवान्तिमदिवसकृत्यम्

**अथार्धरात्रे सम्प्राप्ते रोहिण्यां दशमेऽहनि ।**
**शक्रस्य पातमिच्छन्ति मुनयः प्रतिवत्सरम् ॥ १९७ ॥**

**शक्रध्वज उत्सव के अन्तिम दिवस का कृत्य**—अब इसके बाद आधी रात के समय उत्सव आरम्भ होने के दसवें दिन रोहिणी नक्षत्र में मुनि लोग प्रति वर्ष शक्रध्वज के उत्सव की समाप्ति का विधान करते हैं ॥ १९७ ॥

**ततः समाजे निर्वृत्ते शक्रकेतौ प्रतिष्ठिते ।**
**गन्धतोयैश्च पुष्पैश्च विदधीताम्बुसेवनम् ॥ १९८ ॥**

इसके बाद समस्त भीड़ के चले जाने पर और शक्रध्वज के प्रतिष्ठित हो जाने पर पुरोहितों को गन्ध, जल और पुष्पों से वहाँ जलसिञ्चन करना चाहिए ॥ १९८ ॥

**अमेध्यैर्वस्त्रखण्डैर्वा भस्मकेशास्थिकर्दमैः ।**
**यदा क्रीडन्ति मनुजा दुर्भिक्षं जायते तदा ॥ १९९ ॥**

इस समय यदि लोग अशुद्ध वस्त्रों के टुकड़ों से, भस्म, केश एवं हड्डी या कीचड़ आदि से क्रीडा करते हैं तो लोक में दुर्भिक्ष पड़ जाता है ॥ १९९ ॥

**विप्राः प्राच्यां विल(म्पे?म्बे)युः पतन्तं वासवध्वजम् ।**
**सुभिक्षं क्षेममारोग्यमन्यथा स्याद् विपर्ययः ॥ २०० ॥**

अतः गिरते हुए शक्रध्वज को ब्राह्मणजन प्राची दिशा से अवलम्ब प्रदान करें क्योंकि ऐसा करने पर सुभिक्ष, क्षेम एवं प्रजाजनों में आरोग्य होता है अन्यथा इसके विपरीत चेष्टा करने पर उल्टा फल प्राप्त होता है ॥ २०० ॥

इन्द्रस्थानभूतस्य क्षेत्रस्य मानादिकम्

**अष्टाङ्गोक्तो ध्वजाङ्गे यो विशेषः सोऽथ कथ्यते ।**
**पुरे ब्रह्मपुरात् प्राच्यामिन्द्रस्थानं विधीयते ॥ २०१ ॥**

**इन्द्रस्थान की भूमि का मानादि कथन**—अष्टाङ्ग स्थापत्य में ध्वजा के सम्बन्ध में जो कहा गया है अब उसका प्रतिपादन करते हैं—पुर (= नगर) में, ब्रह्मस्थान से प्राची दिशा में 'इन्द्र के स्थान' का विधान करना चाहिए ॥ २०१॥

**क्षेत्रप्रमाणेन ध्वजायामादिकल्पनम्**

**मात्राशयेन हस्तेन प्रमाणं तस्य कीर्तितम् ।**
**चतुःषष्टिसमायामं चतुरस्त्रं समन्ततः ॥ २०२ ॥**

**क्षेत्र प्रमाण से ध्वजा के आयामादि की कल्पना**—उसका मात्राशय-हस्त से प्रमाण करना कहा गया है । चौंसठ वास्तु पद के समान चारों ओर उस स्थान को चौकोर बनाना चाहिए ॥ २०२ ॥

**प्रतिवत्सरं केतुप्रमाणस्य वर्धनम्**

**एकाशीतिपदेनैव भजेत् क्षेत्रं विभागतः ।**
**क्षेत्रस्यार्धेन कुर्वीत ध्वजायामं प्रमाणतः ॥ २०३ ॥**

**प्रत्येक वर्ष इन्द्रध्वज के प्रमाण का वर्धन**—प्रत्येक वर्ष झण्डे के प्रमाण की वृद्धि करना और उसका क्षेत्र इक्यासी वास्तु पदों से विभाजित करना चाहिए । प्रमाण से क्षेत्र के आधे भाग से ध्वजा की लम्बाई बढ़ानी चाहिए ॥ २०२-२०३॥

**ततो वृद्धिर्विधातव्या हस्ते हस्तेऽङ्गुलं बुधैः ।**
**अर्धाङ्गुलं वा वृद्धिः स्याद् ध्वजस्येन्द्रस्य कुत्रचित् ॥ २०४ ॥**

उसके बाद विद्वान् स्थपति के द्वारा हाथ-हाथ पर एक-एक अङ्गुल की वृद्धि करते जाना चाहिए । अथवा कहीं-कहीं पर इन्द्रध्वज की आधी अङ्गुल वृद्धि करनी चाहिए ॥ २०४ ॥

**तावद् वृद्धिर्विधातव्या यावत् क्षेत्रसमोऽङ्गुलैः ।**
**ततः प्रमाणमाद्यं यत् तत् पुनर्विनियोजयेत् ॥ २०५ ॥**

केतु में यह वृद्धि तब तक करनी चाहिए जब तक अङ्गुलों से क्षेत्र बराबर न हो जावें तब उसके बाद जो पहले प्रमाण (= नाप) था, उसकी फिर पुनः विनियोजना करनी चाहिए ॥ २०५ ॥

**प्रमाणमङ्गुलैः केतोः स्याच्चत्वारिंशता मितम् ।**
**तस्य संवत्सरे वृद्धिः कर्तव्या द्व्यङ्गुलैर्बुधैः ॥ २०६ ॥**

केतु (= झण्डे) का प्रमाण चालिस अङ्गुलों के बराबर माना गया है अतः विद्वान् स्थपति को उसकी एक वर्ष में दो अङ्गुलों की वृद्धि करनी चाहिए ॥२०६॥

**ब्रह्मस्थाने च कुर्वीत ब्रह्मावर्तं विचक्षणः ।**
**ब्रह्मणोऽनन्तरं प्राच्यां भवेद् दैवतमर्यमा ॥ २०७ ॥**

नगर के ब्रह्म स्थान में कुशल स्थपति को ब्रह्मावर्त करना चाहिए और ब्रह्मा के तुरन्त बाद प्राची दिशा में अर्यमा देवता का विधान होती है ॥ २०७ ॥

### यन्त्रपादकुमारिकादीनां निवेशनस्थानानि

**तत्र यन्त्रस्य पादौ स्तः समुच्छ्रायेण षट्प(मौ?दौ)।**
**तस्यैव पश्चिमे भागे मित्रो भवति देवता ॥ २०८ ॥**
**ततः प्रभृति यन्त्रस्य वेधो नतो भवेत् ।**
**पूर्वापरं च निम्नं स्यादेषं यन्त्रविधिः स्मृतः ॥ २०९ ॥**

**इन्द्रध्वज के यन्त्रपाद एवं कुमारिकादिकों के स्थान**—वहाँ पर यन्त्र के दोनों पाद ऊँचाई में छह पद वाले होने चाहिए और उसी के पश्चिम भाग में मित्र देवता का सन्निवेश स्थान कहा गया है । उसके बाद यन्त्र का वेध और नति (= झुकाव) कहा गया है । वस्तुतः पूर्व और पश्चिम में ध्वज नीचा होना चाहिए—यह यन्त्र की विधि कही गई है ॥ २०८-२०९ ॥

**यन्त्रस्य पश्चिमे भागे वरुणो दैवतं भवेत् ।**
**वरुणस्य पदान्ते च वंशस्थे द्वे कुमारिके ॥ २१० ॥**

यन्त्र के पश्चिम भाग में (वास्तुपद के) वरुण देवता का स्थान कहा गया है । वरुण के पदान्त भाग के वंश में दो कुमारियों का सन्निवेश स्थान होता है ॥ २१०॥

**खानिले(?) चतुरो हस्तान् दशहस्तोच्छ्रिते च ते ।**
**रुद्रस्थाने च कर्तव्या कुमारी सुप्रतिष्ठिता ॥ २११ ॥**

आकाश स्थान में उनका प्रमाण चार हाथों के विस्तार से करना चाहिए और दश हस्त की ऊँचाई करनी चाहिए । रुद्र के स्थान में तीसरी कुमारी को सुप्रतिष्ठित करना चाहिए ॥ २११ ॥

**सोमयोगे चतुर्थी स्यादापभागे च पञ्चमी ।**
**षष्ठी च सवितुर्भागे यमभागे च सप्तमी ॥ २१२ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे इन्द्रध्वजनिरूपणं नाम सप्तदशोऽध्यायः ॥ १७ ॥**



वास्तु चक्र के सोम क्षेत्र में चौथी कुमारी का, जल (आप) भाग में पाँचवीं कुमारी का, सूर्य के भाग में छठी कुमारी का और यम के भाग में सातवीं कुमारी की प्रतिष्ठा करने का विधान कहा गया है ॥ २१२ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'इन्द्रध्वजनिरूपण' नामक सत्रहवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ १७ ॥**



## समीक्षात्मक टिप्पणी

### इन्द्रध्वज निरूपण (श्लोक १-२१२)

**बृहतसंहिता इन्द्रध्वजसम्पदध्याय** (४३.१-६८) के अनुसार—इन्द्रध्वज का निरूपण इस प्रकार किया गया है—

ब्रह्मणमूचरमरा भगवन् शक्ताः स्म नासुरान् समरे ।
प्रतियोधयितुमतस्त्वां शरण्यशरणं समुपयाताः ॥ १ ॥
......... ........... ............. .......... ........
उपरिचरवसुप्रवर्तितं नृपतिभिरप्यनुसन्ततं कृतम् ।
विधिमिममनुमन्य पार्थिवो न रिपुकृतं भयमाप्नुयादिति ॥ ६८ ॥

**इन्द्रध्वज उत्पत्ति का ऐतिह्य**—सभी देवताओं ने ब्रह्माजी से कहा—हे भगवन्! राक्षसों के साथ युद्ध करने के लिये हम लोग समर्थ नहीं हैं, अतः हम सभी आपकी शरण लेते हैं ।

**ब्रह्मा का देवताओं को उपदेश**—भगवान् ब्रह्मा ने देवताओं से कहा—आप लोग श्रीनारायण के पास जाइए । क्षीरसागर में भगवान् नारायण विराजमान हैं वे एक केतु (ध्वजा) आपको देंगे जिसको देखकर राक्षसगण युद्ध में नहीं ठहरेंगे ।

इस प्रकार वर प्राप्त कर इन्द्र के साथ देवताओं ने क्षीरसागर जाकर भगवान् नारायण की स्तुति की—श्रीवत्स चिह्न से युक्त, कौस्तुभ मणि के किरणों से प्रकाशित वक्षःस्थल वाले, लक्ष्मी के नाथ, अचिन्त्य, अनौपम्य एवं सभी प्राणियों में स्थित होने के कारण सम, सभी प्राणियों के द्वारा बड़ी कठिनाई से जानने योग्य होने के कारण सूक्ष्म, परमात्मा, अनादि (उत्पत्ति रहित), विष्णु (व्यापक)

एवं अज्ञात धन वाले आपको नमस्कार है। इस तरह इन्द्र के साथ देवताओं से संस्तुत उन देव नारायण ने संतुष्ट होकर राक्षस और देवताओं के स्त्रियों के मुखरूपकमल वन में क्रम से चन्द्र और सूर्य के समान (राक्षस के स्त्रियों के मुखकमल म्लान करने के कारण चन्द्र और देवताओं की स्त्रियों के मुखकमल को प्रफुल्लित करने के कारण सूर्य के समान) ध्वज देवताओं को दिया।

**उस ध्वजा का स्वरूप**—विष्णु के तेज से उत्पन्न, आठ चक्रों से युक्त, प्रकाशित तथा मणियों से भूषित रथ पर स्थित और शारदीय सूर्य के समान प्रकाशमान ध्वज पाकर इन्द्र बहुत प्रसन्न हुये।

**ध्वजा को प्राप्त कर इन्द्र द्वारा उसका प्रयोग**—किङ्किणियों (= सूक्ष्म घण्टाओं) के समूह से विभूषित, माला, छत्र, घण्टा और पिटक (ध्वजा में लगाने हेतु एक प्रकार के आभूषण) से युक्त उस उन्नत ध्वज के प्रयोग के द्वारा युद्ध में शत्रु की सेना का नाश किया।

**इन्द्र द्वारा महाराज वसु को दण्ड (ध्वजा) प्रदान**—इन्द्र ने ऊपर गमन करने वाले (भूमि पर रहते हुये भी स्वर्ग जाने वाले) चेदि देश के महाराज वसु को एक बाँस का दण्ड दिया, जिसका विधिपूर्वक चेदिपति नरेश ने पूजन किया।

**इन्द्र की प्रसन्नता और ध्वजा का माहात्म्य**—महाराज वसु की पूजा से प्रसन्न होकर इन्द्र ने कहा—महाराज वसु की तरह जो राजा ध्वज का उत्सव करेगा वह अनेक प्रकार के रत्नों से सम्पन्न होकर पृथ्वी पर आदेश करने वाला राजा होगा। उस राजा के प्रजागण हर्षयुक्त, भय एवं रोग से रहित और बहुत धान्यों से सम्पन्न होंगे तथा संसार में उत्सवजन्य कारणों के द्वारा ध्वजा ही शुभाशुभ फल कहेगा।

**ध्वजा का विधान**—पूर्व काल में इन्द्र की आज्ञा से बल की वृद्धि और विजय की इच्छा रखने वाले राजाओं ने जिस प्रकार उस ध्वज का पूजन किया, शास्त्र से लेकर उसको मैं कहता हूँ—शुभ करण एवं शुभ दिन, शुभ नक्षत्र, शुभ शकुन और शुभ मुहूर्त में ज्योतिषी और बढ़ई वन में गमन करे।

**इन्द्रध्वज के लिए अशुभ लकड़ी**—उद्यान (फुलवाड़ी), देवालय, श्मशान, वल्मीक ( वमई = दिवड़ा) मार्ग तथा यज्ञ भूमि में उत्पन्न, कुबड़े एवं खड़े ही सूख गये, काँटेदार, लताओं से आच्छादित वृक्ष से युक्त, बहुत पक्षियों के घोंसले वाले, वायु से टूटे हुये, आग में जले हुये और स्त्रीलिङ्ग नाम वाले (कदली, वदली आदि) वृक्षों के अतिरिक्त शुभ वृक्ष इन्द्र ध्वज के लिये काटना चाहिए।

**ध्वजा हेतु शुभ वृक्ष का कथन**—अर्जुन (काहू), अजकर्ण, प्रियक, धव

और गूलर ये पाँच वृक्ष ध्वज के लिये शुभ कहे गए हैं । इनमें से एक या अन्य शुभ लक्षणों से युक्त वृक्ष की लकड़ी लाए ।

श्वेत या काली भूमि में उत्पन्न (शुभ लक्षण वाले) वृक्ष के पास जाकर ब्राह्मण जनरहित स्थान में रात्रि के समय विधिपूर्वक पूजन के बाद वृक्ष को स्पर्श करके मन्त्रोच्चार करे ।

**दो श्लोकों द्वारा मन्त्र प्रदर्शन**—इस वृक्ष पर जितने जीव-जन्तु हैं सभी के लिये शुभ हो, आप को मैं नमस्कार करता हूँ, इस बलि को ग्रहण करके आप सभी दूसरी जगह वास करें । हे प्रधान वृक्ष! आपका शुभ हो, इन्द्र ध्वज के लिये राजा आपको प्राप्त करने की इच्छा कर रहा है । अत: आप मेरी की हुई पूजा ग्रहण करें ।

इसके बाद सूर्योदय के समय उत्तर या पूर्व मुख होकर वृक्ष को काटे । परशु (फरसा = कुल्हाड़ी) का जर्जर शब्द निकलना शुभ नहीं है, किन्तु मधुर और घने शब्द का निकलना शुभ है ।

**पतित वृक्ष के शुभाशुभ फल का कथन**—अखण्डित या टेढ़ा न होकर और पूर्व या उत्तर दिशा में वृक्ष का गिरना राजा की विजय का सूचक होता है। इनसे भिन्न लक्षण सम्पन्न होकर (खण्डित या वक्र होकर, आग्नेय, दक्षिण, नैर्ऋत्य, पश्चिम या वायव्य कोण में) वृक्ष का गिरना अशुभ है । इस वृक्ष के आगे से चार अङ्गुल और मूल से आठ अङ्गुल काटकर यष्टि दण्ड को जल में डाल दे। बाद में जल से निकाल कर उसको गाड़ी या मनुष्यों के द्वारा नगर के द्वार पर लाये ।

**लकड़ी आहरण के काल का फल**—लकड़ी लाने के समय यदि गाड़ी का आरा टूट जाये तो सेनाओं में भेद उत्पन्न होता है और नेमि (हाल) यदि टूट जाय तो सेनाओं का नाश होता है, यदि अक्ष (= धुरा) टूट जाय तो धन का नाश सम्भावित है और यदि अणि (कुलावा) टूट जाय तो बढ़ई का विनाश होता है ।

**यष्टि के प्रवेश का काल**—भाद्र शुक्ल अष्टमी के दिन नगर में रहने वाले नागरिक, ज्योतिषी, मन्त्री, कञ्चुकी और सुन्दर वेष धारण कर प्रधान ब्राह्मणों के साथ होकर राजा नगरवासियों के द्वारा नवीन वस्त्र से ढकी हुई, माला, गन्ध और धूपों से उस यष्टि को शङ्ख और तुरही के निनाद के साथ पुर में प्रवेश कराए ।

**नगर की साज-सज्जा**—मनोहर, पताका, तोरण और वनमालाओं से भूषित, हर्षित मनुष्यों से युक्त, शोधित और सजाये हुये मार्गों से युक्त, सुन्दर वेष वाली वेश्याओं से सम्पन्न, सजी हुई दुकानों से युक्त, पुण्याहवाचन और वेद के

शब्दों से गुञ्जायमान, नट एवं नाचने वाले और गान विद्या के जानकार जनों से व्याप्त नगर का चतुष्पथ (चौराहा) होना चाहिये ।

**ध्वजा की पताका के वर्ण का फल**—उस नगर में श्वेत वर्ण की पताका विजय की सूचक, पीत वर्ण की पताका रोग देने वाली होती है एवं अनेक वर्ण की पताका विजय कराने वाली कही जाती है और रक्त वर्ण की पताका शस्त्र प्रकोप उत्पन्न करती है ।

**ध्वज यष्टि के प्रवेश के समय शुभाशुभ फल**—नगर में प्रवेश के समय ही यष्टि को यदि हाथी, घोड़ा आदि कोई जीव गिरा दे तो भय उत्पन्न करती है, अत: उस समय बालक तालियाँ बजावें या गायों में यदि परस्पर लड़ाई हो तो युद्ध की सूचक होती है ।

फिर बढ़ई विधिपूर्वक यष्टि को छीलकर खराद पर चढ़ावे और राजा आगे आने वाली एकादशी को जागरण व्रत करे । श्वेत वस्त्र धारण कर पगड़ी बाँधे हुए पुरोहितगण इन्द्र-दैवत एवं विष्णु देवताक मन्त्रों से अग्नि में हवन करें और सांवत्सरिक (= ज्योतिषी) उस हवन की अग्नि में शुभाशुभ चिह्नों को देखें ।

**शुभाशुभ अग्नि का लक्षण**—अभिलषित द्रव्यों के सदृश, सुगन्धयुक्त, निर्मल एवं घना और लपटदार अग्नि शुभ करने वाली होती है और इससे भिन्न लक्षण वाली अग्नि अशुभ उत्पन्न करने वाली होती है ।

**योगयात्रा ग्रन्थ में अग्नि के शुभ लक्षण**—यदि स्वाहा के अवसर पर (पूर्णाहुति देने के) समय स्वयं प्रज्वलित शिखा वाली निर्मल अग्नि हो और दक्षिणावर्त क्रम से जलती हुई शिखा वाली अग्नि हो तो राजा गङ्गा एवं यमुना के जलरूपी सुन्दर हार वाली तथा समुद्र रूपी मेखला वाली पृथ्वी को अपने वश में कर लेता है, अर्थात् वह सम्पूर्ण पृथ्वी का एकच्छत्र राजा होता है ।

**अग्नि के अन्य शुभ लक्षण**—यदि हवन के समय सुवर्ण, अशोक, कुरण्टक एवं वैदूर्यमणि अथवा नीलकमल के समान कान्ति वाली अग्नि हो तो हवन कराने वाले राजा के भवन में ठहरने के लिये रत्नों की किरणों से नष्ट होकर अन्धकार अवकाश नहीं पाता है ।

**अग्नि के शब्द का शुभफल**—यदि अग्नि में समुद्र, मेघ, हाथी या नगाड़े के समान शब्द हो तो उस राजा के चलने के समय मदमत्त हाथियों से व्याप्त दिशायें अन्धकार की तरह हो जाती हैं अर्थात् उस राजा के पास हाथियों की अधिकता होती है ।

**अग्नि के अन्य शुभ लक्षण**—पताका या कलश, घड़ा, घोड़ा या हाथियों के समान अग्नि की आकृति हो तो उदयाचल एवं अस्ताचल रूप ओष्ठ वाली तथा हिमालय और विन्ध्याचल रूप स्तन वाली समस्त पृथ्वी उस राजा के वशीभूत हो जाती है ।

इसी प्रकार यदि अग्नि में हाथियों के मदजल, लाजा (= लावा) घृत या मधु के समान सुगन्धि हो तो हवन कराने वाले राजा को प्रणाम करते हुये अधीनस्थ राजाओं के मुकुटों में जड़ी हुई मणियों की कान्ति से सामने की भूमि रङ्गी हुई सी जान पड़ती है ।

**जन्म आदि में भी अग्नि के शुभाशुभ फल-विचार**—इन्द्रध्वज उठाने के समय यहाँ अग्नि के जो शुभाशुभ फल कहे गए हैं उनका जन्म के समय, यज्ञ काल, ग्रह-शान्ति, यात्रा के समय और विवाह काल में भी विचार करना चाहिये ।

**इन्द्र ध्वज की उत्थापन विधि**—गुड़, अपूप (पूआ), पायस और दक्षिणा आदि से ब्राह्मणों की पूजा करके श्रवण नक्षत्र में द्वादशी तिथि में अथवा श्रवण नक्षत्र युक्त अन्य किसी शुभ तिथि में ध्वजा का उत्थापन करे ।

**शक्रकुमारी का लक्षण**—जानकारों द्वारा ध्वजा के ऊपर पाँच अथवा सात शक्रकुमारी बनाना चाहिये—ऐसा मनु का कथन है । १. ध्वजा की ऊँचाई से चौथाई कम **नन्दा**, २. ध्वजा के आधा तुल्य **उपनन्द**, ३-४.ध्वजा से सोलहवाँ भाग अधिक **जय** और **विजय**, ५-६. जय और विजय से सोलहवाँ भाग अधिक **दो वसुन्धरा** तथा सभी के मध्य में वसुन्धरा से आठवाँ भाग अधिक ७. शक्र **जनित्री** को बनावे ।

यहाँ गर्ग का कहना है कि इन्द्रध्वज की शोभा हेतु शक्र कुमारियों को बनाना चाहिए ।

**इन्द्र ध्वज के आभूषण**—पूर्व समय में हर्षित देवताओं ने इन्द्रध्वज को जो आभूषण अर्पित किये थे क्रमानुसार उन विचित्र रूप वाले पिटकों (= आभूषणों) से इन्द्र ध्वज को अलंकृत करे ।

**आभूषण देने का क्रम**—विश्वकर्मा ने लाल अशोक के समान प्रदीप्त कान्ति सम्पन्न, चौकोर प्रथम आभूषण इन्द्रध्वज को दिया । ब्रह्मा एवं शङ्कर ने अनेक रङ्गों वाली रशना दी । इन्द्र ने नील और लाल वर्ण का आठ कोने वाला तृतीय आभूषण दिया । यमराज ने काला, कान्तियुत मसूरक नामक चौथा आभूषण दिया । वरुणदेव ने मञ्जीठ के समान कान्ति वाला, जलावर्त्त की तरह और छह कोन वाला पाँचवा आभूषण दिया । ६. वायुदेव ने मयूर के पङ्ख से व्याप्त और

मेघ के समान नील वर्ण वाला छठा आभूषण केयूर दिया । ७. कार्त्तिकेय ने अपना अनेक वर्ण का केयूर नामक सातवाँ आभूषण दिया । ८. अग्नि ने अग्नि शिखा की तरह कान्ति वाला और गोलाकार आठवाँ आभूषण दिया । ९. इन्द्र ने वैदूर्यमणि के समान कान्ति वाला नवम कण्ठ का आभूषण दिया । १०. त्वष्टा नामक सूर्य ने रथ के पहिये के समान और कान्ति सम्पन्न दशवाँ आभूषण दिया । ११. विश्वेदेव ने कमल के समान उद्वंश संज्ञक ग्यारहवाँ आभूषण दिया । १२. मुनियों ने नील कमल के समान दीप्तिमान निवेश नामक बारहवाँ आभूषण दिया । १३. बृहस्पति और शुक्र ने कुछ नीचे ऊपर बना हुआ तथा आगे के भाग में विस्तृत और लाक्षारस के समान लाल वर्ण का तेरहवाँ आभूषण शिर में समर्पित किया । जिस-जिस देवता ने इन्द्रध्वज के लिये जो-जो आभूषण बनाया वही उस आभूषण के देवता हैं, यह विद्वद्जनों को समझना चाहिये ।

**आभूषण (= पिटक) का परिमाण**—ध्वजा के तृतीयांश में प्रथम पिटक की परिधि होनी चाहिए, द्वितीय आदि बारह पिटक अपने से पूर्व पिटक से अष्टमांश कम करके बनाना चाहिये । जैसे—प्रथम से अष्टमांश कम द्वितीय, द्वितीय से अष्टमांश कम तृतीय, तृतीय से अष्टमांश कम चतुर्थ, चतुर्थ से अष्टमांश कम पञ्चम, पञ्चम से अष्टमांश कम षष्ठ, षष्ठ से अष्टमांश कम सप्तम, सप्तम से अष्टमांश कम अष्टम, अष्टम से अष्टमांश कम नवम, नवम से अष्टमांश कम दशम, दशम से अष्टमांश कम एकादश, एकादश से अष्टमांश कम द्वादश और द्वादश से अष्टमांश कम त्रयोदश पिटक बनाना चाहिये ।

**पिटकों से भूषित करने का समय**—शास्त्रज्ञ (इन्द्रध्वज लक्षण को जानने वाले) चौथे (पूर्णिमा के) दिन पिटकों से इन्द्रध्वज को भूषित करें और नियत होकर मनु राजा द्वारा आगम से प्रतिपादित श्लोक मन्त्रों को पढ़ें ।

**आभूषण प्रदान का मन्त्र**—महादेव, सूर्य, यम, इन्द्र, चन्द्र, कुबेर, अग्नि, वरुण, महर्षिगण, सभी दिशायें, अप्सरायें, शुक्र, बृहस्पति, कार्तिकेय और वायु के समुदायों के द्वारा जिस तरह प्रकाशमान, अनेक रूप वाले, श्रेष्ठ आभूषणों से पूजित हुये हैं । हे देव! उसी तरह इस यज्ञ में प्रसन्न मन होकर उन सब आभूषणों को आप ग्रहण करें । अज,अविनाशी, सर्वदा रहने वाले, एकरूप, व्यापक, वराह रूप, प्रधान पुरुष, चिरन्तन, यम स्वरूप, सभी का संहार करने वाले, अग्नि, सहस्र शिर वाले इन्द्र आप स्तुति के योग्य हो । विद्वान्, अग्नि, पालन करने वाले, इन्द्र, अच्छी तरह रक्षा करने वाले देवताओं के स्वामी, शक्र, वृत्रासुर को मारने वाले और सुषेण (सुन्दर सेनाओं के साथ) आपको मैं बुला रहा हूँ । हमारी वीर सेनायें संग्राम में विजयी हों ।

**मन्त्रों को पढ़ने का काल**—इन्द्रध्वज को पिटकों से विभूषित करने के समय मन्त्र पढ़ना चाहिए । उठाने के समय, नगर में प्रवेश कराने के समय, स्नान कराने के समय, पुष्प माला पहनाने के समय और विसर्जन के समय राजा व्रती होकर मन्त्रों को पढ़े ।

**ध्वज का स्वरूप**—छत्र, पताका, दर्पण, फल अर्द्धचन्द्र, अनेक प्रकार की मालायें, केले का वृक्ष, ईख एवं दिक्पालों (इन्द्र, अग्नि, यम, नैर्ऋत, वरुण, वायु, कुबेर और महादेव) से समन्वित आठ रस्सियों से बँधा हुआ, मजबूत लकड़ी का बना हुआ, दो मातृका वाला एवं दृढ बँधा हुआ, यन्त्रार्गल वाला तथा सार वाले वृक्षों से बनी हुई कुमारिकाओं से युक्त, ऐसे इन्द्र के ध्वज का स्वरूप होना चाहिए।

**ध्वज उठाने का क्रम**—राजा मङ्गल एवं आशीर्वाद और नमन के द्वारा निरन्तर मनुष्यों के शब्दों से युक्त, ढोल, मृदङ्ग, शङ्ख और भेरी के शब्दों से युक्त, वेद विहित वाक्यों का बारम्बार उच्चारण करते हुये ब्राह्मणों से युक्त तथा मङ्गल शब्दों से संयुक्त ध्वज राजा को उठाना चाहिए ।

**राजा द्वारा ध्वजोत्थान**—फल, दही, घी, लाजा (= लावा), मधु और पुष्पादि हाथ में लेकर, नत मस्तक होकर तथा मङ्गल शब्द बोलते हुये पुरवासियों के साथ प्रजाओं का पालक राजा देवताओं के स्वामी इन्द्र के ध्वज को शत्रु वध के लिये उठाए जो शत्रु के नगर की ओर झुका रहे ।

**ध्वज का शुभ उत्थान**—अनतिशीघ्र, अविलम्ब, कम्पनरहित, नष्ट माला से रहित और पिटक आदि भूषण वाले ध्वज का उठाना शुभ कहा गया है । इनसे भिन्न लक्षण वाले ध्वज का उठना अशुभ सूचक है । राजपुरोहित को शान्ति के द्वारा विघ्नों को दूर करना चाहिये ।

**ध्वजा उठाने पर होने वाले शुभाशुभ फल**—यदि इन्द्रध्वज पर मांस खाने वाला पक्षी, उल्लू, कबूतर, काक या सफेद चिल्ह बैठे तो राजा को भयग्रस्त समझना चाहिए और नीलकण्ठ बैठे तो युवराज को भयग्रस्त समझना चाहिए एवं बाज बैठे तो नेत्र भय उत्पन्न करता है । यदि ध्वज का छत्र भङ्ग हो जाय तो राजा की मृत्यु समझना चाहिए । उस पर यदि मधुमक्खियाँ छत्ता लगावें तो चोरों का उपद्रव होता है और यदि उल्कापात हो तो पुरोहित का नाश तथा वज्रपात हो तो राजा की पट्टमहिषी का नाश होता है ।

ध्वजा की पताका नीचे गिरे तो रानी के नाश का सूचक है और पिटक गिरे तो अवृष्टि, ध्वज मध्य भाग से टूट जाय तो मन्त्री का नाश, अग्रभाग से

है । जहाँ पर चौथी, आठवीं और दूसरी मूषाएँ हों उसको **'आयत'** कहा गया है और जिसमें पहली, आठवीं एवं पाँचवीं मूषाएँ हों उसको **'वन'** नामक गृह कहा गया है ॥ ११३-११४ ॥

**द्वितीया पञ्चमी मूषा यत्र स्यादष्टमी तथा ।**
**तद् भाराख्यमुदग्वक्त्रं शुभं विघ्नकृदन्यथा ॥ ११५ ॥**

दूसरी, पाँचवीं और आठवीं मूषाएँ जहाँ पर हों, उस गृह को **भार** आख्या दी गई है । उसका मुख उत्तर दिशा की ओर यदि हो तो वह शुभ होता है, अन्यथा गृहस्वामी के लिए विघ्नकारी होता है ॥ ११५ ॥

**त्रिपञ्चम्यष्टमीभिस्तु सुगारं परिकीर्तितम् ।**
**यत्राष्टमी तदागारं चतुर्थी पञ्चमी तथा ॥ ११६ ॥**

तीसरी, पाँचवीं और आठवीं मूषाओं से **सुगार** नामक गृह परिकीर्तित किया गया है और जहाँ पर आठवीं, पाँचवीं एवं चौथी मूषा हो उस गृह को **आगार** कहते हैं ॥ ११६ ॥

**यस्मिन्नाद्याष्टमीषष्ठ्यो वीरं तदिह कीर्तितम् ।**
**षष्ठ्यष्टमी द्वितीया च गृहे व्यायामनामनि ॥ ११७ ॥**

जिसमें पहली, आठवीं एवं छठी मूषा हो उसको **वीर** कहते हैं । छठी, आठवीं और दूसरी मूषा **व्यायाम** नाम वाले घर में होती है ॥ ११७ ॥

**षष्ठ्यष्टमीतृतीयाभिर्मूषाभिः प्रोक्तमायुतम् ।**
**षष्ठ्यष्टमीचतुर्थ्यः स्युर्यत्र तद् व्याहतं विदुः ॥ ११८ ॥**

छठी, आठवीं और तीसरी मूषाओं से युक्त **'आयुत'** नामक गृह कहा गया है और जहाँ पर छठी, आठवीं और चौथी मूषाएँ हों उसको **'व्याहत'** कहते हैं ॥ ११८ ॥

**षष्ठ्यष्टमीपञ्चमीभिर्दुर्गमं व्याधिकृन्मतम् ।**
**आद्याष्टमीसप्तमीभिः संयुक्तं क्षोभमुच्यते ॥ ११९ ॥**

छठी, आठवीं और पाँचवी मूषाओं से युक्त व्याधि करने वाला गृह **'दुर्गम'** माना गया है । पहली, आठवीं और सातवीं मूषाओं से युक्त गृह **'क्षोभ'** कहा जाता है ॥ ११९ ॥

**द्विसप्तम्यष्टमीयुक्तं गृहं कृत्रिमसंज्ञितम् ।**
**त्रिसप्तम्यष्टमीभिस्तु मूषाभिः क्षोभणं भवेत् ॥ १२० ॥**

दूसरी, सातवीं और आठवीं मूषाओं से युक्त **'कृत्रिम'** संज्ञा वाला घर कहा जाता है । तीसरी, सातवीं और आठवीं मूषाओं से **'क्षोभण'** नामक गृह कहा जाता है ॥ १२० ॥

**चारुरुच्यं चतुःसप्तम्यष्टमीभिः समन्वितम् ।**
**सप्तपञ्चम्यष्टमीभिर्युक्तं ध्रुवमिति स्मृतम् ॥ १२१ ॥**
**षट्सप्तम्यष्टमीयुक्तं कथं सर्वार्थसिद्धिदम् ।**

चौथी, सातवीं और आठवीं से समन्वित **'चारु-रुच्य'** नामक गृह कहलाता है। सातवीं और आठवीं मूषा से युक्त **'ध्रुव'** कहा गया है । छठीं, सातवीं तथा आठवीं मूषा वाला गृह सिद्धिप्रद **'कथ'** कहलाता है ॥ १२१-२२२ ॥

**इत्युक्तानि त्रिभद्राणि शस्तान्येतेषु यानि च ॥ १२२ ॥**
**तानि नित्यं प्रयोज्यानि वर्णानां च मनीषिभिः ।**

इस प्रकार तीन भद्राओं वाले भवनों का विवेचन किया गया है । इनमें से जो प्रशस्त गृह कहे गये हैं मनीषियों द्वारा उन भवनों को बनाने के लिए नित्य योजना करनी चाहिए ॥ १२२-१२३ ॥

**चतुर्भद्रभेदेषु कृतादिषु मूषास्थितिः**

**आद्याश्चतस्रो मूषाः स्युर्यत्र तत् कृतसंज्ञितम् ॥ १२३ ॥**
**सर्वद्विगुणकृत् पूर्वप्रत्यग्द्वारं न चान्यथा ।**

**कृत आदि चतुर्भद्र गृहों के सत्तर भेदों में मूषा की स्थिति—**

**१. कृत**—आदि की चारों मूषाएँ जहाँ हों उस गृह की **'कृत'** संज्ञा कही गई है । यदि उसका पूर्व अथवा पश्चिम में द्वार हो तो वह सबके लिए गुणकारक होता है अन्यथा किसी के लिए भी उपर्युक्त नहीं है ॥ १२३-१२४ ॥

**आद्यास्तिस्रः पञ्चमी च यस्मिन्नर्चायनं हि तत् ॥ १२४ ॥**
**तद् भवेत् पश्चिमद्वारं गृहं सर्वगुणान्वितम् ।**

**२. अर्चायन**—पहली, तीसरी और पाँचवीं मूषा जिस घर में हों उसको 'अर्चायन' कहते हैं और वह पश्चिम द्वार वाला घर सब प्रकार के गुणों से युक्त होता है ॥ १२४-१२५ ॥

**यस्मिन्नाद्या द्वितीया च चतुर्थी पञ्चमी तथा ॥ १२५ ॥**
**तत् पौष्णं दक्षिणद्वारं सर्ववृद्धिकरं नृणाम् ।**

**३. पौष्ण**—जिसमें पहली, दूसरी, चौथी और पाँचवीं मूषा हो उस दक्षिण

द्वार वाले गृह को 'पौष्ण' कहते हैं और दक्षिण द्वार वाला यह घर मनुष्यों के लिए सब प्रकार की वृद्धि करने वाला होता है ॥ १२५-१२६ ॥

**द्व्या(आ?)द्यास्तिस्रस्तथाद्या च यस्मिंतद् गृहमुद्गतम् ॥ १२६ ॥**
**द्वारेण पश्चिमेनैतच्छस्यते दक्षिणेन वा ।**

**४. उद्गत**—दूसरी, तीसरी और पहली मूषाएँ जिसमें हों उसको 'उद्गत' नामक गृह कहते हैं और उसका द्वार पश्चिम अथवा दक्षिण की तरफ यदि हो तो वह गृहस्वामी के लिए शुभ होता है ॥ १२६-१२७ ॥

**द्व्याद्याश्चतस्रो यत्र स्युस्तन्मिश्रं प्रीतिवर्धनम् ॥ १२७ ॥**
**प्रशस्तं क्षत्रियादीनां तस्य द्वाः प्राच्यपाचि वा ।**

**५. मिश्र**—दूसरी और चौथी मूषाएँ जिस घर में हों वह प्रीतिवर्धन करने वाला 'मिश्र' नामक गृह कहलाता है और वह गृह क्षत्रिय आदि वर्णों के लिए प्रशस्त कहा गया है । उसका दरवाजा पूर्व अथवा पश्चिम (अथवा दक्षिण) में होना चाहिए ॥ १२७-१२८ ॥

**विमर्श**—प्राच्यपाचि = प्राचि + अपाचि । प्राच् एवं अपाच । अर्थात् पश्चिम दिशा या दक्षिण दिशा ।

**आद्यास्तिस्रस्तथा षष्ठी यस्मिन् मूषास्तदुत्सुकम् ॥ १२८ ॥**
**तच्छस्तं पश्चिमद्वारं विप्रादीनां जयावहम् ।**

**६. उत्सुक**—आदि की तीन और छठी मूषाएँ जिसमें हों उसको 'उत्सुक' नामक गृह कहते हैं । उस गृह के पश्चिमद्वार होने पर उसे प्रशस्त कहा गया है । ब्राह्मणादिकों के लिए यह जय का सूचक है ॥ १२८-१२९ ॥

**आद्या द्वितीया तुर्या च मूषा षष्ठी च यत्र तत् ॥ १२९ ॥**
**याम्याप्रत्यङ्मुखं शस्तं विघ्नं नाम्न कुलर्द्धिकृत् ।**

**७. विघ्न**—जहाँ पर पहली, दूसरी, चौथी और छठीं मूषाएं होती हैं वह दक्षिण और पश्चिम मुख वाला 'विघ्न' नाम का गृह कुल की वृद्धि करने वाला प्रशस्त गृह कहा गया है ॥ १२९-१३० ॥

**आद्या तृतीया तुर्या च यस्मिन् षष्ठी च तच्छुभम्॥ १३० ॥**
**विपक्षं नाम धाम स्याद् द्वारमस्य च पश्चिमम् ।**

**८. विपक्ष**—पहली, तीसरी और चौथी एवं छठी मूषाएँ जिस गृह में हों वह 'विपक्ष' नाम का शुभ गृह वह होता है जिसका द्वार पश्चिम में होता है ॥ १३० ॥

**द्व्याद्यास्तिस्त्रो गृहे यस्मिन् मूषा षष्ठी च तच्छुभम्॥ १३१ ॥**
**स्याद् याम्यपश्चिमद्वारमाहूतं नाम तद् गृहम्।**

९. **आहूत**—जिसमें पहले की दो, तीसरी और छठी मूषाएँ होती हैं एवं जिसका द्वार पश्चिम एवं दक्षिण में होता है उसे 'आहूत' नामक चतुर्भद्र गृह कहते हैं ॥ १३१-१३२ ॥

**आद्याद्वितीयपञ्चम्यो यत्र षष्ठी च तद् भवेत्॥ १३२ ॥**
**रुचकं नाम याम्यप्राग्द्वारं सकलकामदम्।**

१०. **रुचक**—पहली, दूसरी, पाँचवीं और छठी मूषाएँ जहाँ पर हों वह दक्षिण एवं पूर्व द्वार वाला, सकलमनोरथ पूर्ण करने वाला 'रुचक' नाम का गृह विख्यात है ॥ १३२-१३३ ॥

**एकत्रिपञ्चषष्ठ्यः स्युर्यत्र तद्वर्धमानकम्॥ १३३ ॥**
**प्राक्पश्चिमोत्तरद्वारं चातुर्वर्ण्यस्य वृद्धिदम्।**

११. **वर्धन**—पहली, तीसरी, पाँचवी, छठी मूषाएँ जहाँ पर हों उसको वर्धमानक गृह कहते हैं और उस गृह का पूर्व, पश्चिम और उत्तर द्वार चारों वर्णों के लिए वृद्धिदायक होता है ॥ १३३-१३४ ॥

**यत्र स्युर्द्विपञ्चम्यो मूषा षष्ठी च तद् गृहम्॥ १३४ ॥**
**स्यात् पूर्वदक्षिणद्वारं प्रथितं पृथुसंज्ञया।**

१२. **पृथु**—जहाँ पर दूसरी, तीसरी, पाँचवीं और छठी मूषाएँ हों वह पूर्व एवं दक्षिण द्वार वाला पृथु नामक गृह कहलाता है ॥ १३४-१३५ ॥

**यस्मिन्नाद्याचतुःपञ्चषष्ठ्यस्तत् कलभं विदुः ॥ १३५ ॥**
**गुणैरुपेतं सकलैरुदग्द्वारं निकेतनम्।**

१३. **कलह**—जिसमें पहली, चौथी, पाँचवीं और छठी मूषाएँ हों उसको कलभ (= कलह) नामक गृह कहते हैं। वह सब गुणों से युक्त उत्तर द्वार वाला भवन कहा गया है ॥ १३५-१३६ ॥

**द्विचतुःपञ्चमीषष्ठ्यो यस्मिंस्तच्छलमुच्यते ॥ १३६ ॥**
**दक्षिणं मुखमेतस्य पश्चिमं वा प्रशस्यते।**

१४. **छल**—दूसरी, चौथी, पाँचवीं, छठी मूषाएँ जिसमें हों उसको छल नामक चतुर्भद्र गृह कहते हैं। इसका मुख दक्षिण में अथवा पश्चिम में प्रशस्त कहा गया है ॥ १३६-१३७ ॥

**चतस्रस्त्र्यादयो यस्मिन्नायास्यं तदुदीरितम् ॥ १३७ ॥**
**अप्रशस्तं वदन्त्येतत् तद्विदो भवनाधमम् ।**

**१५. आयास्य**—चौथी या तीसरी या तीन आदि की मूषाएँ जिसमें हों उस गृह को आयास्य कहा गया है । इसको विज्ञ जन अप्रशस्त तथा अधम चतुर्भद्र भवन कहते हैं ॥ १३७-१३८ ॥

**आद्यास्तिस्त्रः सप्तमी च मूषाः स्युर्यत्र तद् गृहम् ॥ १३८ ॥**
**त्रिनाभमुत्तरद्वारं शस्तं सर्वगुणान्वितम् ।**

**१६. त्रिनाभ**—आदि की तीन और सातवीं मूषाएँ जिसमें हों वह घर त्रिनाभ संज्ञक गृह कहलाता है । उसका द्वार उत्तर दिशा की ओर प्रशस्त कहा गया है और वह सब गुणों से युक्त होता है ॥ १३८-१३९ ॥

**आद्याद्वितुर्यासप्तम्यो यत्र तत् स्वस्तिकं स्मृतम् ॥ १३९ ॥**
**प्राक्पश्चिमोत्तरद्वारं चातुर्वर्ण्येऽपि शस्यते ।**

**१७. स्वस्तिक**—पहली, दूसरी, चौथी और सातवीं मूषाएँ जहाँ हों उसका नाम स्वस्तिक है । उसका द्वार पूर्व, पश्चिम अथवा उत्तर में होना चाहिए । वह घर चारों वर्णों के लिए प्रशस्त कहा गया है ॥ १३९-१४० ॥

**आद्याचतुर्थीसप्तम्यो मूषाः स्युर्यत्र वेश्मनि ॥ १४० ॥**
**तदिह स्थिरमित्युक्तं द्वारं चैत्यस्य दक्षिणम् ।**

**१८. स्थिर**—पहली, चौथी, सातवीं मूषाएँ जिस घर में हों उसको यहाँ स्थिर नाम वाला चतुर्भद्र गृह कहा गया है और उसका द्वार दक्षिण की ओर होना चाहिए ॥ १४०-१४१ ॥

**द्वाद्यास्तिस्त्रः सप्तमी यत्र तत् सरलं विदुः ॥ १४१ ॥**
**तद् भवेत् पश्चिमद्वारं सर्वदोषोज्झितं गृहम् ।**

**१९. सरल**—दो आदि की, तीसरी तथा सातवीं मूषाएँ जहाँ पर हों उसको सरल नामक गृह कहते हैं । उसका द्वार पश्चिम की ओर होता है और ऐसा घर सभी दोषों से रहित माना जाता है ॥ १४१-१४२ ॥

**यत्राद्या च द्वितीया च पञ्चमी सप्तमी तथा ॥ १४२ ॥**
**द्विगुणं नाम तद् वेश्म द्वारं चास्य यथेप्सितम् ।**

**२०. द्विगुण**—जहाँ पर पहली, दूसरी, पाँचवीं और सातवीं मूषाएँ हों उसे

'**द्विगुण**' नामक भवन कहते हैं और वह इप्सित द्वार वाला चतुर्भद्र गृह कहलाता है ॥ १४२-१४३ ॥

**आद्यातृतीयापञ्चम्यः सप्तम्यपि च यत्र तत् ॥ १४३ ॥**
**नाद्यं नामातिशीलाद्यं (?) प्रशस्तं सर्वदेहिनाम् ।**

**२१. नाद्य**—पहली, तीसरी, पाँचवीं और सातवीं मूषाएँ जिस घर में हों वह सभी मनुष्यों के लिए प्रशस्त एवं व्यावहारिकला युक्त '**नाद्य**' नामक चतुर्भद्र गृह कहलाता है ॥ १४३-१४४ ॥

**द्वितीया च तृतीया च पञ्चमी सप्तमी गृहे ॥ १४४ ॥**
**यत्र तच्चित्रनामेष्टद्वारं चित्रगुणैर्वृतम् ।**

**२२. चित्र**—दूसरी, तीसरी, पाँचवीं और सातवीं मूषाएँ जिस घर में हो वह विविध गुणों से युक्त इष्टद्वार वाला '**चित्र**' नामक गृह कहलाता है ॥१४४-१४५॥

**आद्याचतुर्थीपञ्चम्यो यत्र स्युः सप्तमी तथा ॥ १४५ ॥**
**तद् भ्रान्तं नाम पूर्वोदग्द्वारं भवनमृद्धिकृत् ।**

**२३. भ्रान्त**—पहली, चौथी, पाँचवीं और सातवीं मूषाएँ जहाँ पर हों वह समृद्धि प्रदान करने वाला पूर्व और उत्तर दिशा में द्वार वाला '**भ्रान्त**' नाम का भवन कहलाता है ॥१४५-१४६॥

**यत्र द्वितीया तुर्या च स्यात् षष्ठी सप्तमी तथा ॥ १४६ ॥**
**विधारणं गृहं तत् स्यात् सर्वकामविवर्धनम् ।**

**२४. विधारण**—जहाँ पर दूसरी, चौथी, छठी और सातवीं मूषाएँ हों वह सभी कामनाओं का विवर्धन करने वाला विधारण नाम का चतुर्भद्र गृह कहलाता है ॥ १४६-१४७ ॥

**तृतीया यत्र तुर्या च पञ्चमी सप्तमी तथा ॥ १४७ ॥**
**तत् साधारणमित्याहुः सर्वद्वारं सुखावहम् ।**

**२५. साधारण गृह**—जहाँ पर तीसरी, चौथी, पाँचवीं और सातवीं मूषाएँ हों उसे 'साधारण' नामक भवन कहते हैं । वह चारो दिशाओं में द्वार वाला होता है और सुखकारक माना गया है ॥ १४७-१४८ ॥

**आद्या द्वितीया षष्ठी च सप्तमी यत्र तन्नतम् ॥ १४८ ॥**

**२६. नत**—जहाँ पर पहली, दूसरी, छठी और सातवीं मूषाएँ हों वह 'नत' नामक गृह कहलाता है ॥ १४८ ॥

**आद्या द्वितीया षष्ठी च त्र्यंशे स्यात् सप्तमी तथा ।**

२७. **त्र्यंश**—पहली, छठी और सातवीं मूषाएँ त्र्यंश नामक चतुर्भद्र भवन में होती हैं ॥ १४९ ॥

**द्वितीया च तृतीया च ऋषे षष्ठी च सप्तमी ॥ १४९ ॥**
**आद्या तुर्या च षष्ठी च रोगे स्यात् सप्तमी तथा ।**

२८. **ऋष**—दूसरी, तीसरी, छठी और सातवीं मूषाओं वाला घर ऋष कहलाता है ।

२९. **रोग**—चौथी, छठी और सातवीं मूषाओं वाला रोग नामक चतुर्भद्र गृह होता है ॥ १४९-१५० ॥

**यत्र द्वितीया तुर्या च स्यात् षष्ठी सप्तमी च तत् ॥ १५० ॥**
**विशोषणं नाम गृहं दक्षिणोत्तरदिङ्मुखम् ।**

३०. **विशोषण**—जहाँ पर दूसरी, चौथी, छठी और सातवीं मूषाएँ हों वह विशोषण नाम का गृह दक्षिण एवं उत्तर मुख वाला होता है ॥ १५०-१५१ ॥

**यत्र तृतीया तुर्या च स्यात् षष्ठी सप्तमी गृहे ॥ १५१ ॥**
**प्रतीच्यमीप्सितद्वारं तद् गृहं सर्वकामदम् ।**

३१. **प्रतीच्य**—तीसरी, चौथी, छठी और सातवीं मूषाएँ जिस घर में हों वह ईप्सित द्वार वाला प्रतीच्य नाम का चतुर्भद्र भवन सर्वकामनाओं को देने वाला होता है ॥ १५१-१५२ ॥

**यत्राद्यापञ्चमीषष्ठीसप्तम्यस्त्रिसमं हि तत् ॥ १५२ ॥**
**प्रभूतवृद्धिदं वेश्म समस्तैरन्वितं गुणैः ।**

३२. **त्रिसम**—जहाँ पर पहली, पाँचवीं, छठी और सातवीं मूषाएँ हों वह त्रिसम नामक चतुर्भद्र गृह प्रभूत वृद्धि देने वाला समस्त गुणों से युक्त वेश्म कहलाता है ॥ १५२-१५३ ॥

**द्वितीयापञ्चमीषष्ठीसप्तम्यो यत्र वेश्मनि ॥ १५३ ॥**
**तदिह स्वैरमित्याहुर्धनधान्यसुखावहम् ।**

३३. **स्वैर**—दूसरी, पाँचवीं, छठी और सातवीं मूषाएँ जिस घर में हों वह धनधान्य से समृद्ध सुखावह स्वैर नामक गृह कहलाता है ॥ १५३-१५४ ॥

**तृतीयापञ्चमीषष्ठीसप्तम्यो द्वारमुत्तरम् ॥ १५४ ॥**
**पश्चिमं वा भवेद् यत्र सुप्रतीकं च वृद्धिकृत् ।**

**३४. सुप्रतीक**—तीसरी, पाँचवीं, छठी और सातवीं मूषाएँ जहाँ पर हों वह वृद्धि करने वाला सुप्रतीक नामक भवन कहलाता है और उसका द्वार उत्तर या पश्चिम की ओर होना चाहिये ॥ १५४-१५५ ॥

**तुर्याद्याभिश्चतसृभिर्नलमुत्तरदिङ्मुखम् ॥ १५५ ॥**
**आद्याद्वित्र्यष्टमीभिः स्यात् सर्वरुग्भीतिकृत् क्षयम् ।**

**३५. नल**—पहले की चारों मूषाओं से युक्त उत्तर दिशा वाला नल नामक वेश्म कहलाता है ।

**३६. क्षय**—पहली, दूसरी, तीसरी, आठवीं मूषाओं से युक्त सभी रोगों और सभी भयों का जनक क्षय नामक गृह कहलाता है ॥ १५५-१५६ ॥

**व्याप्ते पूर्वा द्वितीया च स्याच्चतुर्थी तथाऽष्टमी ॥ १५६ ॥**

**३७. व्याप्त**—पहली, दूसरी, चौथी और आठवीं मूषाएँ व्याप्त नामक चतुर्भद्र गृह में होती हैं ॥ १५६ ॥

**आद्यातृतीयातुर्याः स्युराक्रीडे तद्वदष्टमी ।**
**द्व्याद्यास्तिस्रः क्रमाद् व्यर्थे मूषाः स्यादष्टमी तथा ॥ १५७ ॥**

**३८. आक्रीड**—पहली, तीसरी, चौथी और आठवीं मूषाएँ आक्रीड नामक गृह में होती हैं ।

**३९. व्यर्थ**—आदि की दो, तीसरी और आठवीं मूषाएँ जहाँ पर क्रमशः हों उसे व्यर्थ नामक गृह कहते हैं ॥ १५७ ॥

**ईशानाख्ये स्युराद्याद्वित्रिपञ्चम्योऽष्टमी तथा ।**
**पूर्वाष्टमीत्रिपञ्चम्यो यस्मिंस्तत् सुखसंज्ञितम् ॥ १५८ ॥**
**तत्पूर्वोदङ्मुखं वृद्ध्यै जायते हानयेऽन्यथा ।**

**४०. ईशान**—नाम वाले भवन में पहली, दूसरी, तीसरी, पाँचवीं और आठवीं मूषाएँ होती हैं ।

**४१. सुख**—पहली, आठवीं, तीसरी एवं पाँचवीं मूषाएँ सुख संज्ञा वाले गृह में होती हैं और इसका मुख उत्तर या पूर्व की ओर हो तो वृद्धि होती है अन्यथा हानि उठानी पड़ती है ॥ १५८-१५९ ॥

**यत्र स्युरष्टमीद्वित्रिपञ्चम्यस्तदिहाव्ययम् ॥ १५९ ॥**
**द्वारं यथेष्टमेतस्य वास्तुविद्याविदो जगुः ।**

**४२. अव्यय**—जहाँ पर आठवीं, दूसरी, तीसरी एवं पाँचवीं मूषाएँ होवें वह

अव्यय नाम का घर होता है और उसका द्वार वास्तु-विद्या-विशारदों ने इच्छानुसार बनाने को कहा है ॥ १५९-१६० ॥

**यस्मिन् पूर्वाष्टमीतुर्यापञ्चम्यो मगधं हि तत् ॥ १६० ॥**
**प्रागुदक्पश्चिमद्वारमिदं शंसन्ति सूरयः ।**

**४३. मगध**—जिसमें पहली, आठवीं, चौथी और पाँचवीं मूषाएँ होवें उसका नाम मगध होता है । उसके द्वार को विद्वान् लोग पूर्व, उत्तर और पश्चिम में बनाने को कहते हैं ॥ १६०-१६१ ॥

**यत्र द्वितुर्यापञ्चम्यो मूषाः स्युस्तद्वदष्टमी ॥ १६१ ॥**
**तत् क्षिप्रं नाम सुखकृद् यथेष्टं द्वारमिष्यते ।**
**त्रिपञ्चम्यष्टमीतुर्या आगस्त्ये पश्चिमामुखे ॥ १६२ ॥**

**४४. क्षिप्र**—जहाँ पर दूसरी, चौथी, पाँचवीं और आठवीं मूषाएँ हों उसे क्षिप्र नामक गृह कहते हैं । वह सुख प्रदान करने वाला होता है और उसका द्वार इच्छानुसार होता है ।

**४५. आगस्त्य**—तीसरी, पाँचवीं, आठवीं और चौथी मूषाएँ पश्चिम मुख वाले आगस्त्य नामक गृह में होती है ॥ १६१-१६२ ॥

**द्वितीयाद्याष्टमीषष्ठ्यो यत्रैकोजं तदुच्यते ।**
**तृतीयाद्याष्टमीषष्ठ्यो यत्र तद्द्विर्गतं गृहम् ॥ १६३ ॥**

**४६. एकोज**—दूसरी, पहली, आठवीं और छठी जहाँ पर हों उसे एकोज नामक चतुर्भद्र गृह कहते हैं ।

**४७. द्विर्गत**—जहाँ पर तीसरी, पहली, आठवीं और छठी होवें उसे द्विर्गत चतुर्भद्र गृह कहते हैं ॥ १६३ ॥

**द्वित्रिषष्ठ्योऽष्टमी चापि यस्मिंस्तल्लिहमुच्यते ।**
**आद्यातुर्याष्टमीषष्ठ्यो यत्र तत् पर्कमुच्यते ॥ १६४ ॥**

**४८. लिह**—दूसरी, तीसरी, छठी, आठवीं मूषाएँ जिसमें हों उसको लिह नामक चतुर्भद्र गृह कहते हैं ।

**४९. पर्क**—जहाँ पर पहली, चौथी, आठवीं और छठी मूषाएँ हों उसको पर्क नामक चतुर्भद्र गृह कहते हैं ॥ १६४ ॥

**षष्ठ्यष्टमीद्वितुर्याभिः(?)स्याद् विलोमाभिधं गृहम् ।**
**षष्ठ्यष्टमीद्वितुर्याभिरुद्दण्डमिति कीर्तितम् ॥ १६५ ॥**

**५०. विलोम**—छठी, आठवीं, दूसरी और चौथी मूषाओं से युक्त विलोम संज्ञक घर कहलाता है ।

**५१. उद्दण्ड**—छठी, आठवीं, दूसरी और चौथी से युक्त गृह उद्दण्ड नाम से प्रख्यात् किया गया है ॥ १६५ ॥

**यस्मिन्नाद्याष्टमीषष्ठीपञ्चम्यो मुण्डमेव तत् ।**
**द्विपञ्चम्यष्टमीषष्ठ्यो मूषा मातङ्गसंज्ञिते ॥ १६६ ॥**

**५२. मुण्ड**—जिसमें पहली, आठवीं, छठी, पाँचवीं हों उसको मुण्ड नामक चतुर्भद्र गृह कहते हैं ।

**५३. मातङ्ग**—मातङ्ग संज्ञक गृह में, दूसरी, पाँचवीं, आठवीं और छठी मूषाएँ होती हैं ॥ १६६ ॥

**त्रिपञ्चम्यष्टमीषष्ठ्यो भवन्त्यस्खलनामनि ।**
**तत् सर्वनाम तुर्याद्यास्तिस्त्रो यस्मिंस्तथाष्टमी ॥ १६७ ॥**

**५४. अस्खल**—अस्खल नाम वाले चतुर्भद्र गृह में तीसरी, पाँचवीं, आठवीं और छठी मूषाएँ होती हैं ।

**५५. खर्व**—जिस चतुर्भद्राओं वाले गृह में चौथी, पहली, तीसरी और आठवीं मूषाएँ हों उसका नाम खर्व है ॥ १६७ ॥

**आद्याद्वितीयासप्तम्यः पिनाके स्युस्तथाष्टमी ।**
**त्रिसप्तम्यष्टमीपूर्वा यत्रोद्यन्तं तदुच्यते ॥ १६८ ॥**

**५६. पिनाक**—पहली, दूसरी, सातवीं और आठवीं मूषाएँ पिनाक नामक भवन में होती हैं ।

**५७. उद्यत**—तीसरी, सातवीं, आठवीं, पहली मूषाएँ उद्यत नामक गृह में होती है ॥ १६८ ॥

**अष्टमीद्वित्रिपञ्चम्यो यस्मिंस्तद् विशिखं गृहम् ।**
**आद्याचतुर्थीसप्तम्यः प्रसभे स्युस्तथाष्टमी ॥ १६९ ॥**

**५८. विशिख**—आठवीं, दूसरी, तीसरी और पाँचवीं मूषाओं से विशिख नामक गृह होता है ।

**५९. प्रसभ**—पहली, चौथी, सातवीं और आठवीं मूषाएँ प्रसभ नामक चतुर्भद्र गृह में विहित होती हैं ॥ १६९ ॥

**रजे द्वितुर्यासप्तम्यो मूषाः स्युस्तद्वदष्टमी ।**
**त्रिसप्तम्यष्टमीतुर्या यत्र तद् रुचकं विदुः ॥ १७० ॥**
**प्राक्प्रत्यग्द्वारमेतस्य शूद्राणामतिवृद्धिदम् ।**

**६०. रज**—रज नामक गृह में दूसरी, चौथी, सातवीं एवं आठवीं मूषाएँ होती है ।

**६१. रुचक**—रुचक नामक गृह में तीसरी, सातवीं, आठवी एवं चौथी मूषाएँ होती है । इस गृह के प्राक् भाग में और प्रत्यग् भाग में द्वार होता है । यह गृह विशेषकर शूद्रों के लिए अत्यन्त वृद्धिकारक होता है ॥ १७०-१७१ ॥

**सप्तम्याद्याष्टमी मूषा पञ्चम्यपि च सैफले ॥ १७१ ॥**
**वामे द्विपञ्चसप्तम्यो मूषा ज्ञेयास्तथाष्टमी ।**

**६२. सैफल**—सैफल नामक गृह में सातवीं, पहली, आठवीं और पाँचवीं मूषाएँ होती हैं ।

**६३. वाम**—वाम नामक वेश्म में दूसरी, पाँचवीं, सातवीं और आठवीं मूषाएँ समझनी चाहिए ॥ १७१-१७२ ॥

**त्रिपञ्चसप्तम्यष्टम्यो यस्मिंस्तद् वर्धमानकम् ॥ १७२ ॥**
**विशेषतो वृद्धिकरं वैश्यानामिति तद्विदः ।**

**६४. वर्धक**—जहाँ पर तीसरी, पाँचवी, सातवीं और आठवीं हों उसको वर्धमानक कहते हैं । जानकार लोगों के अनुसार यह वैश्यों के लिए विशेष वृद्धिकारक बताया गया है ॥ १७२-१७३ ॥

**चतुःपञ्चाष्टसप्तम्यो यस्मिंस्तद् धावनं भवेत् ॥ १७३ ॥**

**६५. धावन**—चौथी, पाँचवीं, आठवीं और सातवीं मूषाएँ जिसमें हों उसे धावन गृह कहते हैं ॥ १७३ ॥

**सप्तम्याद्याष्टमीषष्ठ्यो यत्र तत् सहमुच्यते ।**
**द्विसप्तषष्ठ्यष्टमीभिर्मूषाभिश्चयनं भवेत् ॥ १७४ ॥**

**६६. सह**—सातवीं, आठवीं, छठी मूषाएँ जहाँ पर होती हैं उसको सह या सहम गृह कहते हैं ।

**६७. चयन**—दूसरी, सातवीं, छठी और आठवीं मूषाओं से युक्त चयन नामक गृह निष्पन्न होता है ॥ १७४ ॥

**षष्ठ्यष्टमीद्विसप्तम्यो(?) यस्मिंस्तत् सेव्यमीरितम् ।**

**यत्र तुर्याष्टमी षष्ठी सप्तमी चेति तत् कलम् ॥ १७५ ॥**

**६८. सेव्य**—छठी, आठवीं, दूसरी और सातवीं मूषाएँ जिसमें हों उसको सेव्य कहते हैं ।

**६९. कल**—जहाँ चौथी, आठवीं, छठी और सातवीं मूषाएँ हों उसको कल कहते हैं ॥ १७५ ॥

**तीर्णे षष्ठ्यष्टमीपञ्चसप्तम्यः सर्वकामदे ।**

**७०. तीर्ण**—सर्व कामना पूर्ण करने वाले तीर्ण नामक भवन में छठी, आठवीं, पाँचवीं और सातवीं मूषाएँ होती हैं (इस प्रकार सत्तर चतुर्भद्रों में मूषाओं की स्थिति का विवेचन प्रस्तुत किया गया है) ॥ १७६ ॥

**पञ्चभद्रभेदेषु कानलादिषु मूषास्थितिः**

**यत्राद्याः पञ्च तत् प्रोक्तं कानलं सर्वकामदम् ॥ १७६ ॥**

**कानलादि पञ्च भद्राओं वाले चतुःशाल भवन के छप्पन भेदों में मूषा की स्थित—**

**१. कानल**—जहाँ पर आदि की पाँच मूषाएँ होती हैं वह कामनाओं को पूर्ण करने वाला कानल नामक गृह कहलाता है ॥ १७६ ॥

**एकद्वित्रिचतुःषष्ठ्यो यत्र तल्लोलुपं स्मृतम् ।**
**आद्यास्तिस्रः पञ्चषष्ठ्यो यस्मिंस्तज्जिह्ममुच्यते ॥ १७७ ॥**

**२. लोलुप**—पहली, दूसरी, तीसरी, चौथी तथा छठी मूषाएँ जहाँ पर होती हैं उसे लोलुप कहा गया है ।

**३. जिह्म**—जहाँ पर आदि की तीन, पाँचवी तथा छठीं मूषाएँ हो उसको जिह्म कहते हैं ॥ १७७ ॥

**प्रगाले पञ्चमीषष्ठीतुर्यापूर्वाद्वितीयकाः ।**
**त्रितुर्यापञ्चमीषष्ठ्यः साद्याः स्युः सालिनाभिधे ॥ १७८ ॥**

**४. प्रगाल**—प्रगाल में पाँचवीं, छठी, चौथी, पहली और दूसरी मूषाएँ होती है।

**५. सालिन**—सालिन नाम वाले भवन में पहली के सहित तीसरी, चौथी, पाँचवीं और छठी मूषाएँ होती हैं ॥ १७८ ॥

**यत्र द्वित्रिचतुःपञ्चषष्ठ्यस्तज्जिनमुच्यते ।**
**एकद्वित्रिचतुर्थ्यः स्युः सुजये सप्तमीयुताः ॥ १७९ ॥**

**६. जिन**—जहाँ पर दूसरी, तीसरी, चौथी, पाँचवीं तथा छठी मूषाएँ हों वह जिन नामक गृह कहा जाता है।

**७. सुजय**—सुजय नामक पञ्चभद्राओं वाले गृह में सातवीं मूषा सहित पहली चार मूषाएँ विहित होती हैं ॥ १७९ ॥

**पञ्चमीसप्तमीद्वित्रिपूर्वाः स्युर्विजयाभिधे ।**
**यत्रैकद्विचतुःपञ्चसप्तम्यो यामनाम तत् ॥ १८० ॥**

**८. विजय**—विजय नामक घर में पाँचवीं, सातवीं, दूसरी, तीसरी, पहली मूषाएँ होती हैं।

**९. याम**—जहाँ पर पहली, दूसरी, चौथी, पाँचवीं और सातवीं मूषाएँ हों उसका नाम याम है ॥ १८० ॥

**यत्रैकद्विचतुःपञ्चसप्तम्यस्तज्जयं विदुः ।**
**मूषा द्वित्रिचतुःपञ्चसप्तम्यो (जा?ज्ञा)तसंज्ञिते ॥ १८१ ॥**

**१०. जय**—जहाँ पर पहली, तीसरी, चौथी, पाँचवीं, सातवीं मूषाएँ हों उसको जय कहते हैं।

**११. ज्ञात**—ज्ञात संज्ञा वाले भवन में दूसरी, तीसरी, चौथी, पाँचवीं एवं सातवीं मूषाएँ होती हैं ॥ १८१ ॥

**आद्यास्तिस्रस्तथा षष्ठीसप्तम्यो यत्र तज्जपम् ।**
**आद्याद्वितुर्याषष्ठीभिः सप्तम्या च तपं विदुः ॥ १८२ ॥**

**१२. जप**—पहली, दूसरी, तीसरी, छठी और सातवीं मूषाएँ जहाँ पर हों उसको जप नामक गृह कहते हैं।

**१३. तप**—पहली, दूसरी, चौथी, छठी एवं सातवीं मूषाओं से युक्त तप नामक गृह होता है ॥ १८२ ॥

**षष्ठीत्रितुर्यासप्तम्यो ज(ये?मे) पूर्वान्विता मताः ।**
**द्वित्रितुर्यास्तथा षष्ठीसप्तम्यो वरसंज्ञिते ॥ १८३ ॥**

**१४. जम**—छठी, तीसरी, चौथी, सातवीं और पहली मूषाओं से युक्त जम कहलाता है।

**१५. वर**—दूसरी, तीसरी, चौथी, छठी, सातवीं मूषाओं से युक्त वर नामक गृह होता है ॥ १८३ ॥

**चरं तद् यत्र पूर्वे द्वे पञ्चषट्सप्तमीयुते ।**
**चैत्ये स्यात् सप्तमी षष्ठी पञ्चम्याद्या तृतीयका ॥ १८४ ॥**

**१६. चर**—जहाँ पर पहली दो और पाँचवीं, छठी तथा सातवीं मूषाएँ हों, उसको चर या चार गृह कहते हैं ।

**१७. वैर (= चैत्य)**—चैत्य में सातवीं, छठी, पाँचवीं, पहली और तीसरी मूषाएँ चैत्य (= वैर) नामक गृह में होती हैं ॥ १८४ ॥

**विरोषे द्वित्रिपञ्चम्यः स्यात् षष्ठी सप्तमी तथा ।**
**चतुर्थी पञ्चमी षष्ठी सप्तम्याद्या च सुप्रभे ॥ १८५ ॥**

**१८. विशिष (= विरोष)**—विरोष नामक गृह में दूसरी, तीसरी, पाँचवीं, छठी और सातवीं मूषाएँ होती हैं ।

**१९. सुप्रभ**—सुप्रभ नामक गृह में चौथी, पाँचवीं, छठी, सातवीं और पहली मूषा विहित होती हैं ॥ १८५ ॥

**प्रभाख्ये द्विचतुःपञ्चषष्ठ्यः स्युः सप्तमी तथा ।**
**त्रिचतुःपञ्चसप्तम्यः षष्ठी च स्यात् प्रतीक्षके ॥ १८६ ॥**

**२०. प्रभ**—प्रभ नामक घर में दूसरी, चौथी, पाँचवीं, छठी और सातवीं मूषाएँ विहित होती हैं ।

**२१. प्रतीक्षक**—प्रतीक्षक में तीसरी, चौथी, पाँचवीं, सातवीं और छठी मूषाएँ विहित होती है ॥ १८६ ॥

**आद्या चतस्रो यत्र स्युः साष्टम्यः क्षमिणं हि तत् ।**
**स(प्त ?) पूर्वा द्वित्रिपञ्चम्यो युक्तनाम्नि तथाष्टमी ॥ १८७ ॥**

**२२. क्षमिण**—पहले की चार और आठवीं मूषाएँ जिसमें हों वह क्षमिण नामक गृह कहलाता है ।

**२३. युक्त**—पहली, दूसरी, तीसरी, पाँचवीं और आठवीं मूषाएँ जहाँ हों उसका युक्त नाम वाला गृह है ॥ १८७ ॥

**शान्ते द्वितुर्यापञ्चम्यः पूर्वा स्यादष्टमी तथा ।**
**पूर्वात्रितुर्यापञ्चम्यः साष्टम्यस्त्वैतसंज्ञिते ॥ १८८ ॥**

**२४. शान्त**—शान्त नामक गृह में दूसरी, चौथी, पाँचवीं, पहली, आठवीं मूषाएँ होती है ।

**२५. त्रैत**—त्रैत नाम वाले भवन में पहली, तीसरी, चौथी, पाँचवीं एवं आठवीं मूषाएँ होती हैं ॥ १८८ ॥

**विनोदे द्वित्रिपञ्चम्यश्चतुर्थी चाष्टमी तथा ।**
**सन्दोहे त्वष्टमीषष्ठ्यौ तिस्रः पूर्वादिकास्तथा ॥ १८९ ॥**

**२६. विनोद**—विनोद नामक गृह में दूसरी, तीसरी, पाँचवीं, चौथी एवं आठवीं मूषाएँ होती है ।

**२७. सन्दोह**—सन्दोह में पहले की तीन और आठवीं तथा छठीं मूषाएँ कही गई हैं ॥ १८९ ॥

**आद्याद्वितुर्याषष्ठीभिरष्टम्या विप्रदोहकम् ।**
**षष्ठ्यष्टमीत्रितुर्याद्या यस्मिंस्तद् विद्रुतं विदुः ॥ १९० ॥**

**२८. विप्रदोहक**— पहली, दूसरी, चौथी, छठी और आठवीं मूषाओं से युक्त 'विप्रदोहक' नामक गृह होता है ।

**२९. विद्रुत**—जिसमें छठी, आठवीं, तीसरी, चौथी और पहली मूषाएँ हों उसको 'विद्रुत' नामक गृह कहते हैं ॥ १९० ॥

**द्वित्रितुर्याष्टमीषष्ठ्यो यत्र तत् सततं मतम् ।**
**आद्याद्विपञ्चमीषष्ठ्यस्ततनाम्नि तथाष्टमी ॥ १९१ ॥**

**३०. सतत**—दूसरी, तीसरी, चौथी, आठवीं और छठीं जहाँ हों उसको 'सतत' कहते हैं ।

**३१. तत**—तत नामक गृह में पहली, दूसरी, पाँचवीं, छठी और आठवीं मूषाएँ होती है ॥ १९१ ॥

**आद्यात्रिपञ्चमीषष्ठ्यो व्याकुले स्युस्तथाष्टमी ।**
**द्वित्रिपञ्चचतुष्षष्ठ्यो विज्ञेया लीनसंज्ञके ॥ १९२ ॥**

**३२. व्याकुल**—व्याकुल नामक गृह में पहली, तीसरी, पाँचवीं, छठी और आठवीं मूषाएँ होती है ।

**३३. लीन**—लीन संज्ञा वाले घर में दूसरी, तीसरी, पाँचवीं, चौथी और छठी मूषाएँ होती है ॥ १९२ ॥

**तुर्याद्यापञ्चमीषष्ठ्य आलीने स्युस्तथाष्टमी ।**
**द्वितुर्यापञ्चमीषष्ठ्यो विचित्रे तद्वदष्टमी ॥ १९३ ॥**

**३४. आलीन**—आलीन में चौथी, पहली, पाँचवीं, छठी और आठवीं मूषाएँ होती है ।

**३५. विचित्र**—विचित्र नामक गृह में दूसरी, चौथी, पाँचवीं, छठी और आठवीं मूषाएँ होती है ॥ १९३ ॥

**आद्याश्चतस्रो मूषाः स्युः साष्टम्यो लम्बनाह्वये ।**
**आद्यास्तिस्रोऽष्टमी तद्वत् सप्तम्यपि भवेत् खरे ॥ १९४ ॥**

**३६. लम्बन**—लम्बन नामक गृह में पहले की चार और आठवीं मूषाएँ विहित होती हैं ।

**३७. खर**—खर नामक गृह में आदि की तीन, आठवीं और सातवीं मूषाएँ होती हैं ॥ १९४ ॥

**शेखरे सप्तमीतुर्याद्वितीयाद्यास्तथाष्टमी ।**
**विबुधे त्वष्टमी तुर्या तृतीयाद्याथ सप्तमी ॥ १९५ ॥**

**३८. शेखर**—शेखर में सातवीं, चौथी, दूसरी, पहली और आठवीं मूषाएँ होती हैं ।

**३९. विबुध**—विबुध नामक गृह में आठवीं, चौथी, तीसरी, पहली और सातवीं मूषाएँ होती हैं ॥ १९५ ॥

**चैत्राख्ये द्व्यष्टमीतुर्यासप्तम्यः सतृतीयकाः ।**
**आद्याद्विपञ्चसप्तम्यो व्यासक्ताख्ये तथाष्टमी ॥ १९६ ॥**

**४०. चैत्र**—चैत्र नामक वेश्म में दूसरी, आठवीं, चौथी, सातवीं और तीसरी मूषाएँ होती हैं ।

**४१. व्यासक्त**—व्यासक्त नामक भवन में पहली, दूसरी, पाँचवीं, सातवीं और आठवीं मूषाएँ रहती है ॥ १९६ ॥

**आद्यात्रिपञ्चसप्तम्यः साष्टम्यः सम्पदाभिधे ।**
**यत्र द्वित्र्यष्टमीपञ्चसप्तम्यस्तत् पदं विदुः ॥ १९७ ॥**

**४२. सम्पद**—सम्पद नामक गृह में पहली, तीसरी, पाँचवीं, सातवीं और आठवीं मूषाएँ होती हैं ।

**४३. पद**—पद नामक गृह में दूसरी, तीसरी, आठवीं, पाँचवीं और सातवीं मूषाएँ विहित होती हैं ॥ १९७ ॥

**तुर्याद्यापञ्चमी (षष्ठी) सप्तम्यस्त्रिशिखे तथा ।**
**द्विपञ्चम्यष्टमीतुर्यासप्तम्यश्चतुराभिधे ॥ १९८ ॥**

**४४. त्रिशिख**—त्रिशिख नामक गृह में चौथी, पहली, पाँचवीं एवं छठी और सातवीं मूषाएँ होती है ।

**४५. चतुर**—चतुर नामक घर में दूसरी, पाँचवीं, आठवीं, चौथी और सातवीं मूषाएँ होती है ॥ १९८ ॥

**त्रिसप्तम्यष्टमीतुर्यापञ्चम्यः प्रान्तनामनि ।**
**आद्याद्वितीयासप्तम्यः षष्ठ्यष्टम्यौ च सुस्थिते ॥ १९९ ॥**

**४६. प्रान्त**—प्रान्त नामक गृह में तीसरी, सातवीं, आठवीं, चौथी और पाँचवीं मूषाएँ होती हैं ।

**४७. सुस्थित**—सुस्थित नामक गृह में पहली, दूसरी, सातवीं, छठी और आठवीं मूषाएँ होती हैं ॥ १९९ ॥

**दुःस्थितं यत्र षष्ठ्याद्या चतुर्थी सप्तमी तथा ।**
**स्थिरेऽष्टमीद्विसप्तम्यस्त्रिषष्ठ्यावपि च स्मृते ॥ २०० ॥**

**४८. दुःस्थित**—दुःस्थित नामक गृह में छठी, पहली, चौथी और सातवीं मूषाएँ होती है ।

**४९. स्थित**—स्थित नामक गृह में दूसरी, आठवीं, सातवीं, तीसरी और छठी मूषाएँ होती हैं ॥ २०० ॥

**चक्रे षष्ठ्यष्टमीतुर्यासप्तम्याद्याः प्रकीर्तिताः ।**
**वक्रे द्वितीयासप्तम्यौ षष्ठ्यष्टम्यौ चतुर्थिकाः ॥ २०१ ॥**

**५०. चक्र**—चक्र नामक गृह में छठी, आठवीं, चौथी, सातवीं और पहली मूषाएँ बताई गई हैं ।

**५१. वक्र**—वक्र नामक गृह में दूसरी, सातवीं, छठी और आठवीं के साथ चौथी मूषा भी होनी चाहिए ॥ २०१ ॥

**लघेऽष्टमीत्रिसप्तम्यौ षष्ठ्यष्टम्यौ च कीर्तिते ।**
**पञ्चमीसप्तमीषष्ठ्यो लाभे पूर्वाष्टमी तथा ॥ २०२ ॥**

**५२. लघ**—लघ नामक गृह में आठवीं, तीसरी, सातवीं, चौथी और छठी मूषाएँ होती हैं ।

**५३. लाभ**—लाभ नामक गृह में पाँचवीं, सातवीं, छठी एवं पहली और आठवीं मूषाएँ विहित होती हैं ॥ २०२ ॥

**द्विपञ्चसप्तम्यष्टम्यः षष्ठी सम्पर्कसंज्ञिते ।**
**त्रिपञ्चषष्ठीसप्तम्यौ मूलनाम्नि तथाष्टमी ॥ २०३ ॥**

**५४. सम्पर्क**—सम्पर्क संज्ञा वाले गृह में दूसरी, पाँचवीं, सातवीं, आठवीं और छठी मूषाएँ होती हैं ।

**५५. मूल**—मूल नामक घर में तीसरी, पाँचवीं, छठी, सातवीं और आठवीं मूषाएँ होती है ॥ २०३ ॥

**स्युरष्टसप्तषट्पञ्चचतुर्थ्यस्त्वव्ययाभिधे ।**

**५६. अव्यय**—अव्यय नाम वाले गृह में आठवीं, सातवीं, छठी, पाँचवीं और चौथी मूषाएँ होती हैं ।

**षड्भद्रभेदेषु किन्नरादिषु मूषास्थितिः**

**पूर्वाद्या यत्र षण्मूषाः किन्नरं नाम तद् गृहम् ॥ २०४ ॥**

**किन्नरादि षड्भद्रों के अट्ठाइस भेदों में मूषा की स्थिति—**

**१. किन्नर**—जिस घर में पहले की छह मूषाएँ होती हैं उस गृह का नाम किन्नर कहा गया है ॥ २०४ ॥

**यत्राद्याः पञ्च सप्तम्या सह तत् कौस्तुभं विदुः ।**
**पूर्वाद्वित्रिचतुःषष्ठीसप्तम्यो हर्म्यसंज्ञिते ॥ २०५ ॥**

**२. कौस्तुभ**—जहाँ पर सातवीं के सहित पहले की पाँच मूषाएँ हों उसको कौस्तुभ गृह कहते हैं ।

**३. हर्म्य**—हर्म्य संज्ञा वाले भवन में पहली, दूसरी, तीसरी, चौथी, छठी और सातवीं मूषाएँ होती हैं ॥ २०५ ॥

**सप्तमी पञ्चमी षष्ठी द्वित्रिपूर्वाश्च धार्मिके ।**
**निषधे द्विचतुःपञ्चषष्ठ्याद्याः सप्तमी तथा ॥ २०६ ॥**

**४. धार्मिक**—धार्मिक नामक गृह में सातवीं, पाँचवीं, छठी, दूसरी तथा तीसरी एवं पहली मूषाएँ होती हैं ।

**५. निषध**—निषध नामक गृह में दूसरी, चौथी, पाँचवीं, छठी, पहली और सातवीं मूषाएँ कही गयी हैं ॥ २०६ ॥

**त्रिचतुःपञ्चषट्सप्तम्याद्याः स्युर्यत्र तद् वसु ।**

**साटीके त्रिचतु:पञ्चद्विषष्ठ्य: स्युस्तथाष्टमी ॥ २०७ ॥**

**६. वसु**—जिसमें तीसरी, चौथी, पाँचवीं, छठी, सातवीं और पहली मूषाएँ हों वह वसु नामक घर होता है ।

**७. साटीक**—साटीक नामक गृह में तीसरी, चौथी, पाँचवीं, दूसरी, छठी और आठवीं मूषाएँ होती हैं ॥ २०७ ॥

**यत्राद्यापञ्चसप्तम्यो वामनं नाम तद् विदु: ।**
**आद्याद्वित्रिचतु:षष्ठ्य: साष्टम्यो गौरनामनि ॥ २०८ ॥**

**८. वामन**—वामन नामक घर वह होता है जिसमें आदि की पाँच और सातवीं मूषा होती है ।

**९. गौर**—गौर नाम वाले घर में पहली, दूसरी, तीसरी, चौथी, छठी और आठवीं मूषाएँ होती है ॥ २०८ ॥

**आद्याद्वित्र्यष्टमीषष्ठ्य: पञ्चमी चास्थिराभिधे ।**
**क्रमिणे त्रिचतु:पञ्चपूर्वा: षष्ठ्यष्टमी तथा ॥ २०९ ॥**

**१०. अस्थिर**—अस्थिर नाम वाले घर में पहली, दूसरी, तीसरी, आठवीं, छठी और पाँचवीं मूषाएँ होती है ।

**११. क्रमिण**—क्रमिण नामक गृह में तीसरी, चौथी, पाँचवीं, पहली, छठी और आठवीं मूषाएँ कही गयी हैं ॥ २०९ ॥

**खले पूर्वाष्टमीषष्ठीत्रितुर्या: पञ्चमीयुता: ।**
**विवरे त्रिचतु:पञ्चद्विषष्ठ्य: स्युस्तथाष्टमी ॥ २१० ॥**

**१२. खल**—खल नामक गृह में पहली, आठवीं, छठी, तीसरी, चौथी और पाँचवीं मूषाएँ होती हैं ।

**१३. विवर**—तीसरी, चौथी, पाँचवीं, दूसरी, छठी और आठवीं मूषाएँ विवर नामक गृह में होती हैं ॥ २१० ॥

**आद्याद्वित्रिचतु:सप्तम्यष्टम्यो वालिशाभिधे ।**
**पूर्वाष्टमीद्वित्रिसप्तपञ्चम्यो धौमनामनि ॥ २११ ॥**

**१४. बालिश**—'बालिश' नामक गृह में पहली, दूसरी, तीसरी, चौथी, सातवीं और आठवीं मूषा होती हैं ।

**१५. धौम**—'धौम' नामक गृह में पहली, आठवीं, दूसरी, तीसरी, सातवीं और पाँचवीं मूषाएँ होती है ॥ २११ ॥

**त्रिपुष्टे द्विचतुःपञ्चसप्तम्याद्यास्तथाष्टमी ।**
**मन्दिरे त्रिचतुःपञ्चसप्तम्याद्यास्तथाष्टमी ॥ २१२ ॥**

**१६. त्रिपुष्ट**—त्रिपुष्ट नामक गृह में दूसरी, चौथी, पाँचवीं, सातवीं, पहली और आठवीं मूषाएँ होती हैं ।

**१७. मन्दिर**—मन्दिर नामक गृह में तीसरी, चौथी, पाँचवीं, सातवीं, पहली और आठवीं मूषाओं का विधान किया गया है ॥ २१२ ॥

**भवे द्वित्रिचतुःपञ्चम्यष्टम्यः सप्तमी तथा ।**
**अशोके द्वित्रिषट्सप्तम्यष्टम्यः पूर्वया सह ॥ २१३ ॥**

**१८. भव**—दूसरी, तीसरी, चौथी, पाँचवीं, आठवीं और सातवीं मूषाएँ भव नामक गृह में होती हैं ।

**१९. अशोक**—पहली के साथ दूसरी, तीसरी, छठी, सातवीं और आठवीं मूषाएँ अशोक नामक गृह में मानी गयी हैं ॥ २१३ ॥

**भास्वरे द्विचतुःषष्ठ्यः सप्तम्याद्याष्टमीयुता ।**
**त्रिसप्तम्यष्टमीषष्ठीतुर्याद्याश्चौप्यसंज्ञिते ॥ २१४ ॥**

**२०. भास्वर**—भास्वर नामक गृह में दूसरी, चौथी, छठी, सातवीं, पहली और आठवीं मूषाएँ कही गई हैं ।

**२१. औप्य**—औप्य नामक गृह में तीसरी, सातवीं, आठवीं, छठी, चौथी और पहली मूषाओं का विधान किया गया है ॥ २१४ ॥

**द्वित्रितुर्याष्टमीषष्ठ्यो लातव्ये सप्तमी तथा ।**
**द्विसप्तम्याष्टमीषष्ठीपञ्चम्याद्याश्च सुस्वने ॥ २१५ ॥**

**२२. लातव्य**—दूसरी, तीसरी, चौथी, आठवीं, छठीं और सातवीं मूषाएँ लातव्य नामक गृह में होती हैं ।

**२३. सुस्वन**—सुस्वन में दूसरी, सातवीं, आठवीं, छठीं, पाँचवीं और पहली मूषा सुस्वन नामक गृह में होती है ॥ २१५ ॥

**त्रिपञ्चम्यष्टमीषष्ठीसप्तम्याद्यास्तथा मखे ।**
**द्वित्रिसप्ताष्टमीषष्ठीपञ्चम्यो वाजिसंज्ञिते ॥ २१६ ॥**

**२४. मख**—तीसरी, पाँचवीं, आठवीं, छठी, सातवीं और पहली मूषा मख नामक गृह में होती है ।

**२५. वाजि**—दूसरी, तीसरी, सातवीं, आठवीं, छठी और पाँचवीं मूषाओं का विधान वाजि नामक गृह में बताया गया है ॥ २१६ ॥

**नेत्रे पूर्वाचतुःपञ्चषट्सप्तम्योऽष्टमी तथा ।**
**भ्रमे स्युर्द्विचतुःपञ्चषट्सप्तम्योऽष्टमी तथा ॥ २१७ ॥**

**२६. नेत्र**—पहली, चौथी, पाँचवीं छठी, सातवीं और आठवीं मूषा नेत्र नामक गृह में होती है ।

**२७. भ्रम**—दूसरी, चौथी, पाँचवीं, छठी, सातवीं और आठवीं मूषाएँ भ्रम नामक गृह में मानी गयी हैं ॥ २१७ ॥

**घोषे च त्रिचतुःपञ्चषट्सप्तम्योऽष्टमी तथा ।**

**२८. घोष**—घोष नामक गृह में तीसरी, चौथी, पाँचवीं, छठी, सातवीं और आठवीं मूषाएँ होती हैं ॥ २१८ ॥

**सप्तभद्रभेदेषु भाण्डीरादिषु मूषास्थितिः**

**एकद्वित्रिचतुःपञ्चषट्सप्तम्यो भवन्ति चेत् ॥ २१८ ॥**
**मूषास्तदानीं भाण्डीरमिति प्राहुर्निवेशनम् ।**

**भाण्डीर आदि सप्तभद्र वाले गृह के सात भेदों में मूषा की स्थिति—**

**१. भाण्डीर**—यदि पहली, दूसरी, तीसरी, चौथी, पाँचवीं, छठी और सातवीं मूषाएँ हों तो उस निवेश को भाण्डीर कहते हैं ॥ २१८-२१९ ॥

**एकद्वित्रिचतुःपञ्चषष्ठ्यो यत्र तथाष्टमी ॥ २१९ ॥**
**तद् वैसनमिति प्राहुर्वास्तुविद्याविदो गृहम् ।**
**एकद्वित्रिचतुःपञ्चसप्ताष्टम्यो गृहे यदि ॥ २२० ॥**
**मूषा भवन्ति तद् विद्यात् प्रस्थमित्यभिधानतः ।**

**२. वैसन**—जहाँ पर पहली, दूसरी, तीसरी, चौथी, पाँचवीं, छठी और आठवीं मूषाएँ हों उसको वास्तु-विद्या-विशारद वैसन नामक गृह कहते हैं ॥ २१९-२२० ॥

**३. प्रस्थ**—जिस घर में पहली, दूसरी, तीसरी, चौथी, पाँचवीं, सातवीं, आठवीं मूषाएँ हों उसका नाम प्रस्थ जानना चाहिए ॥ २२०-२२१ ॥

**एकद्वित्रिचतुर्थ्यः स्युः षष्ठी सप्तम्यथाष्टमी ॥ २२१ ॥**
**यस्मिन् मूषास्तदत्राहुः प्रतानमिति मन्दिरम् ।**

**४. प्रतान**—पहली, दूसरी, तीसरी, चौथी, छठी, सातवीं और आठवीं मूषाएँ जिसमें हों उसको प्रतान नामक भवन कहते हैं ॥ २२१-२२२ ॥

चतुर्थीवर्जिताभिः स्यान्मूषाभिर्वेश्म वासुलम् ॥ २२२ ॥
कटं तृतीयाहीनाभिर्विज्ञातव्यं निवेशनम् ।
मूषाभिरद्वितीयाभिर्लक्ष्मीवासमुदाहृतम् ॥

**५. वासुल**—चौथी मूषा को छोड़कर और सभी मूषाओं से युक्त वासुल नामक भवन होता है । **६. 'कट'**—नामक निवेश में तीसरी मूषा छोड़कर अन्य सभी मूषाओं की योजना करनी होती है । **७. लक्ष्मी**—दूसरी मूषा को छोड़कर अन्य मूषाएँ जहाँ पर हों उसको लक्ष्मीवास कहा गया है ॥ २२२-२२३ ॥

अष्टभद्रे सर्वतोभद्राख्ये मूषास्थितिः

सुगन्धान्तमनाद्याभिरष्टाभिः सर्वभद्रकम् ॥ २२३ ॥
इत्येकभद्रप्रभृतीनि वेश्मा-
न्युक्तानि यावद्गृहमष्टभद्रम् ।
एतांश्चतुश्शालगृहप्रभेदान् यो
वेत्ति पूजां स लभेत लोके ॥ २२४ ॥

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे चतुश्शालविधानं नाम एकोनविंशोऽध्यायः ॥ १९ ॥**

...

**आठ भद्राओं वाले सर्वतोभद्र में मूषा की स्थिति**—आदि को छोड़कर अन्य मूषाओं से युक्त सुगन्धान्त गृह होता है और आठों मूषाओं से 'सर्वभद्रक' निष्पन्न होता है ॥ २२३ ॥

इस प्रकार से एकभद्रादि अष्टभद्रान्त सभी प्रकार के भवनों के वास्तु के लक्षण बताए गये । इस तरह इन चतुःशालाओं वाले भवन के भेदों को जो जानता है वह विद्वान् इस लोक में सभी से पूजित होता है ॥ २२४ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'चतुश्शालविधान' नामक उन्नीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ १९ ॥**



# व्याख्यात्मक टिप्पणी

## चतुश्शाल गृह (१९.६-७, ७५-७९)

चतुश्शाल गृहों की यही संज्ञायें अन्य ग्रन्थों में भी प्राप्त होती हैं—

१. **मत्स्यपुराण** (२५४) में सर्वतोभद्र, नन्द्यावर्त, वर्धमान, स्वस्तिक एवं रुचक चतुश्शाल भवनों के वर्णन तथा लक्षण इस प्रकार प्राप्त होते हैं—

चतुःशालं प्रवक्ष्यामि स्वरूपान्नामतस्तथा ।
चतुःशालं चतुर्द्वारैरलिन्दैः सर्वतोमुखम् ॥
नाम्ना तत् सर्वतोभद्रं शुभं देवनृपालये ।
पश्चिमद्वारहीनं च नन्द्यावर्तं प्रचक्षते ॥
दक्षिणद्वारहीनं तु वर्धमानमुदाहृतम् ।
पूर्वद्वारविहीनं तत् स्वस्तिकं नाम विश्रुतम् ॥
रुचकं चोत्तरद्वारविहीनं तत् प्रचक्षते । (१-४)

२. **बृहत्संहिता** (५३) में सर्वतोभद्रादि का वर्णन इस प्रकार प्राप्त होता है—

अप्रतिषिद्धालिन्दं समन्ततो वास्तु सर्वतोभद्रम् ।
नृपविबुधसमूहानां कार्यं द्वारैश्चतुर्भिरपि ॥
नन्द्यावर्तमलिन्दैः शालाकुड्यात् प्रदक्षिणान्तगतैः ।
द्वारं पश्चिममस्मिन् विहाय शेषाणि कार्याणि ॥
द्वारालिन्दोऽन्तगतः प्रदक्षिणोऽन्यः शुभस्ततश्चान्यः ।
तस्मिंश्च वर्धमाने द्वारं तु न दक्षिणं कार्यम् ॥
अपरोऽन्तगतोऽलिन्दः प्रागन्तगतौ तदुत्थितौ चान्यौ ।
तदवधिविधृतश्चान्यः प्राग्द्वारं स्वस्तिके शुभदम् ॥
प्राक्पश्चिमावलिन्दावन्तगतौ तदवधिस्थितौ शेषौ ।
रुचके द्वारं न शुभदमुत्तरतोऽन्यानि शस्तानि ॥ (३१-३५)

३. **वास्तुराजवल्लभ** (७.२७-२९) में अलिन्द द्वार तथा षड्दारु (= पाटन) आदि के प्रयोग से चन्द्र, मलय, शोभन, सुकर्ण, नागेन्द्र, चक्र, जयावह, मकरध्वज एवं कामद भेदों का भी वर्णन किया गया है ।

इसके अतिरिक्त चतुश्शाल गृह के भेदों का वर्णन **मानसोल्लास** (१.३, ४५, ४९), **अग्निपुराण** (१०५, १०६), तथा **अपराजितपृच्छा** (९२) में भी प्राप्त होता है ।

**४. मयमतम् (२६.६६-६७)** के अनुसार—चतुश्शाल गृह का वर्णन इस प्रकार है—

> आद्यं तु सर्वतोभद्रं द्वितीयं वर्धमानकम् ॥
> तृतीयं स्वस्तिकं चैव नन्द्यावर्तं चतुर्थकम् ।
> पञ्चमं रुचकं विद्याच्छालानामभिधानकम् ॥

इनमें प्रथम भवन की संज्ञा सर्वतोभद्र है तथा द्वितीय की वर्धमान, तृतीय की स्वस्तिक और चतुर्थ की नन्द्यावर्त एवं पाँचवें चतु:शाल भवन की रुचक संज्ञा कही गई है ।



# अथ विंशोऽध्यायः

## * निम्नोच्चादिफलानि[1] *

## (Merits and Demerites of the High and Low Portions of the House and Land)

अग्रपृष्ठशब्दयोः परिभाषा

**अग्रतः पृष्ठतः शब्दौ द्वारेण नियतौ गृहे ।**
**यतो द्वारं तदग्रं स्यात् पृष्ठं पृष्ठमुदाहृतम् ॥ १ ॥**

**भूमि के निम्नोच्च आदि का फल—**

**'अग्र' एवं पृष्ठ शब्द की परिभाषा**—गृह मे दरवाजे से नियत स्थान पर 'अग्र' एवं 'पृष्ठ' इन दो शब्दों का प्रयोग होता है । उनमें घर में जहाँ से द्वार होता है उसको 'अग्र' कहते हैं तथा पीछे के भाग को 'पृष्ठ' कहते हैं ॥ १ ॥

द्रव्यायामादिभिः शालाया आधिक्ये फलम्

**द्रव्यायामोदयव्यासैः शाला यत्राधिका भवेत् ।**
**वामा वा दक्षिणा वापि अग्रतः पृष्ठतोऽपि वा ॥ २ ॥**
**हन्ति द्रव्याधिका द्रव्यमायामाभ्यधिका कुलम् ।**
**उच्छ्रायाभ्यधिका पूजां सन्ततिं विस्तराधिका ॥ ३ ॥**

**शाला में द्रव्य एवं आयाम आदि के आधिक्य का फल**—जिस घर की शाला (कमरे) द्रव्य, आयाम, उदय और व्यास के विहित प्रमाण से अधिक होती है और यह आधिक्य चाहे वाम भाग में अथवा दक्षिण भाग में हो, आगे हो अथवा पीछे हो, तो 'द्रव्य' के आधिक्य से नौकर का नाश होता है और 'आयाम' के आधिक्य से कुल का नाश होता है, ऊँचाई के आधिक्य से पूजा का नाश और विस्तार के आधिक्य से संतति का नाश माना गया है ॥ २-३ ॥

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह पच्चीसवाँ अध्याय है ।

### गृहभूमेर्वामदक्षिणादिभागेषु निम्नोन्नतत्वे फलम्

**यस्य निम्ना भवेद् भूमिर्वामा दक्षिणकास्थला ।**
**बहुदोषं हि तद् वास्तु पुत्रपौत्रविनाशकम् ॥ ४ ॥**

**गृह के वाम एवं दक्षिण आदि भागों के नीची या ऊँची भूमि का फल—** जिस गृह के दक्षिण की खुली भूमि बायीं ओर नीची होती है तो उस गृह का वास्तु बहुत प्रकार के दोष उत्पन्न करने वाला होता है तथा पुत्र एवं पौत्र का भी विनाशकारक समझा जाता है ॥ ४ ॥

**यस्य दक्षिणका निम्ना भूमिर्वामास्थला भवेत् ।**
**यत्नेनापि कृतं तत् स्याद् भर्तुरल्पफलोदयम् ॥ ५ ॥**

जिस गृह की बायीं ओर की खुली भूमि दक्षिण की ओर नीची होती है तो प्रयत्न करने पर भी गृहस्वामी के लिए अल्प फल ही देने वाली होती है ॥ ५ ॥

**पश्चिमेन भवेन्निम्ना भूमिः स्थूलतराग्रतः ।**
**यत्र तत् सर्ववर्णेषु सर्वकामप्रदं गृहम् ॥ ६ ॥**

जहाँ पर पश्चिम दिक् में नीची भूमि होती है और उस के आगे की भूमि उठी (स्थूल) होती है उस भूमि पर (ब्राह्मण क्षत्रियादि) सभी वर्णों के लिए सभी प्रकार के मनोरथ दायक गृह निर्मित होते हैं ॥ ६ ॥

**अग्रतश्च यदा हीनं पृष्ठतश्चोच्छ्रितं भवेत् ।**
**भवनं स्वामिनो ह्याशु विरागव्यसनाय तत् ॥ ७ ॥**

जब अग्र भाग से नीचा और पृष्ठ भाग से ऊँचा गृह होता है तो गृहस्वामी के लिए शीघ्र ही विराग उत्पन्न करने वाला और मद्य आदि के व्यसनों को उपस्थित करने वाला होता है ॥ ७ ॥

### सच्छत्रादिकं चतुर्विधं गृहं, तल्लक्षणं च

**सच्छत्रं च सकक्षं च तथैव सपरिक्रमम् ।**
**सप्रभं च समाख्यातं गृहमत्र चतुर्विधम् ॥ ८ ॥**
**बाह्योदकं च सच्छत्रं सकक्षमुभयोदकम् ।**
**सावश्यायं तु यद् वेश्म तद् विद्यात् सपरिक्रमम्॥ ९ ॥**
**एकेनाप्यत्र मुखतः पृष्ठतः पार्श्वतोऽपि वा ।**
**सप्रभं स्यादलिन्देन लक्षणं तु पृथक् पृथक् ॥ १० ॥**

**सच्छत्रादि चार प्रकार के गृह और उनके लक्षण—**भूमि दृष्टि से चार प्रकार

का भवन कहलाता है—१. सच्छत्र, २. सकक्ष, ३. सपरिक्रम, और ४. सप्रभ। बाह्योदक (बाहर जल वाला) गृह 'सच्छत्र' होता है और उभयोदक (दो ओर से जल गिरने वाला) 'सकक्ष' गृह होता है। 'सपरिक्रम' गृह वह होता है जो हमेशा नमी वाला (= सावश्याय) होता है। गृह के आगे की ओर से बना हुआ, अथवा पीछे की ओर से निर्मित, अथवा दोनों ओर निर्मित बरामदा या इनमें से एक तरफ से भी बरामदा (अलिन्द) निर्मित होने पर वह 'सप्रभ' गृह कहा जाता है। इस प्रकार इनके लक्षण अलग-अलग कहे गये हैं ॥ ८-१० ॥

### गृहस्य मुखादिभागेष्वलिन्दकल्पना

**एकोऽलिन्दस्तु कर्तव्यो मुखतो दक्षिणेन वा।**
**मुखे राजप्रसादाय दक्षिणेऽर्थविवर्धनः ॥ ११ ॥**

**गृह के आदिभाग में अलिन्द की कल्पना का निरूपण**—गृह के अग्रभाग में अथवा दक्षिण भाग में एक बरामदा (अलिन्द) अवश्य बनाना चाहिये। यदि अग्रभाग में बार्जा (अलिन्द) होता है तो राजा के लिए सुखकारक होता है और यदि दक्षिण भाग में बरामदा होता है तो गृहस्वामी के धन की वृद्धि करता है ॥ ११ ॥

**वामतस्तु न कर्तव्य एकोऽलिन्दो न पृष्ठतः।**
**वामतोऽर्थविनाशाय पृष्ठतो म्रियते गृही ॥ १२ ॥**

गृह के वाम भाग में या पृष्ठ भाग में एक भी अलिन्द (= बरामदा) नहीं बनाना चाहिये क्योंकि वाम भाग से अर्थ का नाश होता है और पृष्ठ भाग से गृहस्वामी की मृत्यु उपस्थित होती है ॥ १२ ॥

**यस्य स्यातामलिन्दौ द्वौ गृहस्योभयपार्श्वयोः।**
**धनलाभं विजानीयात् तत्प्रवेशे कुटुम्बिनः ॥ १३ ॥**

जिस घर के अगल-बगल दोनों तरफ दो-दो अलिन्द (= ओसारा) होते हैं तो उस गृह में प्रवेश करने पर ही कुटुम्बियों के लिए वह धन लाभ करने वाला गृह होता है ॥ १३ ॥

**यस्य स्यातामलिन्दौ द्वावग्रतः पृष्ठतस्तथा।**
**धनधान्यमवाप्नोति सौभाग्यं चापि तद्गृही ॥ १४ ॥**

जिस घर के आगे और पीछे के भाग में दो-दो अलिन्द होते हैं तो उस घर का मालिक धन-धान्य और सौभाग्य को प्राप्त करता है ॥ १४ ॥

### तत्रैव हलकालिन्दकल्पना, तत्फलं च

**यस्य वा हलकालिन्दो मुखतो दक्षिणेन वा ।**
**राजप्रसादैस्तत्स्वामी धनधान्यैश्च वर्धते ॥ १५ ॥**

**गृह के मुख आदि भागों में हलक नामक आलिन्द की कल्पना का निरूपण एवं उनका फल**—जिस घर के अग्रभाग में अथवा दक्षिण भाग में 'हलक' संज्ञक बरामदा (= आलिन्द) होता है उसका गृहस्वामी राजा का कृपापात्र होता है तथा वह धन धान्य से वृद्धि को प्राप्त होता है ॥ १५ ॥

**वामतो हलकालिन्दो मुखतश्च कृतो यदि ।**
**राजदण्डभयं विद्यात् पत्नी चास्य विनश्यति ॥ १६ ॥**

यदि गृह के वाम भाग में और मुख भाग में 'हलक' नामक अलिन्द का निर्माण किया जाता है तो राजा से दण्ड का भय उपस्थित होता है और मकान मालिक की पत्नी नष्ट हो जाती है ॥ १६ ॥

**दक्षिणो हलकालिन्दः पश्चिमश्च कृतो यदि ।**
**ततः परापि वृद्धिः स्यात् सौभाग्यं च परं भवेत् ॥ १७ ॥**

गृह के दक्षिण अथवा पश्चिम की ओर से यदि 'हलक' नामक अलिन्द (= बरामदा) बनाया जाता है तो गृहस्वामी की उत्कृष्ट रूप से वृद्धि होती है और उसे परम सौभाग्य प्राप्त होता है ॥ १७ ॥

**पृष्ठतो हलकालिन्दो वामतश्च कृतो यदि ।**
**कलत्रमरणं तत्र भवेत् दुर्भगतापि वा ॥ १८ ॥**

गृह के पीछे अथवा बाएँ भाग से यदि 'हलक' नामक अलिन्द का निर्माण किया जाता है तो स्त्री की मृत्यु और दुर्भाग्य आपतित होते हैं ॥ १८ ॥

### अलिन्दनिर्माणफलकथनम्

**पृष्ठतो वामतश्चैव पुरतो दक्षिणेन वा ।**
**अलिन्दस्य कृतस्याथ वक्ष्यामोऽनुक्रमात् फलम् ॥ १९ ॥**
**पृष्ठतो दारनाशाय धनलाभाय दक्षिणे ।**
**अग्रे राजप्रसादाय वामतोऽर्थविनाशनः ॥ २० ॥**

**अलिन्द (बार्जा) के निर्माण का शुभाशुभ फल**—अब गृह के पीछे, बाएँ, आगे अथवा दाएँ यदि बरामदा (अलिन्द) का निर्माण होता है तो उसका क्रमशः इस प्रकार फल कहते हैं—पीछे निर्मित बरामदे से स्त्री का

नाश होता है और दक्षिण में निर्मित बरामदे से धन लाभ तथा गृह के मुख भाग में निर्माण करने से राजप्रसाद प्राप्त होता है और बाएँ भाग में निर्मित बरामदे से अर्थ विनाश होता है ॥ १९-२० ॥

**सुसमापिते सति वास्तुनि फलम्**

**समापितं तु यद् वास्तु सर्वतः परिशोधितम् ।**
**स्वामिनस्तद् भवेद् धन्यं स्थपतेश्च यशस्करम् ॥ २१ ॥**
**अर्जितं वर्धते तस्य वृद्धिश्च स्यान्नृपश्रिया ।**
**धर्मकामाश्च वर्धन्ते कीर्त्तिरायुर्यशो बलम् ॥ २२ ॥**

**वास्तुशास्त्र के अनुकूल निर्मित घर का फल**—जिस घर का वास्तु ठीक-ठीक बन जाने (समाप्त होने) पर सभी तरफ से परिशोधित किया जाता है तो वह गृहस्वामी के लिये लाभकारी और 'स्थपति' कारीगर के लिए यशस्कर होता है तथा उसका कमाया हुआ धन बढ़ता है और राज्य लक्ष्मी के द्वारा भी उसकी अभिवृद्धि होती है । चार पुरुषार्थ में उसके धर्म और काम की वृद्धि होती है । कीर्ति, आयु, यश और बल की भी वृद्धि होती है ॥ २१-२२ ॥

**नित्यं प्रक्रीडितजनं नित्यं सन्निहितश्रि तत् ।**
**नृत्यवादित्रगीतैश्च नित्यामोदं निरामयम् ॥ २३ ॥**

नाच एवं बाजे और गायन आदि से वहाँ पर नित्य आमोद हों तो उस गृह में रोग नहीं दिखलाई पड़ता तथा लक्ष्मी सदैव वहाँ सन्निहित रहती हैं ॥ २३ ॥

**बहुप्रकारेषु त्रिशालेषु निन्द्यौ प्रकारौ**

**तत्र नैकप्रकाराणि त्रिशालान्युपलक्षयेत् ।**
**प्रकारेषु च सर्वेषु निन्द्यौ याम्यापरोज्झितौ ॥ २४ ॥**
**एकस्मिन् स्वामिनो मृत्युपरस्मिन् धनक्षयः ।**

**बहुत प्रकार के त्रिशाल भवनों में दो निन्दित वास्तु**—वहाँ पर एक ही प्रकार की त्रिशालाओं का उपलक्षण नहीं करना चाहिए और उन सभी प्रकारों में याम्य (दक्षिण) एवं अपरोज्झित अर्थात् पश्चिम दिशा से वर्जित भवन निन्द्य माने गये हैं क्योंकि एक में गृहस्वामी की मृत्यु सम्भावित होती है अर्थात् मृत्युतुल्य कष्ट होता है और दूसरे में धन का नाश होता है ॥ २४-२५ ॥

**तत्रैव त्रिशालेषु धन्यौ प्रकारौ, तेषां चतुर्णां नामानि**

**पूर्वोत्तरोज्झितौ धन्यौ संज्ञाश्चैषां प्रकारतः ॥ २५ ॥**

**स्युरुदक्पूर्वयाम्याप्यशालाहीनान्यनुक्रमात् ।**
**हिरण्यनाभसुक्षेत्रचुल्लीपक्षघ्ननामभिः ॥ २६ ॥**

**उन त्रिशाल भवनों में दो धन्य प्रकार और उनके चार विभाग**—पूर्वोज्झित तथा उत्तरोज्झित गृह धन्य माने गये हैं इनकी निम्न संज्ञाएँ हैं—उत्तर, पूर्व, दक्षिण तथा पश्चिम में शालाहीन, भवनों के नाम क्रमशः १. हिरण्यनाभ, २. सुक्षेत्र, ३. चुल्ली और ४. पक्षघ्न नाम से प्रसिद्ध हैं ॥ २५-२६ ॥

**सिद्धार्थादीनां षण्णां द्विशालवेश्मनां स्वरूपं फलं च**

**विनियोगो यथालिन्दमलिन्दव्यूढिरिच्छया ।**
**वेश्मान्यथ द्विशालानि कीर्त्यन्ते षड् यथाक्रमम् ॥ २७ ॥**

**सिद्धार्थादि छह प्रकार के द्विशाल भवनों के स्वरूप एवं फल**—अलिन्दों का विनियोग तथा बनाने का विहित प्रमाण आदि यथा प्रतिपादित अथवा जैसा ठीक समझे वैसा बना लें । इस दृष्टि से दो शालाओं वाले घरों की क्रमशः छह संज्ञाएँ अब बताई जाती हैं ॥ २७ ॥

**दिक्कर्णेषु द्विशालानि तत्कर्णान्येषु निर्दिशेत् ।**
**सम्मुखे द्वे समेतानि षडेतान्युपलक्षयेत् ॥ २८ ॥**

दिशाओं के कोनों पर दो शालाओं को तथा अन्य कर्णों पर अर्थात् दूसरी दिशाओं में दो शालाओं वाले भवनों की व्यवस्था करनी चाहिये और सम्मुख में आमने-सामने दो शालाओं को एकत्रित (एक साथ) करना चाहिये । इस प्रकार से निम्न विधान से सिद्धार्थ आदि छहों प्रकार के द्विशाल भवनों का उपलक्षण सम्पादित कर वास्तु निर्माण करना चाहिये ॥ २८ ॥

**सिद्धार्थं दक्षिणाप्रत्यग् भवन्त्यत्रार्थसिद्धयः ।**
**यमसूर्यमुदक्प्रत्यक् तत्र मृत्युभयं सदा ॥ २९ ॥**
**प्रागुदीच्योस्तु दण्डः स्याद् दण्डस्तत्र सदा भवेत् ।**
**प्राग्याम्ययोस्तु वाताख्यं वास्तु तत् कलहोत्तरम् ॥ ३० ॥**

**१. सिद्धार्थ**—दक्षिण और पश्चिम वाला द्विशाल भवन **सिद्धार्थ** नाम से अभिहित होता है और वहाँ पर सभी अर्थों की सिद्धि होती है । **२. यमसूर्य**—उत्तर और पूर्व की ओर द्विशाल भवन **यमसूर्य** के नाम से पुकारा जाता है और वहाँ सदैव मृत्युभय बना रहता है । **३. दण्ड**—पूर्व तथा उत्तर की ओर द्विशाल भवन **दण्ड** के नाम से अभिहित होता है । वहाँ पर सदैव दण्ड का भय बना

रहता है । **४. वात**—पूर्व और दक्षिण की ओर द्विशाल भवन **वात** संज्ञक वास्तु होता है जो कलह कारक होता है ॥ २९-३० ॥

**उदग्दक्षिणसाम्मुख्ये द्विशालं काचवास्त्विति ।**
**तत्र ज्ञातिविरोधः स्यान्न तत् कुर्यात् कदाचन ॥ ३१ ॥**

**५. काच**—उत्तर एवं दक्षिण के सामख्य यदि दो शालाओं वाला काच नामक वास्तु विनिर्मित होता है तो वहाँ पर सदैव बन्धु बान्धवों में विरोध उपस्थित रहता है । अतः इस प्रकार का निर्माण कभी नहीं करना चाहिये ॥ ३१ ॥

**प्राक्प्रतीच्योस्तु साम्मुख्ये चुल्लीवास्तु विनिर्दिशेत् ।**
**तत्र वित्तक्षयो घोरः कदाप्येतन्न कारयेत् ॥ ३२ ॥**

**६. चुल्ली**—पूर्व और पश्चिम के सामुख्य में **चुल्ली** नामक द्विशाल गृह वास्तु बनाया जाता है तो वहाँ घोर धन नाश होता है । इसलिए पूर्व-पश्चिम के सम्मुख घर कभी नहीं बनवाना चाहिये ॥ ३२ ॥

### सप्तशालेषु मणिच्छन्दादीनां स्वरूपप्रकटनम्

**चतुश्शालं त्रिशालेन प्रान्तं प्राकारवर्तिना ।**
**पूर्वेण सप्तशालेषु मणिच्छन्द इति स्मृतम् ॥ ३३ ॥**

**मणिच्छन्द 'आदि सप्त शाल भवनों के लक्षण**—प्राकार-वर्ती तीन शालाओं के निकटवर्ती चार शालाएँ जब निर्मित होती हैं तो इन सात शालाओं में 'मणिच्छन्द' नामक विशेष प्रकार का निर्माण कहा जाता है ॥ ३३ ॥

**अन्यानि चैवं त्रीण्याहुः प्रान्तमेव प्रदक्षिणम् ।**
**अपरं परिधानं च सपक्षमिति तानि च ॥ ३४ ॥**

अन्य और भी इसी प्रकार के तीन निर्माण प्रदक्षिण क्रम से कहे गये हैं—१. प्रान्त, २. परिधान और ३. सपक्ष ॥ ३४ ॥

### गृहसङ्घट्टस्य स्वरूपं फलं च

**एकभित्ती तु शाले द्वे गृहसङ्घट्ट उच्यते ।**
**न तं कुर्यात् स हि सदा बन्धदोषवधप्रदः ॥ ३५ ॥**

**गृह संघट्ट वास्तु का स्वरूप एवं फल**—जहाँ पर दोनों शालाएँ (कमरे) एक ही दीवाल से विभक्त होती हैं तो उसे 'गृह सङ्घट्ट' नामक निर्माण कहते हैं । उसे कभी नहीं बनाना चाहिये क्योंकि वह अनेक प्रकार की बाधाओं एवं अन्यान्य दोषों से युक्त होता है और मृत्यु प्रदान करने वाला वास्तु होता है ॥ ३५ ॥

अध्यायोपसंहारकथनम्

इत्युच्चनीचगृहभागफलं प्रदिष्ट-
मस्मिन्नलिन्दफलमप्यशुभं शुभं च ।
यद् द्वित्रिशालगृहलक्ष्म तदप्यमुष्मिन्
सामान्यतो द्वितययोगभवं च सम्यक् ॥ ३६ ॥

॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे निम्नोच्चफलच्छत्रादिसंज्ञालिन्दफलसद्वास्तुफलद्विशालत्रिशाल-गृहसङ्घट्टलक्षणफलानि नाम विंशोऽध्यायः ॥ २० ॥

...

**अध्याय का उपसंहार**—इस प्रकार से विद्वानों ने भवन के उच्च और नीच गृह-भाग का फल कहा है और इसमें निर्मित होने वाले अलिन्दों (= बरामदों) का भी शुभ और अशुभ फल बताया गया है । किन्तु यहाँ दो शालाओं और तीन शालाओं (कमरों) वाले घरों का जो लक्षण है वह साधारण रूप से बताया गया है । अन्त में दो प्राकारवर्ती आदि भवन के अवयवों के योग से होने वाले गृहों के लक्षण भी विधिविधानपूर्वक बता दिए गए हैं ॥ ३६ ॥

॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'निम्नोच्चफलच्छत्रादिसंज्ञालिन्दफलसद्वास्तु-फलद्विशालत्रिशालगृहसङ्घट्ट-लक्षण एवं फलों के विधायक' नामक बीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ २० ॥



# अथैकविंशोऽध्यायः

## * द्वासप्ततित्रिशालभवनलक्षणम्[1] *

## (The Definition of Seventy Two Types of Three Chambered Houses)

**अथ द्वासप्ततेर्ब्रूमस्त्रिशालानां यथाक्रमम् ।**
**अभिधानानि कात्स्न्येंन लक्षणानि पृथक् पृथक् ॥ १ ॥**

**बहत्तर त्रिशाल भवनों के लक्षण**—अब त्रिशाल भवनों की संज्ञाएँ और उनके पृथक्-पृथक् सम्पूर्ण लक्षणों को कहते हैं ॥ १ ॥

### मुख्यानां चतुर्ण्णां त्रिशालानां नामानि लक्षणं फलं च

**मुख्यानि तेषु चत्वारि कथ्यन्ते तानि नामतः ।**
**हिरण्यनाभं सुक्षेत्रं चुल्ली पक्षघ्नमेव च ॥ २ ॥**

**चार मुख्य त्रिशाल भवनों के नाम**—त्रिशाल भवनों में से चार मुख्य हैं जिनके नाम इस प्रकार गिनाए गए हैं—१. हिरण्यनाभ (१८ भेद), २. सुक्षेत्र (१८ भेद), ३. चुल्ली (१८ भेद) तथा ४. पक्षघ्न (१८ भेद)। (यह कुल १८ × ४ = ७२ भेद होते हैं) ॥ २ ॥

### मुख्यानां चतुर्ण्णां त्रिशालानां फलकथनम्

**हिरण्यनाभमुत्कृष्टं हीनमुत्तरशालया ।**
**तत् स्याद् धनप्रदं भर्तुः सुक्षेत्रं पूर्वया विना ॥ ३ ॥**
**सुक्षेत्रं लक्षणोपेतमृद्धिवृद्धिप्रदं विभोः ।**
**चुल्ली दक्षिणया हीना शालया वित्तनाशिनी ॥ ४ ॥**
**पक्षघ्नं पश्चिमाहीनं वैरकृत् कुलनाशनम् ।**

**चार मुख्य त्रिशाल भवनों के शुभाशुभफल का विचार**—१. उत्तरशाला से हीन यदि निर्मित हो तो **हिरण्यनाभ** नामक त्रिशाल भवन उत्कृष्ट कहा गया हैं

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह छब्बीसवाँ अध्याय है ।

क्योंकि वह गृहस्वामी के लिये धनप्रद होता है। २. पूर्वशाला से हीन निर्मित होने पर **सुक्षेत्र** नामक त्रिशाल भवन गृहस्वामी के लिये ऋद्धि एवं वृद्धि प्रदान करने वाला होता है। ३. **चुल्ली** त्रिशाल भवन दक्षिण शाला से हीन निर्मित होने पर गृहस्वामी के वित्त का नाश करने वाला कहा गया है। ४. पश्चिम शाला से हीन **पक्षघ्न** नामक त्रिशाल भवन सभी से वैर कराने वाला होता है और कुटुम्बियों का नाशकारी सिद्ध होता है ॥ ३-५ ॥

अष्टादशानां हिरण्यनाभभेदानां संज्ञा

**अलिन्दयोगादेतेषां लघुप्रस्तारयोगतः ॥ ५ ॥**
**मूषायोगाच्च भेदाः स्युरष्टादश पृथक्पृथक्।**
**जाम्बूनदं हिरण्याख्यं रुक्माख्यं हेमसंज्ञितम् ॥ ६ ॥**
**कनकं काञ्चनं स्वर्णं सुवर्णं च ततः परम्।**
**सन्तापसंज्ञं सारं च तथा चामीकराह्वयम् ॥ ७ ॥**
**तपनं तापनीयं च शातकुम्भमथापि च।**
**हिरण्यनाभं कल्याणं भूषणं भूतिभूषणम् ॥ ८ ॥**
**भेदा हिरण्यनाभस्येत्यष्टादश भवन्त्यमी।**

**(क) हिरण्यनाभ त्रिशाल भवन के अट्ठारह भेद**—इन चारों प्रकार के त्रिशाल भवनों के अलिन्दों के योग से और लघुप्रस्तार के योग से तथा मूषाओं के योग से इसके पृथक् पृथक् अट्ठारह भेद होते हैं—१. जाम्बूनद, २. हिरण्य, ३. रुक्म, ४. हेम, ५. कनक, ६. काञ्चन, ७. स्वर्ण, ८. सुवर्ण, ९. संताप, १०. सार, ११. चामीकर, १२. तपन, १३. तापनीय, १४. शातकुम्भ, १५. हिरण्यनाभ, १६. कल्याण, १७. भूषण, १८. भूतिभूषण—ये अठारह हिरण्य-नाभ संज्ञक त्रिशाल भवन के भेद होते हैं ॥ ५-९ ॥

तत्संख्यानां सुक्षेत्रचुल्लीपक्षघ्नभेदानां पृथक् पृथङ्नामनिर्देशः

**नागं सूर्यप्रभाख्यं च मत्तवारणकं तथा ॥ ९ ॥**
**चतुर्थं केसरीत्युक्तं वासवं चेन्द्रमेव च।**
**हरिर्हंसं सारसा (ण्डं?ख्यं) कुञ्जरं तोयदं तथा ॥ १० ॥**
**मेघमालाभिधानं च धारासारं महोदरम्।**
**कर्दमं नामतश्चान्यत् सुक्षेत्रं प्रकरं तथा ॥ ११ ॥**
**सुक्षेत्रानुगतान्याहुस्तथान्यद् धान्यपूरकम्।**

**(ख) सुक्षेत्र त्रिशाल भवन के अट्ठारह भेद**—१. नाग, २. सूर्यप्रभ, ३.

मत्तवारणक, ४. केसरी, ५. वासव, ६. इन्द्र, ७. हरि, ८. हंस, ९. सारस, १०. कुञ्जर, ११. तोयद, १२. मेघमाल, १३. धारासार, १४. महोदर, १५. कर्दम, १६. प्रकर, १७. धान्यपूरक तथा १८. सुक्षेत्र—ये अट्ठारह भेद सुक्षेत्र नामक त्रिशाल भवन के कहे गए हैं ॥ ९-१२ ॥

**चुल्लीभेदानथ ब्रूमस्तेषामाद्यं भुजङ्गमम् ॥ १२ ॥**
**निर्जीवाख्यं विहङ्गं च नकुलं पन्नगाह्वयम् ।**
**शतच्छिद्रं च सर्पं च कोपसंज्ञं भगन्दरम् ॥ १३ ॥**
**उद्वेजनाख्यं सन्न्यासं निस्तोषं करुणाननम् ।**
**वारणं दारणं चुल्ली ककुदं कन्दरं तथा ॥ १४ ॥**
**इति चुल्लीप्रभेदेषु मन्दिराणि दशाष्ट च ।**

**(ग) चुल्ली त्रिशाल भवन के अट्ठारह भेद**—अब चुल्ली के भेदों को कहते हैं—१. भुजङ्गम, २. निर्जीव, ३. विहङ्ग, ४. नकुल, ५. पन्नग, ६. शतच्छिद्र, ७. सर्प, ८. कोप, ९. भगन्दर, १०. उद्वेजन, ११. संन्यास, १२. निष्तोष, १३. करुणानन, १४. मुखवारण, १५. दारण, १६. चुल्ली, १७. ककुद, १८. कन्दर—ये अट्ठारह भेद चुल्ली संज्ञा वाले त्रिशाल भवन के भेद हैं ॥ १२-१५ ॥

**ब्रूमः पक्षघ्नसम्बद्धगृहनामानि सम्प्रति ॥ १५ ॥**
**राक्षसं ध्वान्तसंहारं देवारि सुरदारुणम् ।**
**घोषणं व्याघ्रशार्दूले शोषणाख्यं विशोषणम् ॥ १६ ॥**
**मत्तदं च निरानन्दं शाकुनं विघ्ननिर्घृणे ।**
**रिपुसंहदपक्षघ्ने सुतघ्नं वैरिपूरणम् ॥ १७ ॥**
**इत्यष्टादश पक्षघ्नभेदाः प्रोक्ता यथाक्रमम् ।**

**(घ) पक्षघ्न त्रिशाल भवन के अट्ठारह भेद**—अब पक्षघ्न से सम्बन्धित त्रिशाल भवनों के भेदों के नाम कहते हैं—१. राक्षस, २. ध्वान्त-संहार, ३. देवारि, ४. सुरदारुण, ५. घोषण, ६. व्याघ्र, ७. शार्दूल, ८. शोषण, ९. विशोषण, १०. मत्तद, ११. निरानन्द, १२. शाकुन, १३. विघ्न, १४. निर्घृण, १५. रिपुसंहद, १६. पक्षघ्न, १७. सुतघ्न, और १८. वैरिपूरण—ये अट्ठारह भेद क्रमशः पक्षघ्न नामक त्रिशाल भवन के हुए ॥ १५-१८ ॥

**हिरण्यनाभभेदेषु जाम्बूनदहिरण्यरुक्महेमसंज्ञितानां लक्षणम्**

**हिरण्यनाभभेदेषु धन्यं जाम्बूनदं गृहम् ॥ १८ ॥**
**आद्याद्याभिश्चतसृभिर्मूषाभिरुपलक्षितम् ।**

**(क) हिरण्यनाभ आदि अट्ठारह भेदों के लक्षण**—अब हिरण्यनाभ के जाम्बूनद आदि अट्ठारह भेदों के लक्षणों को कहते हैं ।

**१. जाम्बूनद** नामक त्रिशाल भवन गृहस्वामी के लिए अत्यन्त धन्य कहा गया है । वह आदि की चार मूषाओं से उपलक्षित कहा गया है ॥ १८-१९ ॥

**यत्राद्याद्वित्रिपञ्चम्यो हिरण्यं नाम तच्छुभम् ॥ १९ ॥**

**२. हिरण्य**—जहाँ पर पहली, दूसरी, तीसरी, पाँचवीं मूषाएँ हों वह शुभ गृह हिरण्य नामक त्रिशाल भवन कहलाता है ॥ १९ ॥

**पञ्चम्याद्याद्वितुर्याभिः स्याद् रुक्मं रुक्मदं गृहम् ।**
**आद्यात्रितुर्यापञ्चम्यो यत्र तद्धेमसंज्ञितम् ॥ २० ॥**

**३. रुक्म**—सोने को देने वाला स्वर्णिम रुक्म गृह पाँचवीं, पहली, दूसरी और चौथी मूषाओं से युक्त होता है ।

**४. हेम**—जहाँ पर पहली, तीसरी, चौथी और पाँचवीं मूषाएँ हों उसकी हेम संज्ञा कही जाती है ॥ २० ॥

**अवशिष्टानां कनकादीनां लक्षणम्**

**द्वित्रितुर्यापञ्चमीभिः कनकं कनकावहम् ।**
**साद्याभिर्द्वित्रिषष्ठीभिः काञ्चनं काञ्चनप्रदम् ॥ २१ ॥**

**५. कनक**—विपुल सुवर्ण से युक्त कनक नामक त्रिशाल गृह दूसरी, तीसरी, चौथी और पाँचवीं मूषाओं से निष्पन्न होता है ।

**६. काञ्चन**—काञ्चन-प्रद काञ्चन नामक गृह पहली, दूसरी, तीसरी और छठी मूषाओं से युक्त होता है ॥ २१ ॥

**आद्याद्वितुर्याषष्ठीभिः स्वर्णं स्वर्णविवृद्धये ।**
**सुवर्णमाद्यात्रिचतुःषष्ठीभिः स्यात् सुवर्णदम् ॥ २२ ॥**

**७. स्वर्ण**—सोने की वृद्धि करने वाला स्वर्ण नामक गृह पहली, दूसरी, चौथी और छठी मूषाओं से युक्त कहा गया है ।

**८. सुवर्ण**—सुवर्ण नामक त्रिशाल गृह पहली, तीसरी, चौथी और छठी मूषाओं से युक्त स्वर्णदायक माना गया है ॥ २२ ॥

**स्याद् द्वित्रितुर्याषष्ठीभिः सन्तापं तापशान्तिकृत् ।**
**आद्याद्विपञ्चमीषष्ठ्यौ यत्र तत् सारमुत्तमम् ॥ २३ ॥**

**९. सन्ताप**—दैहिक या दैविक ताप को शान्त करने वाला सन्ताप नामक त्रिशाल गृह दूसरी, तीसरी, चौथी और छठी मूषाओं से निष्पन्न होता है ।

**१०. सार**—जहाँ पर पहली, दूसरी पाँचवीं और छठी मूषा हों उसको सार नामक उत्तम त्रिशाल गृह कहा गया है ॥ २३ ॥

**चामीकरं त्रिषष्ठ्याद्यापञ्चमीभिर्गृहोत्तमम् ।**
**द्वित्रिषट्पञ्चमीभिः स्यात् तपनं नाम मन्दिरम् ॥ २४ ॥**

**११. चामीकर**—तीसरी, छठी, पहली और पाँचवीं मूषाओं से युक्त चामीकर नाम का उत्तम त्रिशाल गृह बताया गया है ।

**१२. तपन**—तपन नाम का त्रिशाल भवन दूसरी, तीसरी, छठी, पाँचवीं मूषाओं से युक्त होता है ॥ २४ ॥

**षट्तुर्याद्यापञ्चमीभिस्तापनीयमुदाहृतम् ।**
**शातकुम्भं द्विषट्पञ्चतुर्थीभिर्भवेद् गृहम् ॥ २५ ॥**

**१३. तापनीय**—छठी, चौथी, पहली और पाँचवीं मूषाओं से युक्त तापनीय नामक गृह उदाहृत किया गया है ।

**१४. शातकुम्भ** नामक त्रिशाल गृह दूसरी, छठी, पाँचवीं और चौथी मूषाओं से युक्त होता है ॥ २५ ॥

**हिरण्यनाभं त्रिचतुःपञ्चषष्ठीभिरीरितम् ।**
**कल्याणमाद्यात्रिचतुःपञ्चषष्ठीभिरुच्यते ॥ २६ ॥**

**१५. हिरण्यनाभ**—तीसरी, चौथी, पाँचवीं और छठी मूषाओं से निर्मित गृह हिरण्यनाभ कहा गया है ।

**१६. कल्याण** नामक त्रिशाल भवन पहली, तीसरी, चौथी, पाँचवीं और छठी मूषाओं से युक्त कहा गया है ॥ २६ ॥

**षट्पञ्चद्वित्रितुर्याभिर्भवेद् भूषणसंज्ञितम् ।**
**आद्याद्वित्रिचतुःपञ्चषष्ठीभिर्भूतभूषणम् ॥ २७ ॥**

**१७. भूषण**—छठी, पाँचवी, दूसरी, तीसरी और चौथी मूषाओं से युक्त भूषण संज्ञक त्रिशाल गृह होता है ।

**१८. भूतभूषण**—त्रिशाल भवन पहली, दूसरी, तीसरी, चौथी, पाँचवीं और छठी मूषाओं से युक्त होता है ॥ २७ ॥

### सुक्षेत्रभेदानां नागादीनां लक्षणम्

**अथ सुक्षेत्रभेदानां लक्षणान्यभिदध्महे ।**
**यत्राद्याद्वित्रितुर्याभिस्तन्नागं नाम मन्दिरम् ॥ २८ ॥**

**(ख) सुक्षेत्र के नागादि अट्ठारह भदों के लक्षण**—अब सुक्षेत्र त्रिशाल भवनों के भेदों के लक्षणों को कहते हैं—

**१. नाग**—जहाँ पर पहली, दूसरी, तीसरी, चौथी मूषाओं से मन्दिर का निर्माण हो उसका नाम नाग त्रिशाल भवन होता है ॥ २८ ॥

**यत्राद्याद्वित्रिपञ्चम्यस्तत् सूर्यप्रभमुच्यते ।**
**आद्याद्वितुर्यापञ्चम्यो यत्र तन्मत्तवारणम् ॥ २९ ॥**

**२. सूर्यप्रभ**—जहाँ पर पहली, दूसरी, तीसरी, पाँचवीं हों उसको सूर्यप्रभ त्रिशाल गृह कहते हैं ।

**३. मत्तवारण**—जहाँ पर पहली, दूसरी, चौथी और पाँचवीं मूषाएँ हों उसकी संज्ञा मत्तवारण है ॥ २९ ॥

**आद्यात्रितुर्यापञ्चम्यो यत्र तत् केसरीं विदुः ।**
**वासवं पञ्चमीतुर्याद्वितीयाभिस्तदुच्यते ॥ ३० ॥**

**४. केसरी**—जहाँ पर पहली, तीसरी, चौथी और पाँचवीं मूषाएँ हों उसको केसरी नामक त्रिशाल गृह कहते हैं ।

**५. वासव**—नामक त्रिशाल गृह पाँचवीं, चौथी और दूसरी मूषाओं से उपलक्षित कहा गया है ॥ ३० ॥

**षष्ठ्याद्यात्रिद्वितीयाभिरिन्द्रमन्दिरमीरितम् ।**
**आद्याद्वितुर्याषष्ठीभिर्हरिसंज्ञमुदाहृतम् ॥ ३१ ॥**

**६. इन्द्र**—छठी, पहली, तीसरी और दूसरी मूषाओं से इन्द्र नामक त्रिशाल भवन कहा गया है ।

**७. हरि**—संज्ञा वाले भवन को पहली, दूसरी, चौथी और छठी मूषाओं से उदाहृत किया गया है ॥ ३१ ॥

**आद्यात्रितुर्याषष्ठीभिर्हंससंज्ञं निवेशनम् ।**
**षष्ठीद्वित्रिचतुर्थीभिः सारसं नामतो भवेत् ॥ ३२ ॥**

**८. हंस**—संज्ञक निवेशन पहली, तीसरी, चौथी और छठी मूषाओं से युक्त होता है ।

**९. सारस**—नामक त्रिशाल गृह छठी, दूसरी और तीसरी एवं चौथी मूषाओं से बनता है ॥ ३२ ॥

**आद्याद्विपञ्चषष्ठीभिः कथयन्तीह कुञ्जरम् ।**
**आद्यात्रिपञ्चषष्ठीभिर्विज्ञेयं तोयदं गृहम् ॥ ३३ ॥**

**१०. कुञ्जर**—पहली, दूसरी, पाँचवीं और छठीं मूषाओं के योग से कुञ्जर नामक त्रिशाल भवन होता है ।

**११. तोयद**—तोयद नाम का त्रिशाल गृह पहली, तीसरी, पाँचवीं और छठी मूषाओं से जानना चाहिये ॥ ३३ ॥

**मेघमालं त्रिषट्पञ्चद्वितीयाभिरुदाहृतम् ।**
**धारासारं चतुःपञ्चषडाद्याभिर्भवेद् गृहम् ॥ ३४ ॥**

**१२. मेघमाल**—त्रिशाल गृह तीसरी, छठी, पाँचवीं और दूसरी मूषाओं से उपलक्षित है ।

**१३. धारासार**—चौथी, पाँचवीं, छठी तथा पहली मूषाओं से धारासार नामक त्रिशाल भवन उपलक्षित होता है ॥ ३४ ॥

**द्विचतुःपञ्चषष्ठीभिर्महोदरमिति स्मृतम् ।**
**कर्दमं नाम षट्पञ्चत्रितुर्याभिर्जयावहम् ॥ ३५ ॥**

**१४. महोदर**—दूसरी, चौथी, पाँचवीं और छठी मूषाओं से महोदर त्रिशाल भवन कहा गया है ।

**१५. कर्दम**—कर्दम नाम का जयशील त्रिशाल गृह छठी, पाँचवीं, तीसरी और चौथी मूषाओं से विहित होता है ॥ ३५ ॥

**षट्पञ्चतुर्यात्र्याद्याभिः सुक्षेत्रं स्याद् धनप्रदम् ।**
**द्वित्रिषट्पञ्चतुर्याभिर्भवेत् प्रकरमृद्धिदम् ॥ ३६ ॥**

**१६. सुक्षेत्र**—सुक्षेत्र नामक धनप्रद त्रिशाल गृह छठी, पाँचवीं, चौथी, तीसरी और पहली मूषाओं से युक्त होता है ।

**१७. प्रकर**—ऋद्धिदायक प्रकर नामक त्रिशाल गृह दूसरी, तीसरी, छठी, पाँचवीं और चौथी मूषाओं से निष्पन्न होता है ॥ ३६ ॥

**आद्याभिश्च षडेताभिर्विज्ञेयं धान्यपूरकम् ।**
**अष्टादशैते सुक्षेत्रगृहभेदाः प्रकीर्तिताः ॥ ३७ ॥**

**१८. धान्यपूरक**—पहले की छह मूषाओं से युक्त त्रिशाल गृह को 'धान्यपूरक' जानना चाहिए। इस प्रकार सुक्षेत्र नामक त्रिशाल भवन के ये अट्ठारह भेद बताये गये हैं ॥ ३७ ॥

**चुल्लीभेदानां भुजङ्गमादीनां लक्षणम्**

**आद्याद्वित्रिचतुर्थीभिर्मूषाभिः स्याद् भुजङ्गमम् ।**
**निर्जीवमाद्यापञ्चत्रिद्वितीयाभिर्निवेशनम् ॥ ३८ ॥**

**(ग) चुल्ली के भुजङ्गादि अट्ठारह भेद**—अब चुल्ली नामक त्रिशाल भवनों के अट्ठारह भेदों को कहते हैं—

**१. भुजङ्ग**—पहली, दूसरी और चौथी मूषाओं से युक्त होता है।

**२. निर्जीव**—नामक त्रिशाल भवन का निवेशन पहली, पाँचवीं, तीसरी और दूसरी मूषाओं से युक्त कहा गया है ॥ ३८ ॥

**आद्याद्विपञ्चतुर्याभिर्व (हन्तीभिर्वि?दन्तीह वि)हङ्गमम् ।**
**पञ्चाद्यात्रिचतुर्थीभिर्मूषाभिर्नकुलं विदुः ॥ ३९ ॥**

**३. विहङ्गम**—नामक त्रिशाल गृह पहली, दूसरी, पाँचवीं और चौथी मूषाओं से युक्त होता है।

**४. नकुल**—नामक त्रिशाल भवन पाँचवीं, पहली, तीसरी और चौथी मूषा से युक्त होता है ॥ ३९ ॥

**पञ्चद्वित्रिचतुर्थीभिः पन्नगं नामतो भवेत् ।**
**शतच्छिद्रं षडाद्यात्रि-द्वितीयाभिर्भवेद् गृहम् ॥ ४० ॥**

**५. पन्नग**—नाम वाला गृह पाँचवीं, दूसरी, तीसरी और चौथी मूषाओं से युक्त होता है।

**६. शतच्छिद्र**—नाम का त्रिशाल गृह छठी, पहली, तीसरी एवं दूसरी मूषाओं से युक्त होता है ॥ ४० ॥

**आद्याद्वितुर्याषष्ठीभिः सर्पमित्यभिधीयते ।**
**आद्यात्रिषट्चतुर्थीभिः कोपमित्यभिशब्दितम् ॥ ४१ ॥**

**७. सर्प**—नामक त्रिशाल गृह पहली, दूसरी, चौथी और छठी मूषाओं से युक्त कहा जाता है।

**८. कोप**—नामक भवन पहली, तीसरी, छठी और चौथी मूषाओं से युक्त सङ्कीर्त्तित किया गया है ॥ ४१ ॥

**षट्चतुस्त्रिद्वितीयाभिर्भवेद् वेश्म भगन्दरम् ।**
**आद्याद्विपञ्चषष्ठीभिरुद्वेजनमुदाहृतम् ॥ ४२ ॥**

**९. भगन्दर**—नाम का भवन छठी, चौथी, तीसरी और दूसरी मूषाओं से युक्त होता है ।

**१०. उद्वेजन**—नामक गृह पहली, दूसरी, पाँचवीं और छठी मूषा से युक्त उदाहृत किया गया है ॥ ४२ ॥

**सन्न्यासमाद्यापञ्चत्रि-षष्ठीभिर्भवनाधमम् ।**
**द्वित्रिषट्पञ्चमीभिस्तु निस्तोयमभिधीयते ॥ ४३ ॥**

**११. संन्यास**—नाम का अधम त्रिशाल गृह पहली पाँचवीं, तीसरी और छठी मूषाओं से युक्त होता है ।

**१२. निस्तोय**—नामक त्रिशाल गृह को दूसरी, तीसरी, छठी और पाँचवीं मूषा से युक्त कहा जाता है ॥ ४३ ॥

**तुर्याद्यापञ्चषष्ठीभिः करुणाननमुच्यते ।**
**द्विचतुःपञ्चषष्ठीभिर्वारणं मुखवारणम् ॥ ४४ ॥**
**त्रिचतुःपञ्चषष्ठीभिर्दारणं श्रीविदारणम् ।**

**१३. करुणानन**—नामक त्रिशाल गृह चौथी, पहली, पाँचवीं और छठी मूषाओं से युक्त कहा जाता है ।

**१४. मुखवारण**—नामक त्रिशाल गृह दूसरी, चौथी, पाँचवीं और छठी मूषाओं से अभिहित होता है ।

**१५. दारण**—श्रीविदारण (सम्पन्नता नष्ट करने वाला) 'दारण' नामक त्रिशाल गृह तीसरी, चौथी, पाँचवीं और छठी मूषाओं से युक्त होता है ॥ ४४-४५ ॥

**चुल्ल्याद्या त्रिचतुःपञ्चषष्ठीभिर्वित्तनाशनम् ॥ ४५ ॥**

**१६. चुल्ली**—नामक त्रिशाल गृह पहली एवं तीसरी, चौथी तथा पाँचवीं और छठी मूषाओं से युक्त कहा गया है जो गृहस्वामी के वित्त (= समृद्धि) का नाशक (गृह) होता है ॥ ४५ ॥

**षट्पञ्चद्वित्रितुर्याभिः ककुदं नाम मन्दिरम् ।**
**कन्दरं षट्चतुःपञ्च-त्रिद्व्याद्याभिर्गृहाधमम् ॥ ४६ ॥**

**१७. ककुद**—नाम का त्रिशाल गृह छठी, पाँचवीं, दूसरी और तीसरी मूषाओं से होता है ।

**१८. कन्दर**—नाम का अधम गृह होता हैं जों छठी, चौथी, पाँचवीं, तीसरी, दूसरी और पहली मूषाओं से युक्त होता है ॥ ४६ ॥

**पक्षघ्नभेदानां राक्षसादीनां लक्षणम्**

**अथाष्टादश कथ्यन्ते भेदाः पक्षघ्नसंश्रयाः ।**
**तेषु राक्षसमाद्याद्द्वित्रिचतुर्थीभिरुच्यते ॥ ४७ ॥**

**(घ) पक्षघ्न के राक्षसादि अट्ठारह भेदों के लक्षण**—अब पक्षघ्न नामक चतुर्थ त्रिशाल भवन के १८ भेदों को कहते हैं ।

**१. राक्षस**—उनमें पहला राक्षस नामक त्रिशाल गृह पहली, दूसरी, तीसरी और चौथी मूषाओं से युक्त कहा गया है ॥ ४७ ॥

**पञ्चाद्याद्द्वितृतीयाभिर्ध्वान्तसङ्घातमीरितम् ।**
**पञ्चाद्याद्द्विचतुर्थीभिर्देवारीति निगद्यते ॥ ४८ ॥**

**२. ध्वान्त-सङ्घात**—नामक त्रिशाल गृह पाँचवीं, पहली, दूसरी और तीसरी मूषाओं से युक्त कहा गया है ।

**३. देवारि**—नामक त्रिशाल भवन पाँचवीं, पहली, दूसरी और चौथी से युक्त कहा जाता है ॥ ४८ ॥

**आद्यात्रिपञ्चतुर्याभिर्विज्ञेयं देवदारुणम् ।**
**पञ्चत्रिद्विचतुर्थीभिर्घोषणं दुःखपोषणम् ॥ ४९ ॥**

**४. देवदारुण**—नामक त्रिशाल गृह को पहली, तीसरी, पाँचवीं और चौथी मूषाओं (गवाक्षों) से युक्त जानना चाहिये ।

**५. घोषण**—कुपोषण करने वाला घोषण नामक त्रिशाल गृह पाँचवीं, तीसरी, दूसरी और चौथी मूषाओं से युक्त होता है ॥ ४९ ॥

**षडाद्याद्द्वितृतीयाभिर्व्याघ्रमित्यभिधीयते ।**
**आद्याद्द्वितुर्याषष्ठीभिः शार्दूलं स्यान्निवेशनम् ॥ ५० ॥**

**६. व्याघ्र**—नामक त्रिशाल गृह छठी, पहली, दूसरी और तीसरी मूषाओं से युक्त कहा जाता है ।

**७. शार्दूल**—नामक त्रिशाल भवन पहली, दूसरी, चौथी और छठी मुषाओं (गवाक्षों) से युक्त होता है ॥ ५० ॥

**आद्यात्रितुर्याषष्ठीभिः शोषणं पुत्रशोषणम् ।**
**षट्तुर्याद्द्वितृतीयाभिर्विजानीयाद् विशोषणम् ॥ ५१ ॥**

**८. शोषण**—पुत्र का शोषण करने वाला शोषण नामक त्रिशाल गृह पहली, तीसरी, चौथी और छठी मूषाओं से युक्त होता है।

**९. विशोषण**—नामक त्रिशाल गृह छठी, चौथी, दूसरी और तीसरी मूषाओं से युक्त जाना जाता है ॥ ५१ ॥

**आद्याद्विपञ्चषष्ठीभिर्मत्तदं नाम मन्दिरम् ।**
**निरानन्दाख्यमाद्यात्रिपञ्चषष्ठीभिरुच्यते ॥ ५२ ॥**

**१०. मत्तद**—नामक तीन शाला वाला घर पहली, दूसरी, पाँचवीं और छठी मूषाओं से युक्त कहा गया है।

**११. निरानन्द**—नामक त्रिशाल भवन पहली, तीसरी, पाँचवीं और छठी से युक्त कहा जाता है ॥ ५२ ॥

**पञ्चषड्द्वितृतीयाभिः शाकुनं नामतो भवेत् ।**
**विघ्नमाद्याचतुःपञ्च-षष्ठीभिर्विघ्नवर्धनम् ॥ ५३ ॥**

**१२. शाकुन**—नामक त्रिशाल गृह पाँचवीं, छठी, दूसरी और तीसरी मूषाओं से युक्त होता है।

**१३. विघ्न**—विघ्न का वर्धन करने वाला विघ्न नामक त्रिशाल गृह पहली, चौथी, पाँचवीं और छठी मूषाओं से युक्त होता है ॥ ५३ ॥

**निर्घृणं षट्चतुःपञ्चद्वितीयाभिरसौख्यकृत् ।**
**त्रिचतुःपञ्चषष्ठीभिर्वदन्ति रिपुसंहदम् ॥ ५४ ॥**

**१४. निर्घृण**—गृहस्वामी के लिये असौख्यकारी निर्घृण नामक त्रिशाल गृह छठी, चौथी, पाँचवीं और दूसरी मूषाओं से युक्त कहा गया है।

**१५. रिपुसंहद**—नामक त्रिशाल गृह तीसरी, चौथी, पाँचवीं और छठी मूषाओं से युक्त होता है ॥ ५४ ॥

**षट्पञ्चतुर्यात्र्या(द्या)भिः पक्षघ्नं सुतनाशनम् ।**
**षट्पञ्चद्वित्रितुर्याभिः सुतघ्नं सुतसूदनम् ॥ ५५ ॥**

**१६. पक्षघ्न**—सुत का नाशक पक्षघ्न नामक त्रिशाल गृह छठी, पाँचवीं, चौथी, तीसरी और पहली मूषाओं से युक्त होता है।

**१७. सुतघ्न**—सुत का सूदन (नाश) करने वाला सुतघ्न नामक त्रिशाल गृह छठी पाँचवीं, दूसरी, तीसरी और चौथी मूषाओं से युक्त होता है ॥ ५५ ॥

**षट्पञ्चद्वित्रितुर्याद्या यत्र तद् वैरिपूरणम् ।**

**पक्षघ्नस्यानुगान्येवं गृहाण्यष्टादश क्रमात् ॥ ५६ ॥**

**१८. वैरिपूरण**—जहाँ पर छठी, पाँचवीं, दूसरी, तीसरी और चौथी एवं पहली मूषाएँ हों उसे 'वैरिपूरण' त्रिशाल गृह कहते हैं । इस प्रकार से पक्षघ्न त्रिशाल गृह के क्रमशः ये अट्ठारह भेद हुए ॥ ५६ ॥

**पञ्चभद्रकस्वरूपम्**

**चतुराद्यास्त्रिशालेषु मूषा बाह्या न चान्तरा ।**
**स्याद् विनाद्यां द्वितीयां च त्रिशालं पञ्चभद्रकम् ॥**

**पाँच भद्रक के स्वरूप**—तीन शालाओं वाले घरों में पहले की चार मूषाएँ बाहर होनी चाहिए न कि मध्य में तथा पहली और दूसरी के बिना तीन शालाओं वाला घर पञ्चभद्रक कहलाता है ॥ ५७ ॥

**बाह्यतः क्रममुत्सृज्य त्रिशालविधिरीरतः ॥ ५७ ॥**

बाहरी क्रम को त्याग कर इस प्रकार से तीन शालाओं वाले भवनों के निर्माण की विधि प्रतिपादित की गई है ॥ ५७ ॥

**हिरण्यनाभादिनिकेतनानां**
**चतुष्टयस्यैवममी प्रकाराः ।**
**द्विसप्ततिः कृत्स्नतयोपदिष्टाः**
**प्रत्येकमष्टादशभेदक्लृप्ताः ॥ ५८ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे द्वासप्ततित्रिशाललक्षणं नाम एकविंशोऽध्यायः ॥ २१ ॥**

...

इस प्रकार से चारों हिरण्यनाभ आदि त्रिशाल भवनों के प्रकार यहाँ पूर्ण रूप से उपदिष्ट किए गए हैं और प्रत्येक के अट्ठारह-अट्ठारह भेदों के लक्षणों का भी निरूपण किया गया है । इस प्रकार से त्रिशाल भवनों के कुल बहत्तर प्रकार बताये गये हैं ॥ ५८ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'द्वासप्ततित्रिशाललक्षणं' नामक इक्कीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ २१ ॥**



# समीक्षात्मक टिप्पणी

## त्रिशाल गृह (२१.१-५९)

त्रिशाल गृहों के भेद अन्यत्र वास्तुशास्त्रीय ग्रन्थों में इस प्रकार है—

**१. मत्स्यपुराण** (२५४) में उत्तर शाला से हीन त्रिशाल भवन **धान्यक** होता है और पूर्व शाला से हीन भवन **सुक्षेत्र** होता है। दक्षिण शाला से हीन भवन **विशाल** होता है तथा पश्चिम शाला से हीन भवन **पक्षघ्न** कहा गया है—

सौम्यशालाविहीनं यत् त्रिशालं धान्यकं च तत्।
........ ........... ............. ............
शालया पूर्वया हीनं सुक्षेत्रमिति विश्रुतम्।
........ ........... ............. ............
शालया याम्यया हीनं यद् विशालं तु शालया।
........ ........... ............. ............
हीनं पश्चिमया यत्तु पक्षघ्नं नाम तत् पुनः। (२५४.४-७)

**२. बृहत्संहिता** (५३) में त्रिशाल भवनों की संज्ञा हिरण्यनाभ, सुक्षेत्र, चुल्ली एवं पक्षघ्न प्राप्त होती है—

उत्तरशालाहीनं हिरण्यनाभं त्रिशालकं धन्यम्।
प्राक्शालया वियुक्तं सुक्षेत्रं वृद्धिदं वास्तु॥
याम्याहीनं चुल्ली त्रिशालकं वित्तनाशकरमेतत्।
पक्षघ्नमपरया वर्जितं सुतध्वंसवैरकरम्॥ (५३.३७-३८)

१. हिरण्यनाभ नामक त्रिशाल भवन के उत्तर की तरफ दीवाल नहीं होती है और शेष तीन दिशाओं में दीवाल होती है। यह प्रशस्त त्रिशाल वास्तु होता है।
२. सुक्षेत्र नामक त्रिशाल वास्तु के पूर्व ओर दीवाल नहीं होती है और शेष तीन ओर दीवाल होती है। यह वास्तु धन-धान्य एवं पुत्रादि की वृद्धि करता है।
३. चुल्ली नामक त्रिशाल भवन के दक्षिण तरफ दीवाल नहीं होती है और शेष दिशाओं में दीवाल होती है। यह धननाशक वास्तु है।
४. पक्षघ्न नामक त्रिशाल भवन के पश्चिम ओर दीवाल नहीं होती है और शेष दिशाओं में दीवाल होती है। यह वास्तु पुत्रनाशक एवं बैर कराता है।

**३. किरणाख्य तन्त्र** में त्रिशाल भवन इस प्रकार वर्णित है—

शस्तं हिरण्यनाभाख्यं हीनं चोत्तरशालया।

सुक्षेत्रं पूर्वतो हीनं शालया वृद्धिदं मतम् ॥
चुल्ली दक्षिणया हीनं धनार्थप्राणनाशनम् ।
यत्स्यादपरया हीनं पक्षघ्नं तत्सुतान्तकृत् ॥

समराङ्गणसूत्रधार (२१.१-२) में भी यही नाम प्राप्त होते हैं । इनके अतिरिक्त अलिन्द एवं मूषा के योग से इनके अनेक भेद बताए गए हैं जो बृहत्संहिता (५३) में नहीं है ।

**४. मयमतम् (२६.५६-६२ श्लोक)** के अनुसार—त्रिशाल गृह का वर्णन इस प्रकार हैं—

व्यासायामेऽष्टर्धमांशे त्रिशाले द्व्यंशमङ्गणम् ।
त्रिपार्श्वेऽलिन्द्रमेकांशं द्व्यंशं शालाविशालकम् ॥
त्यक्तमध्यमपादं तु द्व्यंशं तन्मुखभद्रकम् ।
षडाननतलोपेतं सप्रच्छन्नमजाङ्कणम् ॥
एकानेकतलोपेतं प्रासादवदलङ्कृतम् ।
द्वारादि पूर्ववन्मेरुकान्तं नामोग्रजीविनाम् ॥
व्यासे पंक्त्यर्कभागे तु पार्श्वयोः पृष्ठतस्तु वा ।
वारमेकांशतः कुर्याद् द्व्यंशं गेहविशालकम् ॥
प्रमुखे वारमेकांशं द्व्यंशं तन्मध्यमाङ्गणम् ।
परितो वारमेकांशं सप्रच्छन्नमथापि वा ॥
तारद्व्यंशाधिकायामं चतुराननमण्डितम् ।
प्रमुखे तु चतुर्द्व्यंशं निर्गतद्वारभद्रकम् ॥
पार्श्वयोर्वोपरि मुख्यवासं स्याद् द्विललाटकम् ।
मौलिभद्रमिदं नाम्ना शेषं पूर्ववदाचरेत् ॥

तीन शाला वाले **मेरुकान्त** भवन के लक्षण—इस त्रिशाल भवन की चौड़ाई के आठ भाग एवं लम्बाई के १० भाग करना चाहिये । इसमें दो भाग से आँगन, तीन ओर एक भाग से अलिन्द तथा दो भाग से शाला का विस्तार रखना चाहिये ।

इस भवन का मुखभद्र दो भाग से निर्मित होता है, जिसके मध्य भाग में स्तम्भ नहीं होता है । इसके मुख (द्वार) की संख्या छह होती है तथा मध्य भाग में निर्मित आँगन छत से ढँका रहता है । एक या अनेक तल से युक्त यह मेरुकान्त भवन पच्चीकारी आदि अलङ्करणों से सुसज्जित होता है । द्वार आदि की व्यवस्था पहले के समान होती है । मेरुकान्त संज्ञक यह भवन उग्रजीवियों अर्थात् (कठोर कार्य करने वालों) के लिये उपयुक्त होता है ।

**मौलिभद्र** के लक्षण—इस भवन की चौड़ाई के दस भाग एवं लम्बाई के बारह भाग करने चाहिये। दोनों पार्श्वों एवं पिछले भाग में एक भाग से वार (मार्ग) एवं दो भाग से गृह का विस्तार रखना चाहिये। मुखभाग पर एक भाग से (मार्ग, भद्र) विरचित होता है, जिसके मध्य भाग में दो भाग से आँगन होता है। यह चारो ओर एक भाग से निर्मित होता है, जो ढका हो सकता है। इसकी लम्बाई वस्तुत: चौड़ाई से दो भाग अधिक होती है एवं इसके चार मुख होते हैं। मुखभाग पर (द्वार के सामने) द्वारभद्रक (द्वार पर बना पोर्च) होता है, जिसका माप चार भाग होता है एवं दो भाग बाहर निकला होता है। इस भवन के दोनों पार्श्वों में या पृष्ठभाग में दो ललाट (मुख अर्थात् निकलने का मार्ग) निर्मित होते हैं। इसके शेष अङ्ग पूर्ववर्णित विधि से निर्मित होते हैं। इस भवन की संज्ञा मौलिभद्र कही गई है।



# अथ द्वाविंशोऽध्यायः

## * द्विशालगृहलक्षणम्[1] *

## (The Definition of Two Chambered Houses)

**द्विशालानि द्विपञ्चाशत् स्युः शुभान्यशुभानि च ।**
**लक्षणानि क्रमात् तेषामिदानीं सम्प्रचक्ष्महे ॥ १ ॥**

द्विशाल भवनों अर्थात् दो शालाओं वाले घरों के बावन भेद होते हैं । उनमें से कुछ शुभ भी हैं और कुछ अशुभ भी हैं । अब उन सभी के लक्षणों को क्रमशः कहते हैं ॥ १ ॥

**सिद्धार्थं यमसूर्यं च दण्डाख्यं वातसंज्ञितम् ।**
**चुल्ली काचं च मुख्यानि द्विशालानि षडेव हि ॥ २ ॥**

१. सिद्धार्थ, २. यमसूर्य, ३. दण्ड, ४. वात, ५. चुल्ली और ६. काच— ये दो शालाओं वाले घरों के मुख्य छह भेद हैं ॥ २ ॥

**अनेकभेदभिन्नानि लघुप्रस्तारयोगतः ।**
**मूषाभेदक्रमेण स्युर्भेदाभेदक्रमेण तु ॥ ३ ॥**

लघु प्रस्तार के योग से एवं मूषाओं के भेद क्रम से और भेदाभेद क्रम से इस प्रकार इनके अनेक भेदों से ये द्विशाल भवन भिन्न-भिन्न प्रकार के होते हैं ॥ ३ ॥

**तथा निलीनकरणाद् वीथिकालिन्दमार्गतः ।**
**प्राग्ग्रीवादिविधानेन द्वैशाल्यादिविपर्ययात् ॥ ४ ॥**
**यथासम्भवमेतानि कथयामः समासतः ।**
**निर्वाहतश्च मूषाणामनिर्वाहाच्च नामतः ॥ ५ ॥**

अतः निलीन कर्ण से, वीथिकाओं के संयोजन से और अलिन्दों (= बरामदों) एवं मार्गों से तथा प्राग्ग्रीवादि के विधान से तथा दो शालाओं के क्रम-विपर्यय से संक्षेप रूप से इनका यथासम्भव वर्णन किया जाता है क्योंकि

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह सत्ताईसवाँ अध्याय है ।

मूषाओं का निर्वाह सरल है परन्तु उन द्विशाल भवनों की संज्ञाओं का निर्वाह सरल नहीं है ॥ ४-५ ॥

**छन्दतो गुणतो रूपादशुभानि शुभानि च ।**
**हितार्थाय नरेन्द्राणां वर्णिनां लिङ्गिनामपि ॥ ६ ॥**

छन्द (पताकादि षट्छन्द जिनमें यहाँ पर उद्दिष्ट तथा नष्ट से अभिप्राय है), गुण रूप आदि प्रस्तारों से अशुभ और शुभ गृह निकाले जाते हैं । ये सब गृह राजाओं, (चारों) वर्णियों तथा लिङ्गियों (वानप्रस्थादि आश्रमों) के हित के लिये कहे गये हैं ॥ ६ ॥

**द्विशालगृहेषु मुख्यानां षण्णां सिद्धार्थादीनां लक्षणम्**

**हस्तिनी महिषी चेति द्वे शाले यत्र वेश्मनि ।**
**तत् सिद्धार्थमिति ज्ञेयं वित्तसम्पत्तिकारकम् ॥ ७ ॥**

**द्विशालगृहों में सिद्धार्थ आदि छह गृहों के लक्षण— १. सिद्धार्थ**—जिस घर में हस्तिनी और महिषी ये दो शालाएँ हों उसे सिद्धार्थ नामक गृह समझना चाहिये ये द्विशाल भवव धन सम्पत्ति के कारक कहे गए हैं ॥ ७ ॥

**मृत्युदं महिषीगावीभ्यां भवेद् यमसूर्यकम् ।**
**दण्डं स्याच्छगलीगावीशालाभ्यां दण्डभीतिदम् ॥ ८ ॥**

**२. यमसूर्यक**—महिषी और गावी शालाओं से निर्मित भवन मृत्यु देने वाला यमसूर्यक गृह कहलाता है तथा **३. दण्ड**—दण्ड एवं भय देने वाला दण्ड नामक गृह छागली और गावी इन दो शालाओं से निष्पन्न होता है ॥ ८ ॥

**वातं करेणुच्छगलीयुक्तमुद्वेगकारकम् ।**
**महिष्यजाभ्यामुद्वेगकरी चुल्ली धनापहा ॥ ९ ॥**
**काचं करेणुगावीभ्यां सुहृत्प्रीतिविनाशनम् ।**
**एकमूषममूषं च न द्विशालेषु कारयेत् ॥ १० ॥**

**४. वात**—वात नामक गृह हस्तिनी और छागली शालाओं से युक्त उद्वेग-कारक होता है । **५. चुल्ली**—चुल्ली नामक गृह महिषी और अजा इन दो शालाओं से युक्त होता है जो धन का अपहरण उपस्थित करने वाला और उद्वेग करने वाला कहा गया है । **६. काच**—करेणु और गावी नामक शालाओं से युक्त काच नामक गृह मित्र की प्रीति का विनाश करने वाला होता है । अत: द्विशाल भवनों में एक ही मूषा अथवा अमूषा (निर्मूषा) नहीं करनी चाहिए ॥ ९-१० ॥

**तेषु प्रत्येकमेकादशधा भिन्नानां सिद्धार्थ-यमसूर्य-दण्ड-वाताख्यानां चतुर्धा भिन्नयोश्चुल्लीकाचयोश्च संज्ञा**

**व्यत्यासात् काचचुल्ल्योश्च सर्वाभिस्तिसृभिस्तथा ।**
**चत्वार्याद्यानि भिद्यन्ते लघुप्रस्तारयोगतः ॥ ११ ॥**
**प्रत्येकमेकादशधा मन्दिराण्यभिधानतः ।**
**अन्ये चतुर्धा भिद्येते प्रत्येकं द्वे निवेशने ॥ १२ ॥**

काच और चुल्ली के सभी अथवा तीन मूषाओं के व्यत्यास से (उलट-फेर के कारण), संक्षिप्त प्रस्तार के योग से पहले के चार भेद होते हैं । उनके प्रत्येक के ग्यारह-ग्यारह भेद होते हैं और शेष दो के चार-चार भेद होते हैं और उनमें हर एक में दो-दो कमरे होते हैं ॥ ११-१२ ॥

**एषां मूषा भिदाभेदात् तद्वाह्यावाहहेतुकाः ।**

यह यहाँ पर स्मरणीय है कि इन सभी प्रकार के भेदों में मूषा-भेद का होना (निर्वहण) अथवा न होना (अनिर्वहण) ही इनके भेद का मुख्य कारण होता है ॥१३॥

## १. सिद्धार्थगृहभेदकथनम्

**वसुधारं भवेत् तेषामाद्यं सिद्धार्थकं ततः ॥ १३ ॥**
**कल्याणकं शाश्वतं च शिवं कामप्रदं तथा ।**
**स्त्रीदं शान्तं निष्कलङ्कं धनाधीशं कुबेरकम् ॥ १४ ॥**
**सिद्धार्थमनुजान्येवमेतान्येकादश क्रमात् ।**

**१. सिद्धार्थ गृह के भेद**—पहला भेद १. वसुधार फिर २. सिद्धार्थक, ३. कल्याणक, ४. शाश्वत, ५. शिव, ६. कामप्रद, ७. स्त्रीद, ८. शान्त, ९. निष्कलङ्क, १०. धनाधीश, ११. कुबेरक—इस प्रकार से सिद्धार्थ के क्रमशः ग्यारह भेद होते हैं ॥ १३-१५ ॥

## २. यमसूर्यगृहभेदकथनम्

**संहारं यमसूर्यं च कालं वैवस्वतं यमम् ॥ १५ ॥**
**करालं विकरालं च कबन्धं मृतकं शवम् ।**
**यमसूर्यस्य भेदाः स्युः सद्मनो महिषं तथा ॥ १६ ॥**

**२. यमसूर्य भवन के भेद**—१. संहार, २. यमसूर्य, ३. काल, ४. वैवस्वत, ५. यम, ६. कराल, ७. विकराल, ८. कबन्ध, ९. मृतक, १०. शव तथा ११. महिष—ये यमसूर्य गृह के ग्यारह भेद होते हैं ॥ १५-१६ ॥

३. दण्डगृहभेदकथनम्

**प्रचण्डचण्डे दण्डाख्यमुद्दण्डं काण्डकोटरे ।**
**विग्रहं निग्रहं धूम्रं निर्धूमं दन्तिदारुणम् ॥ १७ ॥**
**एकादशामी दण्डस्य भेदा दण्डभयप्रदाः ।**

**३. दण्ड गृह के भेद**—१. प्रचण्ड, २. चण्ड, ३. दण्ड, ४. उद्दण्ड, ५. काण्ड, ६. कोटर, ७. विग्रह, ८. निग्रह, ९. धूम्र, १०. निर्धूम एवं ११. दन्तिदारुण—ये दो शालाओं वाले दण्ड नामक भवन के ग्यारह भेद दण्ड एवं भय प्रदान करने वाले होते हैं ॥ १७-१८ ॥

४. वातगृहभेदकथनम्

**मरुत्पवनवाताख्यान्यनिलं सप्रभञ्जनम् ॥ १८ ॥**
**घनार्यम्बुदविध्वंसि प्रलयं कलहं कलिः ।**
**कलिचुल्ली च वातस्य भेदा उद्वेगदायकाः ॥ १९ ॥**

**४. वात गृह के भेद**—१. मरुत, २. पवन, ३. वात, ४. अनिल, ५. प्रभञ्जन, ६. घनारि, ७. अम्बुदविध्वंसि, ८. प्रलय, ९. कलह, १०. कलि और ११. कलि-चुल्ली—ये उद्वेगकर वात गृह के ग्यारह भेद कहे गए हैं ॥ १८-१९ ॥

५. चुल्लीगृहभेदकथनम्

**रोगं चुल्ल्यनलं भस्म चुल्ल्या भेदचतुष्टयम् ।**

६. काचगृहभेदकथनम्

**काचस्य तु च्छलं काचं कुलघ्नं च विरोधि च ॥ २० ॥**

**५. चुल्ली गृह के भेद**—१. रोग, २. चुल्ली, ३. अनल एवं ४. भस्म—ये चुल्ली के चार भेद हैं।

**६. काच गृह के भेद**—१. छल, २. काच, ३. कुलघ्न (अथवा कुलह) और ४. विरोधि—ये चार काच के भेद हैं ॥ २० ॥

**द्वापञ्चाशद् द्विशालानाममी भेदाः प्रकीर्तिताः ।**
**ब्रूमः साम्प्रतमेतेषां लक्षणानि पृथक् पृथक् ॥ २१ ॥**

इस प्रकार दो शालाओं वाले भवनों के ये बावन भेद कहे गए हैं । पहले चार के ग्यारह (अर्थात् कुल ४४) और अन्तिम दो के चार-चार (अर्थात् कुल ८) हैं । अब इनके पृथक्-पृथक् लक्षणों को कहते हैं ॥ २१ ॥

### सिद्धार्थभेदानां वसुधारादीनां लक्षणम्

**आद्याद्वितीये वहतो यत्र मूषे धनप्रदे ।**
**वसुधाराभिधानं तद् गृहं सर्वार्थकानुगम् ॥ २२ ॥**

**१. वसुधार**—पहली और दूसरी धनप्रद मूषाओं को वहन करने वाला सर्वार्थ सिद्धि प्रदान करने वाला वसुधार नामक गृह होता है ॥ २२ ॥

**आद्यातृतीये वहतो यत्र सिद्धार्थकं हि तत् ।**
**सर्वोपद्रवनिर्मुक्तं सिद्धिकृच्चिन्तितार्थकृत् ॥ २३ ॥**
**द्वितृतीयं वहन्मूषं भवेत् कल्याणमृद्धिकृत् ।**

**२. सिद्धार्थक**—जिसमें पहली और तीसरी मूषाएँ हों वह सिद्धार्थक गृह कहलाता है ।

**३. कल्याणक**—दूसरी और तीसरी मूषाओं को वहन करता हुआ सब उपद्रवों से रहित सिद्धि प्रदान करने वाला, चिन्तित अर्थों (= मनोरथों) को देने वाला, ऋद्धिकारी कल्याण नामक घर कहलाता है ॥ २३-२४ ॥

**वहदाद्यचतुर्थीकं शाश्वतं गृहमुत्तमम् ॥ २४ ॥**

**४. शाश्वत**—पहली और चौथी मूषाओं से युक्त शाश्वत नामक उत्तम गृह कहलाता है ॥ २४ ॥

**शिवं द्वितीयातुर्याभ्यां वहन्तीभ्यां सुखप्रदम् ।**
**कामदं त्रिचतुर्थीभ्यां भवेच्चिन्तितकामदम् ॥ २५ ॥**

**५. शिव**—दूसरी और चौथी मूषाओं से युक्त सुखप्रद शिव नामक गृह होता है ।

**६. कामद**—चिन्तित मनोरथों को देने वाला कामद नामक गृह तीसरी और चौथी मूषाओं से युक्त होता है ॥ २५ ॥

**आद्याद्याभि(सु?स्तु) तिसृभिः स्त्रीप्रदं सम्प्रदं (?) प्रभोः ।**
**आद्याद्वितीयातुर्याभिः शान्तं शान्तिप्रदायकम् ॥ २६ ॥**

**७. स्त्रीप्रद**—गृहस्वामी के लिये शान्ति एवं सुख प्रदान करने वाला स्त्रीप्रद नामक वेश्म पहले की तीन मूषाओं से उपलक्षित होता है ।

**८. शान्त**—शान्ति प्रदायक शान्त नामक घर पहली, दूसरी और चौथी मूषाओं से युक्त होता है ॥ २६ ॥

**आद्यातृतीयातुर्याभिर्निष्कलङ्कं समृद्धिकृत् ।**

**द्वितृतीयाचतुर्थीभिर्धनेशं धनवर्धनम् ॥ २७ ॥**
**आद्याद्याभिश्चतसृभिः कुबेरं वित्तवृद्धिकृत् ।**

**९. निष्कलङ्क**—सर्वसमृद्धि देने वाला निष्कलङ्क नामक गृह पहली, तीसरी और चौथी मूषाओं से युक्त होता है ।

**१०. धनेश**—धन वर्धन करने वाला धनेश नामक गृह दूसरी, तीसरी और चौथी मूषाओं से उपलक्षित होता है ।

**११. कुबेर**—धन की वृद्धि करने वाला कुबेर नामक गृह पहले की चारों मूषाओं से युक्त होता है ॥ २७-२८ ॥

**यमसूर्यभेदानां संहारादीनां च लक्षणम्**

**यमसूर्यप्रभेदेषु ब्रूमो लक्ष्म फलानि च ॥ २८ ॥**

**यमसूर्य के भेद संहारादि के लक्षण**—अब यमसूर्य के प्रभेदों के लक्षण और फल कहता हूँ ॥ २८ ॥

**आद्याद्वितीयामूषाभ्यां संहारं स्वामिनाशनम् ।**
**गृहमाद्यातृतीयाभ्यां मृत्युदं यमसूर्यकम् ॥ २९ ॥**

**१. संहार**—स्वामी का नाश करने वाला संहार नामक वेश्म पहली और दूसरी मूषाओं से युक्त होता है ।

**२. यमसूर्यक**—मृत्यु देने वाला यमसूर्यक नामक गृह पहली और तीसरी मूषा से युक्त होता है ॥ २९ ॥

**द्वितृतीयं वहन्मूषं कालं योषिद्विनाशनम् ।**
**वैवस्वतं वहत्तुर्यप्रथमं रोगकारकम् ॥ ३० ॥**

**३. काल**—स्त्री का विनाश करने वाले काल नामक घर में दूसरी और तीसरी मूषाएँ होती हैं ।

**४. वैवस्वत**—रोगकारक वैवस्वत नामक गृह चौथी और पहली मूषाओं का वहन करता है ॥ ३० ॥

**यमालयं द्वितुर्याभ्यां स्वामिनो यमदर्शनम् ।**
**करालं त्रिचतुर्थीभ्यां भर्तुः प्राणविनाशनम् ॥ ३१ ॥**

**५. यमालय**—स्वामी को यमदर्शन कराने वाला यमालय नामक गृह दूसरी और चौथी मूषाओं से युक्त कहा गया है ।

**६. कराल**—स्वामी के प्राण का विनाश करने वाला कराल नामक गृह तीसरी और चौथी मूषाओं से युक्त होता है ॥ ३१ ॥

**आद्याभिस्तिसृभिः स्वामिनाशनं विकरालकम् ।**
**आद्याद्वितीयातुर्याभिः कबन्धं भर्तृनाशनम् ॥ ३२ ॥**

**७. विकराल**—गृहस्वामि-नाशक विकराल नामक गृह पहले की तीन मूषाओं से युक्त होता है ।

**८. कबन्ध**—भर्तृनाशक कबन्ध नामक गृह पहली, दूसरी और चौथी मूषाओं से उपलक्षित कहा गया है ॥ ३२ ॥

**आद्यातृतीयातुर्याभिर्भर्तृघ्नं मृतकालयम् ।**
**शवं द्वित्रिचतुर्थीभिः स्वामिनो मरणप्रदम् ॥ ३३ ॥**
**आद्याद्याभिश्चतसृभिः स्वामिघ्नं महिषं विदुः ।**

**९. मृतक**—घर के मालिक को मारने वाला मृतक नामक आलय पहली, तीसरी और चौथी मूषाओं से युक्त होता है ।

**१०. शव**—घर के मालिक को मरण प्रदान करने वाला शव नामक गृह दूसरी, तीसरी और चौथी मूषाओं से युक्त होता है ।

**११. महिष**—गृहस्वामी को मारने वाला महिष नामक गृह पहली चारों मूषाओं से उपलक्षित कहा गया है ॥ ३३-३४ ॥

### दण्डगृहभेदानां प्रचण्डादीनां लक्षणम्

**प्रचण्डं दण्डभेदेषु पूर्वया सद्वितीयया ॥ ३४ ॥**
**गृहमादौ विजानीयाद् भर्तृर्नृपभयप्रदम् ।**
**चण्डमाद्यातृतीयाभ्यां चण्डदण्डभयप्रदम् ॥ ३५ ॥**

**दण्डद्विशाल गृह के भेद प्रचण्डादि के लक्षण—**

**१. प्रचण्ड**—दो शालाओं वाले भवन के भेदों में प्रचण्ड नामक गृह पहली और दूसरी मूषाओं से युक्त कहा गया है । इसे आदि में गृहस्वामी के लिए राजभय देने वाला घर समझना चाहिये ।

**२. चण्ड**—दण्ड का अत्यन्त भय उपस्थित करने वाला चण्ड नामक गृह पहली और तीसरी मूषाओं से युक्त होता है ॥ ३४-३५ ॥

**दण्डं स्याद् द्वितृतीयाभ्यां राजदण्डाय दारुणम् ।**

**उद्दण्डमाद्यातुर्याभ्यां स्वामिनो दण्डभीतिदम् ॥ ३६ ॥**
**काण्डं द्वितीयातुर्याभ्यां काण्डवद्भेदकारकम् ।**
**कोटरं त्रिचतुर्थीभ्यां स्वामिनो विग्रहावहम् ॥ ३७ ॥**

**३. दण्ड**—दण्ड नामक गृह दूसरी और तीसरी मूषाओं से युक्त होता है जो राजदण्ड के लिए अत्यन्त दारुण कहा गया है ।

**४. उद्दण्ड**—स्वामी के लिये दण्ड तथा भयकारक उद्दण्ड नाम का घर पहली और चौथी मूषाओं से युक्त कहा गया है ।

**५. काण्ड**—काण्ड के समान भेद कारक काण्ड नामक वेश्म दूसरी और चौथी मूषाओं से युक्त होता है ।

**६. कोटर**—स्वामी के लिये विग्रह उपस्थित करने वाला कोटर नामक गृह तीसरी और चौथी मूषाओं से युक्त होता है ॥ ३६-३७ ॥

**प्रथमा द्वितृतीयाभिर्विग्रहं वधबन्धकृत् ।**
**आद्याद्वितीयातुर्याभिर्निग्रहं विग्रहावहम् ॥ ३८ ॥**

**७. विग्रह**—वध और बन्धन देने वाला विग्रह नामक घर पहली, दूसरी और तीसरी मूषाओं से युक्त होता है ।

**८. निग्रह**—विग्रह कराने वाला निग्रह नामक गृह पहली, दूसरी और चौथी मूषाओं से बनता है ॥ ३८ ॥

**आद्यातृतीयातुर्याभिर्धूम्रं सर्वधनापहम् ।**
**द्वितृतीयाचतुर्थीभिर्निर्धूमं धननाशनम् ॥ ३९ ॥**

**९. धूम्र**—समस्त धन का नाश करने वाला धूम्र नामक गृह पहली, तीसरी और चौथी मूषाओं से निर्मित होता है ।

**१०. निर्धूम**—दूसरी, तीसरी और चौथी मूषाओं से निर्धूम नामक गृह बनता है जो धन नाशक कहा गया है ॥ ३९ ॥

**आद्याद्याभिश्चतसृभिर्दन्तिदारुणमर्थहृत् ।**

**११. दन्ति-दारुण**—धन का हरण करने वाला दन्ति-दारुण नामक गृह पहले की चारों मूषाओं से युक्त कहा गया है ॥ ४० ॥

**वातभेदानां मरुदादीनां लक्षणम्**

**आद्याद्वितीयामूषाभ्यां वातभेदेषु मन्दिरम् ॥ ४० ॥**
**मरुत्संज्ञं भवेत् तत्र वसतां कलहः सदा ।**

**वात के भेद मरुदादि के लक्षण**—अब वात नामक मुख्य द्विशाल गृह के भेदों को कहता हूँ—

**१. मरुत्**—इन द्विशाल भवनों में मरुत संज्ञा उस मन्दिर (= गृह) की होती है जिसमें पहली और दूसरी मूषाएँ हों। वहाँ पर बसने वालों में सदा लड़ाई रहती है ॥ ४०-४१ ॥

**उद्वेगकारि पवनं तृतीयाद्योपलक्षितम् ॥ ४१ ॥**

**२. पवन**—तीसरी और पहली मूषाओं से उपलक्षित भवन गृहस्वामी के लिए उद्वेगकारक पवन नामक घर कहा गया है ॥ ४१ ॥

**वाताख्यं द्वितृतीयाभ्यां सदा सन्तापकारकम्।**
**सन्तापोद्वासकार्याद्यातुर्याभ्यामनिलं भवेत् ॥ ४२ ॥**

**३. वात**—सदा सन्ताप-कारक वात नामक मकान दूसरी और तीसरी मूषाओं से युक्त कहा गया है।

**४. अनिल**—सन्ताप एवं उद्वासकारक अनिल नामक घर पहली और चौथी मूषाओं से युक्त कहा गया है ॥ ४२ ॥

**प्रभञ्जनं द्वितुर्याभ्यां शोकसन्तापकारकम्।**
**तृतीयया चतुर्थ्या च घनार्युद्वेगकारकम् ॥ ४३ ॥**

**५. प्रभञ्जन**—शोक एवं सन्तापकारक प्रभञ्जन नामक गृह दूसरी और चौथी से मूषाओं से युक्त होता है।

**६. घनारि**—उद्वेगकारक घनारि नामक गृह तीसरी और चौथी मूषाओं से युक्त कहा गया है ॥ ४२-४३ ॥

**आद्यया द्वितृतीयाभ्यामम्बुदध्वंस्यर्थनाशनम्।**
**आद्याद्वितीयातुर्याभिः प्रलयं चित्ततापकृत् ॥ ४४ ॥**

**७. अम्बुदध्वंसि**—कार्य और अर्थ का नाश करने वाला अम्बुदध्वंसि नामक गृह पहली और दूसरी तथा तीसरी मूषाओं से युक्त होता है।

**८. प्रलय**—चित्त में सन्ताप उपस्थित करने वाला प्रलय नामक गृह पहली, दूसरी और चौथी मूषाओं से विहित होता है।

**विमर्श**—'अम्बुदध्वंस्यर्थनाशनम्' पाठ होना चाहिए। 'रोगं कार्यार्थनाशनम् पाठ गलत है क्योंकि २२.१९ में यही पाठ आया है ॥ ४४ ॥

**आद्याद्वितीयातुर्याभिः कलहं कलहावहम्।**

**द्वितृतीयाचतुर्थीभिः कलिः सन्तापकारकम् ॥ ४५ ॥**

**९. कलह**—कलहकारी कलह नामक गृह पहली, दूसरी और चौथी मूषाओं से युक्त होता है ।

**१०. कलि**—सन्ताप-कारक कलि नामक गृह दूसरी, तीसरी और चौथी मूषाओं से युक्त होता है ॥ ४५ ॥

**आद्याद्याभिश्चतसृभिः कलिचुल्ली धनापहा ।**

**११. कलि चुल्लि**—धन का अपहरण करने वाली कलि-चुल्ली नामक गृह पहले की चार मूषाओं से युक्त होता है ॥ ४६ ॥

**चुल्लीभेदस्य रोगाख्यस्य च लक्षणम्**

**रोगमाद्याद्वितीयाभ्यां चुल्लीभेदेषु शोकदम् ॥ ४६ ॥**

**चुल्ली के भेद रोगादि के लक्षण—**

**१. रोग**—चुल्ली के भेदों में शोक देने वाला रोग नामक गृह पहली और दूसरी मूषाओं से युक्त कहा गया है ॥ ४६ ॥

**स्याद् द्वितीयातृतीयाभ्यां चुल्ली वित्तविनाशनी ।**
**वसुघ्नमनलं नाम त्रितुर्याभ्यां निवेशनम् ॥ ४७ ॥**

**२. चुल्लि**—वित्त का विनाश करने वाली चुल्ली नामक गृह दूसरी और तीसरी मूषाओं से युक्त होता है ।

**३. अनल**—अर्थनाशक अनल नामक भवन तीसरी और चौथी मूषाओं से उपलक्षित होता है ॥ ४७ ॥

**वित्तघ्नमाद्यातुर्याभ्यां भस्माख्यं स्वामिनं सदा ।**

**४. भस्म**—स्वामी का सदैव वित्त नाशक भस्म नामक गृह पहली और चौथी मूषाओं से युक्त होता है ॥ ४८ ॥

**अवशिष्टानां चुल्लीभेदानां काचभेदानां छलादीनां च लक्षणम्**

**उदङ्मुखाभ्यां मूषाभ्यां काचभेदेषु मन्दिरम् ॥ ४८ ॥**
**छलं नाम भवेन्नित्यं बन्धुवर्गापमानकृत् ।**
**दक्षिणोत्तरमूषाणां पौरस्त्ये वहतो यदि ॥ ४९ ॥**
**काचं नाम तदा वेश्म सज्जनानन्दकारकम् ।**
**मूषाभ्यां दक्षिणाभ्यां स्यात् कुलहं त्रिकुलक्षयम् ॥ ५० ॥**

**दक्षिणोत्तरमूषाणां पाश्चात्ये वहतो यदि ।**
**विरोधं नाम तद्वेश्म सर्वलोकविरोधकृत् ॥**

**काच के भेदों में छलादि के लक्षण—**

**१. छल**—काच के भेदों में छल नामक मन्दिर उत्तराभिमुखीन दो मूषाओं से उपलक्षित होता है । यह नित्य बन्धुवर्ग के लिये अपमानकारी होता है ।

**२. काच**—दक्षिण और उत्तर वाली मूषाओं का यदि पूर्व में वहन हो तो काच नाम का वेश्म सज्जनानन्दकारक होता है ।

**३. कुलह**—दक्षिण की दोनों मूषाओं से (मातृ, पितृ एवं पत्नी) तीनों कुलों का नाश करने वाला कुलह नामक घर कहा गया है ।

**४. विरोध**—दक्षिण और उत्तर की मूषाओं का यदि पश्चिम में वहन हो तो विरोध नाम का वह वेश्म सब लोगों के लिए विरोधकारक होता है ॥ ४८-५१ ॥

**उक्तान्येवं द्विपञ्चाशद् द्विशालानां समासतः ॥ ५१ ॥**
**एतानि मूषावहनप्रभेदात्**
**फलप्रभेदाच्च निदर्शितानि ।**
**द्विशालवेश्मान्यधुनैकशाला-**
**न्युदाह्रियन्ते भवनानि सम्यक् ॥ ५२ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे द्विशालगृहलक्षणं नाम द्वाविंशोऽध्यायः ॥ २२ ॥**

इस प्रकार से संक्षिप्त रूप से द्विशाल-भवनों के बावन भेद बताये गये और उनके मूषा-वहन और फल आदि का निर्देश भी किया गया । द्विशाल गृह लक्षण कथन के बाद अब एक शाला वाले भवनों के सूचक उदाहरण सम्यक् रूप से दिये जाते हैं ॥ ५१-५२ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'द्विशालगृहलक्षण' नामक बाइसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ २२ ॥**



# समीक्षात्मक टिप्पणी

## द्विशाल भवन (२२.२-९)

द्विशाल भवनों का वर्णन अन्य वास्तुग्रन्थों में इस प्रकार प्राप्त होता है—

१. **मत्स्यपुराण** (२५४) में दक्षिण एवं पश्चिम दिग्गत शालाओं से युक्त भवन को धनधान्य युक्त एवं पुत्र फलप्रद कहा गया है। पश्चिम एवं उत्तर दिग्गत शाला वाले भवन को **यमसूर्य**, उत्तर एवं पूर्व शाला वाले भवन को **दण्ड** कहते हैं जो अकाल मृत्यु देने वाला होता है तथा पूर्व एवं दक्षिण मुख शाला वाले भवन को **धन** कहा गया है—

याम्यापराभ्यां शालाभ्यां धनधान्यफलप्रदम्।
क्षेमवृद्धिकरं नृणां तथा पुत्रफलप्रदम्।
यमसूर्यं च विज्ञेयं पश्चिमोत्तरशालकम्॥
राजाग्निभयदं नृणां कुलक्षयकरं च यत्।
उदक्पूर्वे तु शाले दण्डाख्ये यत्र तद् भवेत्॥
अकालमृत्युभयदं परचक्रभयावहम्।
धनाख्यं पूर्वयाम्याभ्यां शालाभ्यां यद् शालकम्॥ (२५४.८-११)

इसी प्रकार पूर्व पश्चिम की शाला से युक्त द्विशाल भवन चुल्ली होता है जो मृत्युकारक है तथा उत्तर एवं दक्षिण दिशा से युक्त द्विशाल भवन **सिद्धार्थ वज्र** कहे जाते हैं—

चुल्ली पूर्वापराभ्यान्तु सा भवेन्मृत्युसूचनी।
वैधव्यदायकं स्त्रीणामनेकभयकारकम्॥
कार्यमुत्तरयाम्याभ्यां शालाभ्यां भयदं नृणाम्।
सिद्धार्थवज्रवज्याणि द्विशालानि सदा बुधैः॥ (२५४.१२-१४)

२. **बृहत्संहिता** (५३.३९-४१) में द्विशाल भवनों की संज्ञा १. सिद्धार्थ, २. यमसूर्य, ३. दण्ड, ४. वात, ५. गृहचुल्ली एवं ६. काच कही गई है—

सिद्धार्थमपरयाम्ये यमसूर्यं पश्चिमोत्तरे शाले।
दण्डाख्यमुदक्पूर्वे वाताख्यं प्राग्युता याम्या॥
पूर्वापरे तु शाले गृहचुल्ली दक्षिणोत्तरे काचम्। (५३.३९-४०)

समराङ्गणसूत्रधार (२२.२-९) में भी द्विशाल भवन के यही नाम प्राप्त होते हैं। इनके अतिरिक्त इनके अनेक भेद एवं उपभेद भी (२२.१०-२०) वर्णित हैं।

**३. मयमतम् (२६.४७-५५)** के अनुसार—द्विशाल भवन इस प्रकार वर्णित हैं—

चतुरस्रे द्विशाले तु धर्मभागविभाजिते ।
भागेन बाह्यतो वारं द्व्यंशं गेहविशालकम् ॥
प्रमुखे वारमेकांशं मण्डपं नवभागिकम् ।
तदावृत्यैकतोऽलिन्दं शेषं चंक्रमणं भवेत् ॥
मुखगेहं बहिर्वारं लाङ्गलाभं यथा तथा ।
मुखचंक्रमणाद्यन्तर्विन्यासं चतुरस्रकम् ॥
मध्यरङ्गसमायुक्तं मुख्यगेहं द्विवासकम् ।
बाह्यचंक्रमणाद् बाह्ये मुखभद्रं द्विभागतः ॥
चतुर्मुखसमायुक्तं द्विशालं तच्चतुर्मुखम् ।
तदेव पञ्चभागान्तमेकशालामुखायतम् ॥
द्वारं पूर्ववदुद्दिष्टं सर्वालङ्कारशोभितम् ।
मण्डपं बाह्यतोऽलिन्दं सायतं प्रविधीयते ॥
नेत्रत्रयसमायुक्तं दीर्घ्यां सायतभद्रकम् ।
एतत् स्वस्तिकमित्युक्तं शेषं पूर्ववदाचरेत् ॥
तदेव द्विमुखोपेतं दण्डवक्त्रमिति स्मृतम् ।
सावकाशाङ्गणोपेतं मण्डपेन विना यदि ॥
शालाविरहितस्थाने कुड्यद्वारं प्रयोजयेत् ।
एकानेकतलोपेतं कुर्याद् रूपोपजीविनाम् ॥ (२६.४७-५५)

**चतुर्मुख द्विशाल भवन**—चौकोर द्विशाल गृह के दस विभाग कर, एक भाग से बाहर का मार्ग एवं दो भाग से गृह का विस्तार रखना चाहिये । सामने एक भाग से वार (मार्ग) एवं नौ भाग में मण्डप का निर्माण होना चाहिये । उसको घेरते हुये एक भाग में अलिन्द एवं शेष भाग में चंक्रमण (= गलियारा) का निर्माण करना चाहिये ।

गृह का मुखभाग एवं बाहरी मार्ग लाङ्गल (= हल) के आकार का होना चाहिये, किन्तु मुखभाग पर स्थित चंक्रमण (गलियारा) तथा भीतरी बनावट चौकोर होनी चाहिये । दो कक्षों से निर्मित मुख्य भवन भाग में रङ्गस्थल से युक्त होना चाहिये । बाह्य चंक्रमण (गलियारे) के बाहर दो भाग में मुखभद्र अर्थात् सामने का पोर्च निर्मित होना चाहिये । चार मुख (द्वार) से युक्त होने के कारण इस द्विशाल भवन की संज्ञा चतुर्मुख कही गई है ।

**स्वस्तिक नामक द्विशाल गृह**—इस द्विशाल भवन के एक शाला की लम्बाई के पाँच विभाग करने चाहिये । द्वार का निर्माण पूर्ववर्णित नियमों के अनुसार होना

चाहिये एवं यह भवन के सभी अलङ्करणों से युक्त होता है । मण्डप एवं बाहरी अलिन्द (बरामदा) आयताकार होना चाहिये । इसमें तीन नेत्र होते हैं और लम्बाई में इसमें आयताकार 'भद्र' होता है । इस भवन को 'स्वस्तिक' कहते हैं । शेष अवयवों का निर्माण पहले के अनुसार ही करना चाहिये ।

**दण्डवक्त्र नामक द्विशाल गृह**—दण्डवक्त्र भवन दो मुखों से युक्त होता है । यदि मण्डप न निर्मित हो, तो वहाँ खुला आँगन बनाना चाहिए । जिस स्थान पर कमरे न निर्मित हों वहाँ भित्ति एवं द्वार निर्मित होना चाहिए । रूप से आजीविका चलाने वाली वेश्या स्त्रियों के भवन एक तल से लेकर अनेक तल से युक्त निर्मित करना चाहिये ।

**४. वास्तुमण्डन** (६.७२-७३) में भी सिद्धार्थादि द्विशाल गृह के लक्षण बताए गए हैं ।



# अथ त्रयोविंशोऽध्यायः

## * एकशालगृहलक्षणम्[1] *

## (The Definition of Single Chambered Houses)

**गृहाणामेकशालानां वक्ष्यामो लक्षणान्यथ ।**
**शस्तानां निन्दितानां च यथावदनुपूर्वशः ॥ १ ॥**

अब एक शाला (कमरे) वाले घरों का लक्षण कहता हूँ । उनमें से कुछ पहले की तरह अनिन्दित अर्थात् प्रशस्त कहे जाते हैं और कुछ निन्दित अर्थात् अप्रशस्त कहे जाते हैं ॥ १ ॥

एकशालेष्वलिन्दप्रस्तारः

**विन्यसेच्चतुरः पूर्वं गुरून् वर्णान् यथाविधि ।**
**एभ्य एव प्रसूयन्ते भेदाः षोडश वेश्मनाम् ॥ २ ॥**

**एकशालगृह में अलिन्द प्रस्तार**—पहले की तरह चार यथावत् गुरुवर्णों का विन्यास सम्पन्न करे अर्थात् प्रस्तार विधि करे और इन्हीं से वेश्मों (= भवनों) के सोलह भेद प्रसूत होते हैं ॥ २ ॥

**गुरोरधो लघुं न्यस्येत् पूर्वं शेषं यथोपरि ।**
**गुरुभिः पूरयेत् पश्चाद् यावत् स्युर्लघवोऽखिलाः ॥ ३ ॥**

गुरु के नीचे लघु का न्यास करे और शेष को ऊपर की तरह तब तक गुरुओं से पूर्ण करते जाना चाहिये जब तक सब लघु न हो जावें ॥ ३ ॥

**विद्यादलिन्दान् सर्वेषु लघुस्थानेषु पण्डितः ।**
**सव्यावर्तं गृहमुखादेतांश्च विनियोजयेत् ॥ ४ ॥**

वास्तु पण्डित सभी लघु स्थानों में अलिन्दों (बार्जों) को समझें और इनको गृह के मुख से दाहिने तरह विनियोजित करें ॥ ४ ॥

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह अट्ठाईसवाँ अध्याय है ।

**एषामलिन्दसंयोगाद् भवनानां पृथक् पृथक् ।**
**नामानि गुणदोषाश्च वक्ष्यन्तेऽनुक्रमादतः ॥ ५ ॥**

अब इन भवनों के अलिन्दों के संयोग से अलग-अलग, नाम, गुण और दोष क्रमशः यहाँ कहे जाते हैं ॥ ५ ॥

षोडशानां ध्रुवाद्याख्यानामेकशालगृहभेदानां निर्देशादि

**ध्रुवं धन्यं जयं नन्दं खरं कान्तं मनोरमम् ।**
**सुमुखं दुर्मुखं क्रूरं सुपक्षं धनदं क्षयम् ॥ ६ ॥**
**आक्रन्दं विपुलं चैव विजयं गृहमुत्तमम् ।**

**ध्रुव आदि एकशाल भवनों के सोलह भेद**—१. ध्रुव, २. धन्य, ३. जय, ४. नन्द, ५. खर, ६. कान्त, ७. मनोरम, ८. सुमुख, ९. दुर्मुख, १०. क्रूर, ११. सुपक्ष, १२. धनद, १३. क्षय, १४. आक्रन्द, १५. विपुल और १६. विजय—ये सोलह भेद (अलिन्दविन्यास के वैचित्र्य के कारण) हुए ॥ ६-७ ॥

**ध्रुवे जयमवाप्नोति धन्ये धान्यागमो भवेत् ॥ ७ ॥**
**जये सपत्नाञ्जयति नन्दे सर्वाः समृद्धयः ।**
**खरमायासदं वेश्म कान्ते च लभते श्रियम्॥ ८ ॥**

१. **ध्रुव** गृह में जय प्राप्त होती है और २. **धन्य** गृह में धान का आगमन होता है । ३. **जय** से शत्रुओं पर विजय होती है, ४. **नन्द** गृह में सभी समृद्धियाँ प्राप्त होती हैं । ५. **खर** नाम का वेश्म आयासदायक (परिश्रम उत्पन्न करने वाला) होता है और ६. **कान्त** गृह में श्री समृद्धि प्राप्त होती है ॥ ७-८ ॥

**आयुरारोग्यमैश्वर्यं तथा वित्तस्य सम्पदः ।**
**मनोरमे मनस्तुष्टिर्गृहभर्तुः प्रकीर्तिता ॥ ९ ॥**

७. **मनोरम** गृह में आयु, आरोग्य, ऐश्वर्य और धन सम्पदाएँ प्राप्त होती है और गृह के स्वामी के लिए यह मनस्तुष्टि वाला होता है ॥ ९ ॥

**सुमुखे राज्यसन्मानं दुर्मुखे कलहः सदा ।**
**क्रूरव्याधिभयं क्रूरे सुपक्षं गोत्रवृद्धिकृत् ॥ १० ॥**

८. **सुमुख** में राज्य सन्मान, ९. **दुर्मुख** में सदा कलह, १०. **क्रूर** में व्याधि का भय और गोत्र वृद्धि करने वाला सुपक्ष नामक गृह होता है ॥ १० ॥

**धनदे हेमरत्नादि गाश्चैव लभते पुमान् ।**
**क्षयं सर्वक्षयं गेहमाक्रन्दं ज्ञातिमृत्युदम् ॥ ११ ॥**

१२. **धनद** में स्वर्ण एवं रत्न आदि के साथ-साथ गौओं को भी मनुष्य प्राप्त करता है और १३. सर्व धन का क्षय करने वाला **क्षय** नामक गृह कहा गया है तथा १४. **आक्रन्द** नामक गृह स्वजातियों के लिए मृत्युदायक कहा गया है ॥ ११ ॥

**आरोग्यं विपुले ख्यातिर्विजये सर्वसम्पदः ।**

१५. **विपुल** गृह में आरोग्य और ख्याति प्राप्त होती है तथा १६. **विजय** गृह में सभी प्रकार की सम्पत्तियाँ प्राप्त होती हैं ॥ १२ ॥

**विमर्श**—ऊपर वर्णित गृहों में द्वारों का क्रम इस प्रकार होता है—

| | | |
|---|---|---|
| ध्रुव | ऽ ऽ ऽ ऽ | द्वाररहित |
| धान्य | । ऽ ऽ ऽ | पूर्वद्वार |
| जय | ऽ । ऽ ऽ | दक्षिणद्वार |
| नन्द | । । ऽ ऽ | पूर्वदक्षिणद्वार |
| खर | ऽ ऽ । ऽ | पश्चिमद्वार |
| कान्त | । ऽ । ऽ | पूर्वपश्चिमद्वार |
| मनोरम | ऽ । । ऽ | दक्षिणपश्चिमद्वार |
| सुमुख | । । । ऽ | उत्तररहितद्वार |
| दुर्मुख | ऽ ऽ ऽ । | उत्तरद्वार |
| उग्र | । ऽ ऽ । | पूर्वोत्तरद्वार |
| विपक्ष | ऽ । ऽ । | दक्षिणोत्तरद्वार |
| धनद | । । ऽ । | पश्चिमरहितदिशित्रयद्वार |
| क्षय | ऽ ऽ । । | पश्चिमोत्तरद्वार |
| आक्रन्द | । ऽ । । | दक्षिणरहितदिशित्रयद्वार |
| विपुल | ऽ । । । | पूर्वरहितदिशित्रयद्वार |
| विजय | । । । । | सर्वदिशिद्वार |





**एष्वेव भेदेष्वलिन्दविन्यासवैचित्र्येण निष्पन्नानां रम्यनन्दश्रीधरमुदिताख्या-नामन्येषामेकशालविशेषाणां लक्षणं फलं च**

**यदि धन्ये द्वितीयोऽपि मुखालिन्दः प्रयुज्यते ॥ १२ ॥**
**तद् गृहं रम्यनामेह भर्तुः सौभाग्यकारकम् ।**

**अलिन्द विन्यास से निष्पन्न रम्य, नन्द, श्रीधर एवं मुदित नामक भेदों के लक्षण और फल—**

१. यदि धन्य नामक गृह में दूसरा भी मुखालिन्द प्रयुक्त किया जाए तो वह घर **'रम्य'** नाम का होता है और वह स्वामी के लिए सौभाग्यदायक होता है ॥ १२-१३ ॥

**मुखालिन्देन नन्दाख्यं द्वितीयेन सुयोजितम् ॥ १३ ॥**
**तच्छ्रीधरमिति ख्यातं तस्मिन् श्रीर्नित्यमाविशेत् ।**

२. दूसरे मुखालिन्द से योजना करने पर नन्द नाम का गृह **'श्रीधर'** की संज्ञा वाला होता है । उसमें लक्ष्मी सदैव निवास करती है ॥ १३-१४ ॥

**अलिन्दश्चेद् द्वितीयोऽपि कान्तस्यास्ये निवेश्यते ॥ १४ ॥**
**मुदितं तत् भवेद् भर्तुर्भूतिकृद् भवनोत्तमम् ।**

३. कान्त नामक गृह के मुख भाग में जब द्वितीय अलिन्द विनिवेशित होता है तो उसे **'मुदित'** कहते हैं जो गृहस्वामी के लिए समृद्धि प्रदान करने वाला उत्तम भवन कहा गया है ॥ १४-१५ ॥

**तादृशानामेव वर्धमानाद्याख्यानां लक्षणं फलं च**

**सुमुखस्य यदालिन्दो वक्त्रेऽन्यो विनिवेश्यते ॥ १५ ॥**
**वर्धमानं तदा तत् स्यात् स्वामिलक्ष्मीविवर्धनम् ।**

४. सुमुख नामक गृह के मुख में जब दूसरा अलिन्द विनिवेशित होता है तो उसे **'वर्धमानक'** कहते हैं और वह स्वामी की लक्ष्मी का वर्धन करने वाला कहा गया है ॥ १५-१६ ॥

**क्रूरं युक्तं द्वितीयेन मुखालिन्देन मन्दिरम् ॥ १६ ॥**
**करालं तद् विजानीयाद् भर्ता तस्य विनश्यति ।**

५. दूसरे मुखालिन्द (= बार्जा) से युक्त **क्रूर** नामक मन्दिर (गृह) को कराल जानना चाहिये और उसका स्वामी विनाश को प्राप्त होता है ॥ १६-१७ ॥

**अलिन्देन द्वितीयेन धनदं योजितं पुनः ॥ १७ ॥**
**सुनाभं तद् भवेत् तस्मिन् पशून् पुत्रानवाप्नुयात्।**

६. दूसरे अलिन्द से योजित किया गया फिर धनद नाम का गृह **सुनाभ** कहलाता है । उसमें उस गृह का स्वामी पशुओं एवं पुत्रों सहित समृद्धि को प्राप्त करता है ॥ १७-१८ ॥

**आक्रन्दस्य पुरोभागे यद्यलिन्दः कृतोऽपरः ॥ १८ ॥**
**ध्वाङ्क्षसंज्ञं गृहं तज्ज्ञा निन्दितं प्रवदन्ति तत् ।**

७. आक्रन्द के पुरोभाग में यदि दूसरा अलिन्द विनियोजित किया जाता है तो उस गृह को विद्या विशारद '**ध्वांक्ष**' के नाम से पुकारते हैं और उसको निन्दित गृह बतलाते हैं ॥ १८-१९ ॥

**द्वितीयालिन्दघटना विजयस्य मुखे यदि ॥ १९ ॥**
**तत् समृद्धमिति ख्यातं गृहं स्यात् पुण्यकर्मणाम् ।**

८. विजय के मुख भाग में यदि दूसरा अलिन्द संघटित किया जाता है तो उसको '**समृद्ध**' कहा जाता है और वह पुण्य कर्मों का घर होता है ॥ १९-२० ॥

**पूर्वमुक्तेषु ध्रुवादिषु षोडशवेश्मसु षड्दारुकल्पनया रूपान्तरं**

**यान्युक्तानि ध्रुवादीनि पूर्ववेश्मानि षोडश ॥ २० ॥**
**शालाविभागं ज्ञात्वैषां तिर्यक् षड्दारु विन्यसेत् ।**
**षोडशान्ये च भेदाः स्युः संज्ञाश्चैषामनुक्रमात् ॥ २१ ॥**

**षड्दारु (धरन या पाटन) योजना से अन्य भेद**—ध्रुव आदि जो पहले सोलह वेश्म कहे गये हैं उनकी शालाओं का विभाग जानकर छह दारुओं (= पाटन) का विन्यास करे तो उनके सोलह और भेद होते हैं । उनका नाम अनुक्रम से कहते हैं ॥ २०-२१ ॥

**प्राप्तानामन्येषां षोडशगृहभेदानां संज्ञाः**

**सुन्दरं वरदं भद्रं प्रमोदं विमुखं शिवम् ।**
**सर्वलाभं विशालं च विलक्षमशुभं ध्वजम् ॥ २२ ॥**

**उद्द्योतं भीषणं शून्यमजितं कुलनन्दनम् ।**
**नामभिर्वेश्मनामेषां गुणदोषान् प्रकल्पयेत् ॥ २३ ॥**

**षड्दारु प्रयोग से प्राप्त हुए सोलह भेद**—उनके नाम क्रमशः निम्न हैं—१. सुन्दर, २. वरद, ३. प्रमोद, ४. भद्र, ५. विमुख, ६. शिव, ७. सर्वलाभ, ८. विशाल, ९. विलक्ष, १०. अशुभ, ११. ध्वज, १२. उद्योत, १३. भीषण, १४. शून्य, १५. अजित एवं १६. कुल नन्दन—इन नामों से इन वेश्मों के गुणदोषों की प्रकल्पना स्वयं से कर लेनी चाहिये ॥ २०-२३ ॥

**एषामेव भेदानां शालापुरतो विन्यस्तैः षड्दारुभिरुत्पन्नानां षोडशगृहभेदानां संज्ञा**

**यथार्थनामान्येतानि यस्मात् प्रोक्तान्यविस्तरात् ।**
**एभ्य एवापराणि स्युर्वेश्मान्यन्यानि षोडश ॥ २४ ॥**
**शालापुरोविनिर्युक्ततिर्यक्षड्दारुकारणात् ।**

**शाला के पुरोभाग में तिर्यक् षड्दारु के संयोजन से इनके सोलह भेद**—

ग्रन्थकार विस्तार भय से यहाँ यथार्थ नाम वाले इन गृहों को अब संक्षेप से कहते हैं । इन्हीं से दूसरे अन्य सोलह प्रकार के गृह निष्पन्न होते हैं । इनका कारण है—शालाओं के पुरोभाग में तिरछे (तिर्यक्) छह धरणी (दारुओं) का संयोजन अर्थात् इनके भेद का यही कारण है ॥ २४-२५ ॥

**हंसं सुलक्षणं सौम्यं जयन्तं भव्यमुत्तमम् ॥ २५ ॥**
**रुचिरं सम्भृतं क्षेममाक्षेमं सुकृतं वृषम् ।**
**उच्छन्नं व्ययमानन्दं सुनन्दं चेति कीर्तितम् ॥ २६ ॥**
**एषामपि यथार्थत्वाद् गुणदोषान् निरूपयेत् ।**

इनके नाम हैं—१. हंस, २. सुलक्षण, ३. सौम्य, ४. जयन्त, ५. भव्य, ६. उत्तम, ७. रुचिर, ८. संभृत, ९. क्षेम, १०. आक्षेम, ११. सुकृत, १२. वृष, १३. उच्छन्न, १४. व्यय, १५. आनन्द और १६. सुनन्द । ये सोलह भेद परिकीर्तित किये गये हैं । यथा नाम तथा गुण के अनुसार ही इन सभी के गुण एवं दोषों का आकलन कर लेना चाहिये ॥ २५-२७ ॥

**शालामध्यविन्यस्तैः षड्दारुभिरेतेभ्य उत्पन्नानां षोडशगृहभेदानां संज्ञा**

**शालामध्ये च तिर्यक्स्थं षड्दारु विनिवेशयेत् ॥ २७ ॥**
**विहाय मर्मणां वेधानमीषामेव वेश्मनाम् ।**
**षोडशैव परेऽपि स्युर्भेदास्तांश्च यथाक्रमम् ॥ २८ ॥**

**कथयामः समासेन यथार्थैरिव नामभिः ।**
**अलङ्कृतमलङ्कारं रमणं पूर्णमम्बरम् ॥ २९ ॥**
**पुण्यं सुगर्भं कलशं दुर्गतं रिक्तमीप्सितम् ।**
**सुभद्रं वन्दितं दीनं विभवं सर्वकामदम् ॥ ३० ॥**

**शाला के मध्य भाग में विन्यस्त-षड्दारु-कल्पना से अन्य भेद**—शालाओं के मध्य में टेढ़े-टेढ़े छह दारुओं का विनिवेशन कर ले और इस विनिवेशन में मर्मों का वेध छोड़ दे तो इन वेश्मों के भी दूसरे और सोलह भेद होते हैं जिनको क्रमशः संक्षेप में कहते हैं । उनके भी जैसे नाम हैं वैसे ही उनके गुण और दोष का आकलन कर लेना चाहिए । इनकी संज्ञाएँ इस प्रकार हैं—१. अलंकृत, २. अलङ्कार, ३. रमण, ४. पूर्ण, ५. अम्बर, ६. पुण्य, ७. सुगर्भ, ८. कलश, ९. दुर्गत, १०. रिक्त, ११. ईप्सित, १२. सुभद्र, १३. वन्दित, १४. दीन, १५. विभव तथा १६. सर्वकामद ॥ २७-३० ॥

**शालान्तविन्यस्तषड्दार्वादिभिः प्रकारान्तरमापन्नानामपरेषां षोडशवेश्मनां संज्ञाः**

**शालान्तःस्थितषड्दारुपश्चादपवरैः कृतैः ।**
**एभ्योऽपरेऽपि निर्दिष्टा भेदाः षोडशवेश्मनाम् ॥ ३१ ॥**
**प्रभवं भाविकं क्रीडं तिलकं क्रीडनं सुखम् ।**
**यशोदं कुमुदं कालं भासुरं सर्वभूषणम् ॥ ३२ ॥**
**वसुधारं धनहरं कुपितं वित्तवृद्धिदम् ।**
**कुलोदयं च विज्ञेयं गुणदोषास्तु पूर्ववत् ॥ ३३ ॥**

**शालान्त भाग में विन्यस्त-षड्दारु-कल्पना से अन्य भेद—**

शालाओं के अन्त में स्थित षड्दारुओं के पश्चात् अपवरकों के निर्माण से वेश्मों के अन्य सोलह भेद निर्दिष्ट हुए हैं । वे हैं—१. प्रभव, २. भाविक, ३. क्रीड़, ४. तिलक, ५. क्रीडन, ६. सुख, ७. यशोद, ८. कुमुद, ९. काल, १०. भासुर, ११. सर्वभूषण, १२. वसुधार, १३. धनहर, १४. कुपित, १५. वित्तवृद्धिद और १६. कुलोदय । इनके भी गुण दोष पहले के समान ही जान लेना चाहिए ॥ ३१-३३॥

**अनन्तरोक्तेषु गृहेषु प्रत्येकं चतुर्दिक्षु अलिन्दपरिष्कारेण प्रसूतानां षोडशगृहाणां संज्ञाः**

**अनन्तरमिहोक्तानि यानि वेश्मानि षोडश ।**
**प्रत्येकं तान्यलिन्देन परि(कु?ष्कु)र्याच्चतुर्दिशम्॥ ३४ ॥**

**तद्भेदेभ्यः प्रसूतानि कथयामो विधानतः ।**
**चूडामणिं प्रभद्रं च क्षेमं शेखरमद्भुतम् ॥ ३५ ॥**
**विकाशं भूतिदं हृष्टं विरोधं कालपाशकम् ।**
**निरामयं सुशीलं च रौद्रं मोघं मनोरथम् ॥ ३६ ॥**
**सुभद्रं चेति सदनं संज्ञाभिरुपलक्षयेत् ।**

**चारों दिशाओं में अलिन्द के परिष्कार से निष्पन्न सोलह गृह के नाम—**

यहाँ पर अनन्तर कहे गये वेश्मों के जो सोलह भेद हैं उनमें प्रत्येक में चारों दिशाओं में अलिन्दों का विनियोजन करना चाहिये । उनके भेदों से निष्पन्न हुए भेदों का विधानपूर्वक अब वर्णन करते हैं । वे भेद हैं—१. चूड़ामणि, २. प्रभद्र, ३. क्षेम, ४. शेखर, ५. अद्भुत, ६. विकाश, ७. भूतिद, ८. हृष्ट, ९. विरोध, १०. कालपाशक, ११. निरामय, १२. सुशील, १३. रौद्र, १४. मोघ, १५. मनोरथ और १६. सुभद्र । इन संज्ञाओं से ही घरों के गुणों का उपलक्षण प्राप्त करें ॥ ३४-३६ ॥

**एवं भेदप्रभेदैर्वर्धितानामेकशालानामाहत्य संख्याकथनम्**

**वेश्मनामेकशालानां शतं स्याच्चतुरुत्तरम् ॥ ३७ ॥**
**कथितं तच्च संस्थानैर्नामभिश्च यथाक्रमम् ।**

**एकशाल भवनों की भेद-प्रभेद से वर्द्धित कुल संख्या**—एक शाला वाले भवनों के इस प्रकार कुल एक सौ चार भेद हुए और उनके अलग-अलग संस्थानों एवं उनकी संज्ञाओं का भी क्रमशः वर्णन हो चुका ॥ ३७-३८ ॥

**सिद्धार्थस्थितयोर्हस्तिनीमहिष्याख्ययोः दण्डगृहस्थितयोर्गावीछगल्याख्ययोश्च शालयोर्यथायथं मेलनेनात्र सम्भूतानां चतुर्णां गृहविशेषाणां संज्ञाः फलं च**

**हस्तिनी महिषी गावी छागली च यथाक्रमम् ॥ ३८ ॥**
**तद्द्वयेन द्विपूर्वाणि ब्रूमो नामानि वेश्मनाम् ।**
**द्विहंसकं द्विचक्राह्वं द्विसारसमथापरम् ॥ ३९ ॥**
**द्विकोकिलं बुधैः ख्यातं हस्तिन्यादेः क्रमाद् गृहम् ।**
**त्रीण्यायुःपशुधान्यानां क्रमादाद्यानि वृद्धये ।**
**एतेषामेव नाशाय भवेद् वेश्म द्विकोकिलम् ॥ ४० ॥**

**सिद्धार्थ स्थित हस्तिनी-महिषी नामक एकशाल गृह और दण्डगृहस्थित**

**गावी छागली नामक एकशाल गृह के मेलन से निष्पन्न चार गृह विशेषों के नाम और उनके फल—**

अब हस्तिनी, महिषी, गावी एवं छागली इनके क्रम से द्विपूर्व वाले वेश्मों के नामों को कहते हैं—द्वि-हंसक, द्वि-चक्र, द्वि-सारस तथा द्वि-कोकिलक। ये पण्डितों के द्वारा हस्तिनी आदि के क्रमशः संयोजन से निष्पन्न एकशाल भवन बताये गये हैं ॥ ३८-४० ॥

पहले के तीन गृहों का फल आयु, पशु और धान्य की वृद्धि के लिये कहा गया है और इन्हीं के नाश करने के लिये चौथा भेद द्वि-कोकिल कहा गया है ॥ ४० ॥

**इत्येकशालभवनान्युदितान्यलिन्द-**
**षड्दारुकापवरकावरणादिभेदैः ।**
**संज्ञा च लक्षणफलैः करिणीमुखाभिः**
**शालाभिरेवमपराणि च युग्मजानि ॥ ४१ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे एकशाललक्षणफलद्विहंसकादिलक्षणफलानि नाम त्रयोविंशोऽध्यायः ॥ २३ ॥**

...❀...

इस प्रकार से अलिन्द, षड्दारु, अपवरक एवं आवरण आदि भेद से एक शाला वाले भवनों के प्रकारों का निरूपण किया गया और उनके लक्षणों एवं फलों के कथन के साथ इनकी संज्ञा भी बताई गई। इसी के साथ साथ करिणी आदि शालाओं के दूसरे जोड़े (युग्मज गृह) भी वर्णित किये गये हैं ॥ ४१ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'एकशाललक्षणफलद्विहंसकादिलक्षण-फलानि' नामक तेइसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ २३ ॥**



# समीक्षात्मक टिप्पणी

## एकशालगृह के भेद (२३.६-७)

एकशाल गृह के भेदों के विषय में अन्य वास्तुग्रन्थों में भी उल्लेख प्राप्त होता है किन्तु पहले समराङ्गणसूत्रधार को समझना आवश्यक है जो इस प्रकार है—

१. **समराङ्गणसूत्रधार** (अ. २३) में अलिन्द के संयोग से एकशाल गृह के सोलह भेद बनते हैं—

ध्रुवं धन्यं जयं नन्दं खरं कान्तं मनोरमम् ।
सुमुखं दुर्मुखं क्रूरं सुपक्षं धनदं क्षयम् ॥
आक्रन्दं विपुलं चैव विजयं गृहमुत्तमम् । (२३.६-७)

'धन्य' के स्थान पर कुछ वास्तुग्रन्थों में (यथा—वास्तुसौख्यम्) धान्य पाठ भी उपलब्ध होता है ।

२. अलिन्द के संयोग से अन्य भेद का भी वर्णन प्राप्त होता है । धन्य गृह के मुख भाग में यदि द्वितीय अलिन्द भी विनियोजित हो तो उसकी संज्ञा 'रम्य' होती है, नन्द की संज्ञा 'श्रीधर', कान्त की संज्ञा 'मुदित', सुमुख की संज्ञा 'वर्धमान', क्रूर की संज्ञा 'कराल', धनद की संज्ञा 'सुनाम', आक्रन्द की संज्ञा 'ध्वांक्ष' तथा विजय की संज्ञा 'समृद्ध' (समरा०, २३.१२-१९) हो जाती है ।

३. ध्रुव आदि की एकशाल गृहों में षड्दारु का यदि प्रयोग किया जाय तो उनकी संज्ञा इस प्रकार हो जाती है—

सुन्दरं वरदं भद्रं प्रमोदं विमुखं शिवम् ।
सर्वलाभं विशालं च विलक्षमशुभं ध्वजम् ॥
उद्द्योतं भीषणं शून्यमजितं कुलनन्दनम् ।
(समरा. २३.२२-२३)

४. उपर्युक्त ध्रुव आदि भवनों के सामने यदि षड्दारु (पाटन) का नियोजन किया जाय तो उनकी हंस आदि संज्ञा होती है—

हंसं सुलक्षणं सौम्यं जयन्तं भव्यमुत्तमम् ।
रुचिरं सम्भृतं क्षेममाक्षेमं सुकृतं वृषम् ।
उच्छन्नं व्ययमानन्दं सुनन्दं चेति कीर्तितम् ॥
(समरा. २३.२५-२६)

५. एक शाला के मध्य में षड्दारु (पाटन) के तिरछा लगाने से उनके भेद इस प्रकार होते हैं—

अलङ्कृतमलङ्कारं रमणं पूर्णमम्बरम् ॥
पुण्यं सुगर्भं कलशं दुर्गतं रिक्तमीप्सितम् ।
सुभद्रं वन्दितं दीनं विभवं सर्वकामदम् ॥

(समरा. २३.२९-३०)

६. एक शाला में षड्दारु के साथ यदि अपवरक का प्रयोग किया जाय तो उनके भेद इस प्रकार होते हैं—

प्रभवं भाविकं क्रीडं तिलकं क्रीडनं सुखम् ।
यशोदं कुमुदं कालं भासुरं सर्वभूषणम् ॥
वसुधारं धनहरं कुपितं वित्तवृद्धिदम् ।
कुलोदयं च विज्ञेयं गुणदोषास्तु पूर्ववत् ॥

(समरा. २३.३२-३३)

७. ध्रुवादि सोलह गृहों के चारो ओर यदि अलिन्द निर्मित हों तो उनकी संज्ञा इस प्रकार होती है—

चूडामणिं प्रभद्रं च क्षेमं शेखरमद्भुतम् ।
विकाशं भूतिदं हृष्टं विरोधं कालपाशकम् ॥
निरामयं सुशीलं च रौद्रं मोघं मनोरथम् ।
सुभद्रं चेति सदनं संज्ञाभिरुपलक्षयेत् ॥

(समरा. २३.३५-३६)

८. शाला के मुख के अनुसार उनकी संज्ञा इस प्रकार होती है—

हस्तिनी महषी गावी छागली च यथाक्रमम् ।

(समरा. २३.३८)

दक्षिण दिशा की शाला (उत्तरमुख) हस्तिनी कही जाती है, पश्चिम दिशा की शाला महिषी, उत्तर दिशा की शाला गावी एवं पूर्व दिशा की शाला छागली या छागी कही जाती है ।

इस प्रकार एकशाल गृह के एक सौ चार भेद कहे गये हैं—

वेश्मनामेकशालानां शतं स्याच्चतुरुत्तरम् ।

(समरा. २३.३७)

## एकशाल गृहों के भेद (२३.३७)

१. **वास्तुसौख्यम्** ग्रन्थ में ब्रह्मशम्भु ऋषि ने इसके एक सौ आठ भेद कहे हैं—

वेश्मनामेकशालानां भवेदष्टोत्तरं शतम् ।

(वास्तुसौख्यम् २२७)

२. **वास्तुराजवल्लभ** (अ. ६) में भी एकशाल गृहों के लक्षण एवं भेद विस्तार से प्राप्त होते हैं ।

३. **वास्तुसौख्यम्** (श्लोक २४३-२६४) में इन्हीं ध्रुवादि एकशाल भवनों के भेद उनके तल तथा द्वारों के अनुसार भी प्राप्त होते हैं ।

४. **मयमतम् (२६.१२-१६)** के अनुसार—एक शाल भवन इस प्रकार वर्णित हैं—

एकशाला प्रशस्ता स्यात् स्त्रीणां रूपोपजीविनाम् ।
दण्डकं मौलिकं चैव स्वस्तिकं च चतुर्मुखम् ॥
सामान्यं तैतलादीनां पूर्वोक्तानां चतुष्टयम् ।
एकादिबहुभूम्यन्तं खण्डहर्म्यादिमण्डितम् ॥
अर्पितानर्पितं चैव प्रासादवदलङ्कृतम् ।
पुरतः पार्श्वयोः पृष्ठेऽलिन्द्रं कुर्यात् समन्ततः ॥
नराणां च सुराणां च पाषण्ड्याश्रमिणां तथा ।
पुरतो मण्डपोपेतं पृष्ठे पार्श्वे तु भद्रकम् ॥
मध्ये वासं तु देवानां पार्श्वे वासो भवेन्नृणाम् ।

१. दण्डक, २. मौलिक, ३. स्वस्तिक एवं ४. चतुर्मुख संज्ञक चार प्रकार के एकशाल भवन देवों एवं पूर्व वर्णित जनों के लिये अनुकूल होते हैं । ये भवन एक तल से प्रारम्भ होकर अनेक तलपर्यन्त तथा खण्ड एवं हर्म्य आदि अवयवों से सुसज्जित होते हैं । ये अर्पित एवं अनर्पित दो प्रकार के कहे गए हैं तथा इनकी साज-सज्जा देवालय के समान होती है । इनके सामने दोनों पार्श्वों एवं पृष्ठभाग में चारो ओर अलिन्द्र (गलियारे, बार्जे) का निर्माण करना चाहिये । मनुष्यों, देवों और पाखण्डियों एवं आश्रमवासियों के भवन के सामने मण्डप तथा पीठ एवं दोनों पार्श्वों में भद्र (पोर्च) का निर्माण करना चाहिये । मध्य भाग में देवों का तथा पार्श्व भाग में मनुष्यों का आवास होना चाहिये ।

## रम्याष्टक के लक्षण (२३.१२-१९)

१. **वास्तुमण्डन** में रम्याष्टक के लक्षण इस प्रकार बताए गए हैं—

धान्याद्येकैकान्तरोष्ट मुखालिन्दयुतानि चेत् ।
तदा रम्यं श्रीधरं च मुदितं वर्द्धमानकम् ।। ४३ ।।
करालभं सुनाभं च ध्वाङ्क्षं समृद्धमित्यपि ।

पूर्वानुसार धान्यादि एक-एक के अन्तराल से आठ गृहों को लेकर प्रत्येक के आगे एक-एक अलिन्द बढ़ाने से रम्याष्टक गृह बनते हैं अर्थात् आठ गृह धान्य, नन्द, कान्त, सुमुख, क्रूर, धनद, आक्रान्त एवं विजय के मुँह पर एक-एक अलिन्द बनाया जाये तो रम्य, श्रीधर, मुदित, वर्धमान, कराल, सुनाभ, ध्वाङ्क्ष तथा समृद्ध नामक एकशाल गृह बनते हैं ।

२. **वास्तुराजवल्लभ** में इस प्रकार कहा गया है—

धान्यादितोऽष्टौ विजयान्तकं हि
त्वलिन्दयुग्मं मुखतो विदध्यात् ।
रम्यं श्रीधरमौदिते च परतस्स्याद् धर्ममानं गृहम् ।
करालं च सुनाभमेव तदनु ध्वांक्षं समृद्धं तथा ।।

(वास्तुराजवल्लभ. ६.५-६, तुलनीय अपराजितपृच्छा ९१.१६-१७)

## चूड़ामणि आदि १६ एकशाल गृह के लक्षण (२३.३४-३७)

**१. वास्तुमण्डन** (६.५२-५४) में चूड़ामणि आदि १६ एकशाल गृह के लक्षण इस प्रकार बताए गए हैं—

अपवर्कों द्विषट्दारु मुखेऽलिन्दो यदा भवेत् ।
चूडामणिं प्रभद्रं च क्षेमं शेखरमुच्छ्रितम् ।। ५२ ।।
विशालं भूतिदं हृष्टं विरोधं कालपाशतः ।
निरामयं सुशीलं च रौद्रं मेघं मनोरमम् ।। ५३ ।।
सुभद्रं चैकशालानामिति वेदोत्तरं शतम् ।। ५४ ।।

एकशाल गृहों में अब चूड़ामणि आदि सोलह गृहों की विधि बतलाई जा रही है । पूर्वोक्त प्रभवादि गृह यदि अपवरक, द्विषड्दारु और मुख पर अलिन्द सहित हों, तो उनकी संज्ञाएँ क्रमशः १. चूडामणि, २. प्रभद्र, ३. क्षेम, ४. शेखर, ५. उच्छ्रित, ६. विशाल, ७. भूतिद, ८. हृष्ट, ९. विरोध, १०. कालपाश, ११.

निरामय, १२. सुशील, १३. रौद्र, १४. मेघ, १५. मनोरम और १६. सुभद्र हो जाती है। इस प्रकार ये एक शाल के गृह भेद हुए जिनकी संख्या कुल १०४ होती है अर्थात् ध्रुवादि १६, रम्यादि ८, सुन्दरादि १६, हंसादि १६, अलङ्कृतादि १६, प्रभवादि १६ तथा चूडामण्यादि १६ गृह होते हैं।

२. चूडामण्यादि सोलह गृहों का विवरण **वास्तुराजवल्लभ** में भी बताया गया है—

सर्वे मुखमुखालिन्दसमन्विताश्च दारुद्विषट्कं ह्यपवर्गमध्ये।
ततश्च चूडामणिकं प्रभद्रं क्षेमं तथा शेखरमुच्छ्रितञ्च॥
विशालं संज्ञं त्वथ भूतिदं च हृष्टं विराधं कथितं क्रमेण।
तत्कालपाशं हि निरामयं च सुशालरौद्रे मुनिसम्मतं च॥
मेघं गृहं चैव मनोरमं च सुभद्रसंज्ञं कथिता च संख्या।
इत्येकशालानि गृहाणि विद्याच्छतं च चत्वार्यधिकं ध्रुवादेः॥

(वास्तुराजवल्लभ ६.१३-१५)

३. **अपराजितपृच्छा** में इस प्रकार कहा गया है—

अनन्तरं मया यानि गृहाण्युक्तानि षोडश।
चतुर्दिशमलिन्देन परिष्कुर्यात् पृथक्-पृथक्॥
भेदजानि तु यानीह शृणु तानि समासतः।
चूडामणिं प्रभद्रं क्षेमं शेखरमुद्भवम्॥
निरामयं सुलाभं च रौद्रं मेघं मनोरमम्।
सुभद्रं चेति गेहानां गुणाद्यमभिधानकम्॥
गृहाणामेकशालानां शतं स्याच्चतुरुत्तरम्।
एकैकोत्पन्नभेदाश्च शतैश्च दशभिस्ततः॥

(अपराजित. ९१.३१-३४)

## ध्रुवादि १६ एकशाल गृह के लक्षण (२३.७-१२)

**वास्तुमण्डन** (६.४१-४२) में ध्रुवादि १६ एकशाल गृह के लक्षण इस प्रकार बताए गए हैं—

ध्रुवं धान्यं जयं नन्दं खरं कान्तं मनोरमम्।
सुमुखं दुर्मुखं क्रूरं सुपक्षं धनदं क्षयम्॥ ४१ ॥
आक्रन्दं विपुलं चैव विजयं नामवत्फलम्।
खरं चतुर्मुखं क्रूरं क्षयमाऽऽक्रन्दकं त्यजेत्॥ ४२ ॥

अब एकशाल सोलह गृहों का नामोल्लेख किया जा रहा है—ध्रुव, धान्य,

जय, खर, कान्त, मनोरम, सुमुख (सुवक्त्र), दुर्मुख, क्रूर, सुपक्ष, धनद, क्षय, आक्रन्द, विपुल तथा विजय । इन सभी के फल नामानुसार ही होते हैं । इनमें खर, दुर्मुख, क्रूर, क्षय व आक्रन्द को त्याग दिया जाना चाहिए ।

वास्तुराजवल्लभादि ग्रन्थों में प्रस्तार क्रमानुसार इनका लक्षण इस प्रकार बताया गया है—ध्रुव (ऽऽऽऽ) गृह में कोई भी अलिन्द (बरामदा) नहीं होगा । धान्य (।ऽऽऽ) में पूर्व की ओर बरामदा होता है । जय (ऽ।ऽऽ) में दक्षिण की ओर बरामदा होता है । नन्द (।।ऽऽ) में पूर्व एवं दक्षिण में, खर (ऽऽ।।) में पश्चिम एवं उत्तर में, कान्त (।ऽ।ऽ) में पूर्व एवं पश्चिम में, मनोरम (ऽ।।ऽ) में दक्षिण एवं पश्चिम में, सुमुख (।।।ऽ) में पूर्व, दक्षिण एवं पशिचम में, दुर्मुख (ऽऽऽ।) में उत्तर में, क्रूर (।ऽऽ।) में पूर्व एवं उत्तर में, विपक्ष में (ऽ।ऽ।) उत्तर एवं दक्षिण में, धनद (।।ऽ।) में पूर्व, दक्षिण एवं उत्तर में, क्षय में (ऽऽ।।) पश्चिम एवं उत्तर में, आक्रन्द में (।ऽ।।) पूर्व, पश्चिम तथा उत्तर में, विपुल में (ऽ।।।) दक्षिण, पश्चिम एवं उत्तर में तथा विजय (।।।।) में सभी दिशाओं में बरामदा होता है ।

### **सुन्दरादि १६ एकशाल गृह के लक्षण** (२३.२०-२३)

**१. वास्तुमण्डन** (६.४४-४६) में सुन्दरादि १६ एकशाल गृह के लक्षण इस प्रकार बताए गए हैं—

ध्रुवादि मध्ये षड्दारौ सुन्दरादीनि षोडशः ।। ४४ ।।
सुन्दरं वरदं भद्रं प्रमोदं विमुखं शिवम् ।
सर्वलाभं विशालं च विलक्षामशुभं ध्वजम् ।। ४५ ।।
उद्योतं भीषणं शून्यमजितं कुलनन्दनम् ।
प्रशस्तान्यप्रशस्तानि यथानामफलानि च ।। ४६ ।।

ध्रुवादि गृहों के मध्य यदि षड्दारु (स्तम्भ एवं पाटन) बना दिए जाएँ तो उनकी संज्ञा सुन्दरादि हो जाती है ।

**२. वास्तुसार** (९६-९७) में इनके नाम इस प्रकार बताए गए हैं—सुन्दर, वरद, भद्र, प्रमोद, प्रमुख, शिव, सर्वलाभ, विशाल, विलक्ष, अशुभ, ध्वज, उद्योत या उदित, भीषण, शून्य, अजित एवं कुलनन्दन । ये सुन्दर आदि सोलह गृह हैं—

ध्रुवादि मध्ये षड्दारु षोडशैव पुनर्गृहाः ।
सुन्दरं वरदं भद्रं प्रमोदं प्रमुखं शिवम् ।।
सर्वलाभं विशालं च विलक्षऽमशुभं ध्वजम् ।

उद्योतं भीषणं शून्यमजितं कुलनन्दनम् ॥

३. **वास्तुराजवल्लभ** (६.६-७) में कहा गया है—

सर्वाणि ध्रुववद् भवन्ति नियतं षड्दारुकैः सुन्दरम् ।
प्रोक्तं तद् वरदं च भद्रप्रमुदेऽथो वैमुख्याख्यं शिवम् ॥
तत्सर्वलाभं च विशालसंज्ञं तथा विलक्षं त्वशुभं ध्वजं च ।
उद्योतसञ्ज्ञं त्वथ भीषणं च सौम्याजिते स्तः कुलनन्दनं च ॥

**हस्तिन्यादि द्विशाल गृह के लक्षण** (२३.३८-४१)

**वास्तुमण्डन** (६.६०-६१) में हस्तिन्यादि द्विशाल गृह के लक्षण इस प्रकार बताए गए हैं—

हस्तिनी महिषी गावी छागली च यथाक्रमम् ।
युग्मानि हंसविमलं सञ्ज्ञयाष्टाष्ट निर्दिशेत् ॥ ६० ॥
द्विहंसं च द्विचक्राह्वं द्विसारसमथापि वा ।
द्विकोकिलमिति प्रोक्तं हस्तिन्यादि क्रमेण तु ॥ ६१ ॥

इनमें हस्तिनी, महिषी, गावी और छागली शालाओं के विषय में क्रमानुसार बताया जा रहा है । इनमें हस्तिन्यादि क्रम से प्रत्येक शाला के युग्म या दो-दो भेद हंस, विमलादि संज्ञक हैं, जिनके अनुसार इनके आठ-आठ भेद होते हैं । यथा द्वि-हंस, द्विचक्र, द्विसारस तथा द्विकोकिल ।

**अपराजितपृच्छा** (९३.१-२) में भी इसी प्रकार का वर्णन है—

हस्तिनी महिषी गावी छागली च यथाक्रमम् ।
युग्मतः कथिताश्चैता हंसाया विमला गृहाः ॥
द्विहंसं च द्विचक्रं च द्विसारसमथापि वा ।
द्विकोकिलमिति तथा हस्तिन्याद्या प्रकीर्तिताः ॥ ६१ ॥



# अथ चतुर्विंशोऽध्यायः

## * द्वारपीठभित्तिमानादिकम्[1] *

## (The Definition and Measurement of the Door, Pedestal and Wall)

हलकाख्यानां पञ्चदशगृहाणां संज्ञाविशेषा लक्षणं फलं च

**कर्णशालानिबद्धानि मण्डपैरन्तरस्थितैः ।**
**असम्बाधाजिराणि स्युर्हलानि दश पञ्च च ॥ १ ॥**

**हलक आदि पन्द्रह गृहों के नाम और लक्षण एवं फल**—कर्णशालाओं से संयुक्त रूप से बीच में स्थित मण्डपों से खुले हुए (= असम्बाध) आङ्गन (= अजिर) वाले पन्द्रह प्रकार के 'हलक' निर्मित होते हैं ॥ १ ॥

**ईश्वरं वृषभं चन्द्रं रोगं पापं भयप्रदम् ।**
**नन्दनं खादकं ध्वाङ्क्षं विकृतं विलयं क्षयम् ॥ २ ॥**
**याम्यं च विपरीतं च भद्रकं चेति नामतः ।**
**एतानि हलकाख्यानि विद्याद् गेहानि यत्नतः ॥ ३ ॥**

१. ईश्वर, २. वृषभ, ३. चन्द्र, ४. रोग, ५. पाप, ६. भयप्रद, ७. नन्दन, ८. खादक, ९. ध्वाङ्क्ष, १०. विकृत, ११. विलय, १२. क्षय, १३. याम्य, १४. विपरीत तथा १५. भद्रक । इन हलक नामक गृहों को यत्नपूर्वक वास्तुशास्त्री को ज्ञात कर लेना चाहिए ॥ २-३ ॥

**अग्निरक्षोऽनिलेशानकोणगानां यथाक्रमम् ।**
**एकद्वित्रिचतुर्थाख्या हलकानां प्रकल्पयेत् ॥ ४ ॥**
**अनेन क्रमयोगेन च्छन्दोभेदा भवन्ति च ।**

आग्नेय कोण, नैर्ऋत्य कोण एवं वायव्य कोण तथा ऐशान्य कोणों के हलकों की क्रमशः एक, दो, तीन और चार नाम से कल्पना करनी चाहिये और इसी क्रमयोग से आङ्गन में छन्दोभेद भी उत्पन्न होता है ॥ ४-५ ॥

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह ऊनतीसवाँ अध्याय है ।

**तत्राद्येनेश्वरं नाम हलकेन गृहं भवेत् ॥ ५ ॥**
**सर्वलक्षणसंयुक्तं सर्ववृद्धिफलप्रदम् ।**

१. उनमें पहले हलक से ईश्वर नाम का गृह होता है । वह ईश्वर नाम का गृह सब लक्षणों से युक्त एवं सब प्रकार की वृद्धियों तथा सभी फलों को देने वाला कहा गया है ॥ ५-६ ॥

**वृषभं च द्वितीयेन पुत्रदारविवर्धनम् ॥ ६ ॥**

२. द्वितीय हलक से पुत्र और भार्या का विवर्धन करने वाला भवन वृषभ कहलाता है ॥ ६ ॥

**प्रथमं च द्वितीयं च गृहे तु हलकं यदि ।**
**चन्द्रं वृद्धिकरं नृणां सर्वलक्षणसंयुतम् ॥ ७ ॥**

३. यदि गृह में पहला और दूसरा हलक होता है तो सर्वलक्षण युक्त मनुष्यों के लिये वृद्धिकारक 'चन्द्र' नाम का घर होता है ॥ ७ ॥

**वायव्यं हलकं यत्र रोगं रोगविवर्धनम् ।**

४. जहाँ पर वायव्य कोण का हलक होता है वह रोगों को बढ़ाने वाला 'रोग' नाम का घर होता है ॥ ८ ॥

**प्रथमं च तृतीयं च गृहे तु हलकं यदि ॥ ८ ॥**
**पापं तन्नामतो वास्तु सर्वपापप्रयोजकम् ।**

५. यदि गृह में पहला और तीसरा हलक हो तो उस वास्तु को पाप कहते हैं और वह सब प्रकार के पापों को बढ़ाने वाला होता है ॥ ८-९ ॥

**पितृरोगोक्तकोणाभ्यां भयदं रोगमृत्यवे ॥ ९ ॥**

६. वायव्य कोण और पितृ रोग नामक कोण में से 'भयद' नाम का भवन निष्पन्न होता है जो रोग से मृत्युकारक बताया गया है ॥ ९ ॥

**पितृरोगाग्निकोणेषु नन्दनं गृहमादिशेत् ।**
**सुखमर्थप्रदं शान्तं हलकं परिकीर्तितम् ॥ १० ॥**

७. पितृकोण तथा वायव्य कोण और अग्नि कोणों में 'नन्दन' नाम का गृह कहा गया है । यह घर शान्त, सुखद और अर्थप्रद 'हलक' बताया गया है ॥१०॥

**ईशान्यां तु चतुर्थेन खादकं खादकं गृहम् ।**
**लाङ्गलाद्या यदा शाला ईशान्यां च यदापरा ॥ ११ ॥**
**ध्वाङ्क्षं तन्नामतो वास्तु दरिद्राणां विधीयते ।**

८. चौथे हलक से ईशान कोण में 'खादक' नामक गृह कहा जाता है ।

९. जब लाङ्गलादि शाला के अपर दिशा में दूसरी शाला ईशान दिशा में होती है तो वह 'ध्वांक्ष' नाम से दरिद्रों के लिये बनाया गया वास्तु सम्पन्न होता है ॥ ११-१२ ॥

**द्वितीया च चतुर्थी च शाला लाङ्गलके यदि ॥ १२ ॥**
**विकृतं विकृतावासं प्रवासोऽत्र कुटुम्बिनः ।**

१०. पुनः लाङ्गलक शाला में दूसरी तथा चौथी शाला होवे तो उसको 'विकृत' नाम का विकृतावास कहते हैं । इसमें निवास करने से गृहस्वामी के कुटुम्ब वाला कोई व्यक्ति प्रवास को अवश्य प्राप्त करता है ॥ १२-१३ ॥

**आद्या शाला द्वितीया च चतुर्थी च यदा पुनः ॥ १३ ॥**
**विलयं हानिदं नित्यं गृहं तद् वित्तनाशनम् ।**

११. 'विलय' नामक हलक गृह में पहली, दूसरी और चौथी शाला यदि निर्मित हों तो वह भवन धननाशक तथा गृहस्वामी के लिए हानिप्रद होता है ॥ १३-१४ ॥

**वायव्यं हलकं यस्मिन्नैशान्यां च यदा पुनः ॥ १४ ॥**
**क्षयं क्षयकरं नित्यं हलकेषु गृहं भवेत् ।**

१२. ऐशानी दिशा में जब वायव्य हलक विनिर्मित होता है तो उसकी संज्ञा 'क्षय' होती है और वह गृहस्वामी के लिये क्षयकारक कहा गया है ॥ १४-१५ ॥

**अग्निवायुमहेशानां शाला लाङ्गलके यदि ॥ १५ ॥**
**याम्यं मृत्युकरं नृणां न तत् कुर्यात् कदाचन ।**

१३. यदि हलक में आग्नेय कोण, वायव्य कोण एवं ऐशान्य कोणों में शाला निर्मित हो तो उस हलक गृह की संज्ञा 'याम्य' कही गई है और वह गृह उसमें निवास करने वालों के लिए मृत्युकारक होता है । अतः उसे कभी नहीं बनवाना चाहिये ॥ १५-१६ ॥

**मारुते नैर्ऋतैशान्योः शालाकर्णेषु लाङ्गलम् ॥ १६ ॥**
**विपरीतं व्याधिकरं नृणां नाशकरं तथा ।**

१४. वायव्य, नैर्ऋत्य और ऐशान्य दिशाओं में यदि शाला के कोणों में लाङ्गल हलक होता है तो सब मनुष्यों के लिये नाशकारक और व्याधिकारक होकर 'विपरीत' नाम का घर कहलाता है ॥ १६-१७ ॥

**चतस्रो हलके यत्र प्रादक्षिण्यमुखाः स्थिताः ॥ १७ ॥**
**भद्रकं नाम तद् वास्तु सर्वभद्रप्रयोजकम् ।**

१५. जहाँ पर दक्षिण मुख स्थित चार शालाएँ हलक में होती हैं वहाँ सर्वमङ्गलदायक 'भद्रक' नामक भवन निष्पन्न होता है ॥ १७-१८ ॥

**प्रकृताध्याय एवोपरि वक्ष्यमाणानां विषयाणां संग्रहः**

**द्वारोच्छ्रायं सविस्तारं तलोच्छ्रायं च वेश्मनाम् ॥ १८ ॥**
**पीठस्य च समुत्सेधं भित्तिविस्तारमेव च ।**
**तथा दारुकला चैव या प्रोक्ता गृहकर्मणि ॥ १९ ॥**
**एकशालाविधानं च तेषां नामानि यानि च ।**
**तत् सम्प्रति प्रवक्ष्यामो यथावदनुपूर्वशः ॥ २० ॥**

**प्रकृत अध्याय के विषय**—घरों के दरवाजों की ऊँचाई और विस्तार तथा तल की ऊँचाई और पीठ (पीठ, कुर्सी) का तथा उनकी दीवालों का विस्तार और गृहकर्म में लकड़ी का प्रयोग आदि जो एक शाला भवनों (One Chambered Houses) के विधान हैं एवं उनके जो नाम हैं अब उनका सम्यक् रूप से ठीक-ठीक क्रमशः वर्णन करता हूँ ॥ १८-२० ॥

**पञ्चानां वर्गाधिपानां स्वरूपकथनम्**

**षोडशानां समुदयो विंशतेरपि चापरः ।**
**विंशतेः सचतुष्कायास्तथाष्टाविंशतेरपि ॥ २१ ॥**
**द्वात्रिंशतोऽपरश्चेति पञ्चवर्गाधिपा मताः ।**

**पाँच वर्गाधिपों के स्वरूप**—१. सोलह का समुदाय, २. बीस का समुदाय, ३. चौबीस का समुदाय, ४. अट्ठाईस का समुदाय और ५. बत्तीस का समुदाय—ये पाँच समुदाय वास्तुविदों के द्वारा वर्गाधिप माने गये हैं ॥ २१-२२ ॥

**तत्र सामान्यतो भित्त्यलिन्दपीठद्वारोच्छ्रायादीनां प्रमाणप्रदर्शनम्**

**शालाचतुर्थभागेन भित्तिविस्तार इष्यते ॥ २२ ॥**

**सामान्य रूप से भित्ति, बरामदा (या बार्जा), नींव एवं द्वार की ऊँचाई आदि का विवेचन—**

शाला के आयाम के चतुर्थ भाग से दीवालों के प्रमाण का विस्तार करना उचित माना जाता है ॥ २२ ॥

**वर्गेषु भित्तिलक्ष्मोक्तं षोडशादिषु पञ्चसु ।**
**मर्मपीडा भवेद् यत्र भित्तिस्तम्भतुलादिभिः ॥ २३ ॥**
**कुर्वीत ह्रासं वृद्धिं वा तत्र मर्मव्यथां त्यजेत् ।**
**अतिसंवृतविस्तारं कार्यमुद्दिश्य बुद्धिमान् ॥ २४ ॥**

**भित्तिविवेचन**—षोडश आदि पाँचों वर्गों में दीवालों के चिह्नों को कह दिया गया है और जहाँ पर दीवाल, खम्भे और तुला आदि से मर्म पीडित होता है, उस मर्म (Joints of House) की पीड़ा का त्याग करते हुए वहाँ पर दीवाल की मोटाई में कमी एवं आधिक्य (ह्रास अथवा वृद्धि) ऊह करना चाहिये । इसी प्रकार निर्माण में कार्यवशात् बुद्धिमान् वास्तुविद् जहाँ संक्षेप की आवश्यकता हो वहाँ संक्षेप करे तथा जहाँ विस्तार की आवश्यकता है वहाँ विस्तार करें ॥ २३-२४ ॥

**शालाप्रविष्टं कुर्वीत हीनवास्तुष्वलिन्दकम् ।**
**चतुरस्त्रीकृते क्षेत्रे भूमिभागे समीकृते ॥ २५ ॥**
**उपरिष्टाद् भवेत्पीठं तलादर्धसमुच्छ्रितम् ।**

**द्वार एवं बरामदा का विवेचन**—हीन भवनों में शाला प्रवेशक (द्वार) एवं अलिन्दक (बरामदा) का निर्माण करना चाहिये । भूमि के समस्त भाग को समतल करके चार भागों में उस (ढीग या भिट्ट) को विभाजित करने पर पृथ्वी तल से आधा उठा हुआ ऊपर से नीव (पीठ) निर्मित होता है ॥ २५-२६ ॥

**नियुक्ते तु ततः पीठे वास्तुविस्तारतोऽङ्गुलम् ॥ २६ ॥**
**प्रतिहस्तं समुद्धृत्य सप्तत्या सह योजयेत् ।**
**द्वारोच्छ्रायाः समाख्याता सर्वेषूक्तेषु पञ्चसु ॥ २७ ॥**

तदनन्तर पीठ (= नींव) बना लेने पर प्रस्तावित वास्तुविस्तार से प्रतिहस्त एक अङ्गुल उठाकर (समुद्धत) कर सत्तर के साथ उसकी योजना (= जोड़) करे । इस प्रकार से पाँचों उक्त वर्गों में दरवाजों की ऊँचाईं कही गई है ॥ २६-२७ ॥

**उच्छ्रायार्धेन वैपुल्यमष्टांशेन विवर्जितम् ।**
**द्वारविस्तारपादांशे पट्टविस्तार इष्यते ॥ २८ ॥**
**विस्तारार्धेन बाहुल्यं सार्धं वेद्या(त?स्त)लोपरि ।**
**उत्तरोत्तरवैपुल्यं कुर्याच्छाखावशाद् बुधः ॥ २९ ॥**

**द्वार आदि की ऊँचाई**—आठवें अंश से कम कर ज्ञात हुआ ऊँचाई के आधे चौड़ाई होती है और द्वार के विस्तार के पाद-अंश से ज्ञात हुआ पट्ट विस्तार

उचित होता है । वस्तुतः विस्तार के आधे भाग के नाप के साथ पृथ्वी तल के ऊपर वास्तु का बाहुल्य (= नींव की ऊँचाई) जानना चाहिये और इस तरह शाखा-वश (जैसा बनाना हो) वास्तुशास्त्रियों को उसके आगे और भी गृह विस्तार करना चाहिये ॥ २८-२९ ॥

**वेद्या विस्तारबाहुल्ये विधेये शाखयोरपि ।**
**द्वारविस्तारपादेन मूले स्तम्भस्य विस्तृतिः ॥ ३० ॥**

वेदी के विस्तार बाहुल्य के निर्मित हो जाने पर और दोनों शाखाओं के भी बन जाने पर द्वार-पाद विस्तार के चौथे अंश से नींव (= मूल) में खम्भे का विस्तार (= नाप) कहा गया है ॥ ३० ॥

**दशभागविहीनाग्रे पट्टः स्तम्भेन सम्मितः ।**
**स्तम्भाग्रस्य त्रिभागेन पट्टकोटिर्विधीयते ॥ ३१ ॥**

**पट्ट एवं पट्टकोटि निरूपण**—भूमि के दश भाग से विहीन किन्तु अग्रभाग में स्तम्भों के माप के बराबर 'पट्ट' का प्रमाण कहा गया है और स्तम्भ के अग्रभाग के तीसरे भाग से पट्टकोटि के प्रमाण का विधान किया गया है ॥ ३१ ॥

**हीरग्रहणमायामे स्तम्भाग्रात् तु चतुर्गुणम् ।**
**पट्टान्यान्युद्भवेत् (?)तत्र व्यासबाहुल्ययोस्तथा ॥ ३२ ॥**

**हीरग्रहण**—स्तम्भ के अग्रभाग के चौगुने माप के विस्तार से हीर के माप का ग्रहण होता है और इसी प्रकार व्यास एवं मोटाई आदि के बाहुल्य से अन्य-अन्य पट्टों के प्रमाण की भी उद्भावना करनी चाहिए ॥ ३२ ॥

### तन्त्रकस्य प्रमाणकथनम्

**पट्टकोट्यर्धमुत्सेधादुत्सेधार्धेन निर्गतम् ।**
**तन्त्रकस्य प्रमाणं स्यादिति शास्त्रविदो विदुः ॥ ३३ ॥**

**तन्त्रकविवेचन**—पट्टकोटि के अर्धभाग की ऊँचाई (= उत्सेध) के आधे भाग से ऊपर निकला हुआ 'तन्त्रक' का प्रमाण होता है, यह प्रमाण वास्तुशास्त्रज्ञों ने बताया है ॥ ३३ ॥

**द्रव्याण्युपर्युपर्यस्य परापरविभागतः ।**
**पट्टकोट्यश्चतुर्थेन प्रविभागेन ह्रासयेत् ॥ ३४ ॥**

इस (तन्त्रक) के पर और अपर के विभाग से ऊपर से ऊपर द्रव्यों को 'पट्ट-कोटि' (crowns) के प्रमाण के चौथे भाग से घटा देवे ॥ ३४ ॥

**भद्रनन्दपीठसौरभपुष्कराख्यानां चतुर्णां गृहविशेषाणां लक्षणं फलं च**

१. भद्रगृहलक्षणकथनम्

**पूर्वामुखं गृहं यत्तु द्वारं माहेन्द्रसंयुतम् ।**
**हस्तिनी च भवेच्छाला तद् गृहं भद्रसंज्ञितम् ॥ ३५ ॥**
**भद्रं भद्रकरं भर्तुर्यशोबलविवर्धनम् ।**
**सिध्यन्ति चास्य कार्याणि भद्राख्ये वसतो गृहे ॥ ३६ ॥**

**भद्र-नन्दपीठ-सौरभ एवं पुष्कर नामक चार गृह के लक्षण—**

**१. भद्रगृह का लक्षण**—जो गृह पूर्व द्वार वाला होता है और जिसका द्वार 'महेन्द्र' संयुक्त होता है और जिसकी शाला 'हस्तिनी' होती है उस गृह की 'भद्र' संज्ञा कही गई है । यह भद्र नामक भवन गृहस्वामी का कल्याण करने वाला, उसके यश और बल को बढ़ाने वाला होता है और इस गृह के निवासियों के सभी कार्य सिद्ध होते रहते हैं ॥ ३५-३६ ॥

२. नन्दपीठगृहलक्षणकथनम्

**दक्षिणाभिमुखं वेश्म द्वारं चास्य गृहक्षतम् ।**
**महिषी च भवेच्छाला तद् गृहं नन्दपीठकम् ॥ ३७ ॥**
**नन्दपीठगृहं पुंसां नित्यानन्दकरं स्मृतम् ।**
**सर्वसम्पद्गुणोपेतैर्धनधान्यविवर्धनम् ॥ ३८ ॥**

**२. नन्दपीठगृह का लक्षण**—जिस भवन का मुख दक्षिण की ओर होता है, उसका द्वार 'गृहक्षत' नामक होता है तथा उसकी शाला 'महिषी' होती है, उस घर को नन्दपीठक के नाम से पुकारते हैं । यह नन्दपीठ नाम का भवन गृहस्वामी के लिए नित्य आनन्दकारक कहा गया है । यह समस्त सम्पदाओं एवं गुणों से युक्त और धन-धान्य से समृद्धिकारक बताया गया है ॥ ३७-३८ ॥

३. सौरभगृहलक्षणकथनम्

**वारुण्यभिमुखं सद्म द्वारं च कुसुमाह्वयम् ।**
**गावी चैव भवेच्छाला सौरभं तद्विदुर्बुधाः ॥ ३९ ॥**
**सौरभे नित्यहृष्टत्वं वसतां गृहमेधिनाम् ।**
**सफलं कृषिवाणिज्यं पुत्राश्च वशवर्तिनः ॥ ४० ॥**

**३. सौरभगृह का लक्षण**—पश्चिम की ओर मुख वाला गृह जिसका 'कुसुम' नामक द्वार होता है और जिसकी शाला 'गावी' (= गोमुखी) होती है उसको

वास्तुशास्त्र के ज्ञाता लोग 'सौरभ' के नाम से अभिहित करते हैं । इस 'सौरभ' गृह में निवास करने वाले गृहस्थों को सदैव प्रसन्नता, कार्यों में सफलता, कृषि एवं वाणिज्य में वृद्धि तथा उसके आज्ञाकारी पुत्र होते हैं ॥ ३९-४० ॥

### ४. पुष्करगृहलक्षणकथनम्

**उत्तराभिमुखं धिष्ण्यं द्वारं भल्लाटसंयुतम् ।**
**छागली च भवेच्छाला पुष्कराख्यं तदुच्यते ॥ ४१ ॥**
**शीलवान् नित्यसन्तुष्टः सुहृत्सुजनवत्सलः ।**
**सुभगः पुष्कराख्ये च बहुपुत्रधनान्वितः ॥ ४२ ॥**

**४. पुष्करगृह का लक्षण**—उत्तर की ओर मुख वाला गृह और जिसका द्वार 'भल्लाट' नामक द्वार के प्रकार से संयुत हो तथा जिसकी शाला 'छागली' हो, उसे 'पुष्कर' नाम से पुकारते हैं । इस पुष्कर नामक भवन में रहने वाले व्यक्ति शीलवान्, नित्य-सन्तुष्ट रहने वाले, सुहृदों एवं सुजनों के भक्त वत्सल होते हैं तथा वह गृहस्वामी सौभाग्यशाली, बहु-पुत्र एवं धन से युक्त होता है ॥ ४१-४२ ॥

**भद्रं च नन्दपीठं च सौरभं पुष्करं तथा ।**
**प्रथमार्धे तु वर्गस्य प्रथमस्य प्रयोजयेत् ॥ ४३ ॥**

इस प्रकार भद्र, नन्दपीठ, सौरभ और पुष्कर नामक प्रथम वर्ग के पहले आधे में प्रयुक्त कर गृह निर्माण करे ॥ ४३ ॥

**सर्वभद्रादिकाः सर्वे निवेशा ये प्रकीर्तिताः ।**
**उत्पन्नास्ते विमानेभ्यः पञ्चभ्यः पञ्चपञ्चके ॥ ४४ ॥**

सर्वभद्रादिक जो सभी भवन निवेश पहले बताये गए हैं वे पाँचों विमानों के संयोग से पाँच-पाँच करके उत्पन्न होते हैं ॥ ४४ ॥

**द्वारस्य पीठस्य च मन्दिरेषु**
**भित्तेश्च मानं कथितं क्रमेण ।**
**तथोदिता दारुकलास्तु सम्यक्**
**प्रहीणवास्तोः सकलं च लक्ष्म ॥ ४५ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे द्वारपीठभित्तिमानदारुकलाहीनवास्तुलक्षणं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥**

...❀...

इस प्रकार इस अध्याय में मन्दिरों में द्वार का, पीठ (= नींव) का तथा दीवाल (= भित्ति) का क्रमशः प्रमाण (= माप) विधान किया गया है । उसी प्रकार से लकड़ी के कार्य (= दारुकला) और खूटी आदि (= हीन-वास्तु) का भी लक्षण प्रतिपादित कर दिया गया है ॥ ४५ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-वास्तुशास्त्र के 'द्वारपीठभित्तिमानदारुकलाहीनवास्तुलक्षण' नामक चौबीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ २४ ॥**



## समीक्षात्मक टिप्पणी

### हीरग्रहण एवं तन्त्रक विवेचन (२४.३२-३३)

वास्तुमण्डन में हीरग्रहण एवं तन्त्रक का विवेचन इस प्रकार कहा गया है—

हीरग्रहणमंशेन शुण्डिवेदिविराजितम् ।
स तन्त्रिकसमादांशः पट्टशां त्र्यंशनिर्गता ॥ ८५ ॥

स्तम्भ के अग्रभाग में एकांश विस्तार से हीरग्रहण होता है । इसी प्रकार आठ अंश से (स्तम्भ) वेदी की रचना करें । पादांश या चतुर्थांश तन्त्रक का प्रमाण होता है, जबकि पट्ट का निष्क्रमण तीन अंश होता है ।



# अथ पञ्चविंशोऽध्यायः

## * समस्तगृहाणां सङ्ख्याकथनम्[1] *

## (The Enumeration of the Number of All the Houses)

**वेश्मनां पञ्चशालानां कथ्यन्ते लक्षणान्यथ ।**

**पञ्चशाल भवनों के लक्षण**—अब पाँच शालाओं वाले भवनों के लक्षण कहते हैं ।

**तत्र पञ्चशालानामाहत्य संख्या**

**चतुर्विंशतिसंयुक्तं सहस्रं तानि सङ्ख्यया ॥ १ ॥**

**पञ्चशाल भवनों की कुल संख्या**—उन पाँच शाला वाले भवनों की कुल (= आहत्य) संख्या १०२४ है ॥ १ ॥

**पञ्चशालोत्पत्तिप्रकारश्च**

**गुरूणां दशसंख्यानां प्रस्तारस्य च कल्पनात् ।**
**गृहाणां पञ्चशालानां भेदा लघुविभागतः ॥ २ ॥**

**पञ्चशालभवन की उत्पत्ति एवं उसके प्रकार**—दस संख्या वाले गुरुओं के प्रस्तार की कल्पना करके पाँच शालाओं वाले गृहों के लघु विभाग से होने वाले भेद कहे गये हैं ॥ २ ॥

**पञ्चशालं भवेद् योगाद् गृहयोर्द्वित्रिशालयोः ।**
**यद्वा योगाद् भवेदेतच्चतुःशालैकशालयोः ॥ ३ ॥**

द्विशाल और त्रिशाल गृहों के योग से पञ्चशाल भवन का निर्माण किया जाता है अथवा चतुःशाल और एकशाल गृहों के योग से पञ्चशाल भवन बनाया जाता है ॥३॥

**अष्टानां पञ्चशालानां संज्ञाः**

**चतुर्णामपि वर्णानामिदं सद्म प्रशस्यते ।**
**हिरण्यनाभप्रभृति वर्णानामिह वेश्मनाम् ॥ ४ ॥**
**सिद्धार्थादिसमायोगात्रिष्पद्येत गृहाष्टकम् ।**

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह तीसवाँ अध्याय है ।

**आठ पञ्चशालगृहों के नाम और लक्षण**—यह पञ्चशाल गृह (Five Chambred Houses) ब्राह्मण एवं क्षत्रिय आदि चारों वर्णों के उपयोग के लिये प्रशस्त कहा गया है । चारों वेश्मों के 'हिरण्यनाभ प्रभृति के साथ सिद्धार्थ' आदि के समायोजन से आठ प्रकार के पञ्चशाल भवन निष्पन्न होते हैं ॥ ४-५ ॥

**योगाद् हिरण्यनाभस्य सिद्धार्थेन गृहं भवेत् ॥ ५ ॥**
**हेमकूटाख्यमस्यैव वातेन स्वर्णशेखरम् ।**

१. हिरण्यनाभ के साथ सिद्धार्थ का योग होने पर 'हेमकूट' नामक घर होता है । २. वात के साथ इसी (= हेमकूट) का योग होने पर 'स्वर्णशेखर' नामक गृह होता है ॥ ५-६ ॥

**सुक्षेत्रस्य च सिद्धार्थसंयोगेन श्रियावहम् ॥ ६ ॥**
**तस्यैव यमसूर्येण भवेद् वेश्म महानिधिः ।**

३. सुक्षेत्र का सिद्धार्थ के संयोग होने से 'श्रियावह' नामक घर होता है और ४. उस सुक्षेत्र का यमसूर्य के साथ संयोग होने पर 'महानिधि' नामक भवन का प्रकार कहा गया है ॥ ६-७ ॥

**चुल्ल्यास्तु यमसूर्येण सदादीप्तं प्रजायते ॥ ७ ॥**
**दण्डसंयोगतस्तस्य चित्रभान्वभिधं भवेत् ।**

५. चुल्ली नामक गृह का यमसूर्य के साथ संयोग होने से 'सदादीप्त' नामक गृह उत्पन्न होता है और ६. उस चुल्ली का दण्ड के साथ संयोग होने से 'चित्रभानु' नामक गृह निष्पन्न होता है ॥ ७-८ ॥

**पक्षघ्नस्य तु दण्डेन सदादोषं विनिर्दिशेत् ॥ ८ ॥**
**पक्षघ्नस्यैव वातेन योगान्निर्विघ्नमुच्यते ।**

७. पक्षघ्न का दण्ड के साथ संयोग होने पर 'सदादोष' नामक गृह होता है और ८. पक्षघ्न को ही यदि वात के साथ संयुक्त किया जाय तो वह 'निर्विघ्न' नामक गृह कहा जाता है ॥ ८-९ ॥

### अप्रशस्तसंयोगकथनम्

**न काचचुल्लीसंयोगस्त्रिशालादिषु शस्यते ॥ ९ ॥**
**अन्योऽन्यवीक्ष्यमाणानांभेदास्तेनेह नोदिताः ।**

काच और चुल्ली का संयोग त्रिशाल भवनों में प्रशस्त नहीं माना जाता है इसीलिये यहाँ पर इनके सूक्ष्म भेदों का वर्णन नहीं किया गया है ॥ ९-१० ॥

**प्रकारान्तरेण निष्पन्नानां तेषां संज्ञाः**

**एकशालयु(तै?ते)र्भेदा स्युश्चतुश्शालवेश्मनि ॥ १० ॥**
**चत्वारः पञ्चशालानां ब्रूमस्तेषां च विंशतिः ।**
**यदा भवत्यजा शाला सर्वतोभद्रवेश्मना ॥ ११ ॥**
**सुदर्शनमिति प्राहुः पञ्चशालं तदा गृहम् ।**

**प्रकारान्तर से निष्पन्न उन पञ्चशाला भवनों के नाम**—अब चतुश्शाल भवनों में एकशालों के हस्तिनी आदि चार शालाओं के संयोग से उन पञ्चशाल भवनों के बीस भेद कहते हैं—१. जब सर्वतोभद्र नामक वेश्म की शाला 'अजा' होती है तब उस पञ्चशालाओं वाले भवन को 'सुदर्शन' नाम से अभिहित किया जाता है ॥ १०-१२ ॥

**तदेव करिणीयोगात् सुरूपमिति कथ्यते ॥ १२ ॥**
**सुन्दरं महिषीयोगाद् गावीयोगातु शोभनम् ।**

२. वही सुदर्शन नामक भवन करिणी नामक शाला के योग से 'सुरूप' कहलाता है । ३. उसी सुदर्शन में महिषी नामक गृह का योग करने से 'सुन्दर' नामक गृह निष्पन्न होता है और ४. उसी सुदर्शन में गावी का योग होने पर शोभन कहलाता है ॥ १२-१३ ॥

**वर्धमानस्य चैतासां शालानां योगतः क्रमात् ॥ १३ ॥**
**सुनाभं सुप्रभं योग्यं विनोदं च भवेद् गृहम् ।**

पुनः इन चारों हस्तिनी आदि वर्धमान शालाओं के योग से क्रमशः १. सुनाभ, २. सुप्रभ, ३. योग्य और ४. विनोद नाम के घर सम्पन्न होते हैं ॥ १३-१४ ॥

**नन्द्यावर्तेऽप्येवमेव शालायोगेन जायते ॥ १४ ॥**
**सुखदं नन्दनं नन्दं पुण्डरीकं च मन्दिरम् ।**

नन्द्यावर्त नामक गृह के प्रकार में भी इसी प्रकार से शालाओं की योजना करने पर १. सुखद, २. नन्दन, ३. नन्द एवं ४. पुण्डरीक नामक पञ्चशाल भवन सम्पन्न होते हैं ॥ १४-१५ ॥

**रुचकस्याप्यजादीनां योगेन स्युरनुक्रमात् ॥ १५ ॥**
**नामतो भद्ररुचिररोचिष्णूनि प्रहर्षणम् ।**

रुचक नामक गृह के प्रकार में भी अजादि शालाओं के साथ योग करने पर क्रमशः १. भद्र, २. रुचिर, ३. रोचिष्णु और ४. प्रहर्षण नाम से पञ्चशाल भवन निष्पन्न होते हैं ॥ १५-१६ ॥

स्वस्तिकेऽप्यनया युक्त्या भवेद् गृहचतुष्टयम् ॥ १६ ॥
घोषं सुघोषणं निन्दिघोषं श्रीपद्ममेव च ।
विंशतिः सर्वतोभद्रप्रभृत्यालययोगतः ॥ १७ ॥

स्वस्तिक में भी इसी युक्ति से चार प्रकार के घर निष्पन्न होते हैं । वे हैं—१. घोष, २. सुघोषण, ३. निन्दिघोष और ४. श्रीपद्म । इस प्रकार सर्वतोभद्र प्रभृति शालाओं के योग से पञ्चशाल भवनों के बीस भेद निष्पन्न होते हैं ॥ १६-१७ ॥

### विभद्रादिदशभद्रान्तानां तेषां प्रत्येकं संख्या

जातानि पञ्चशालानि योग्यानि पृथिवीभुजाम् ।
पूर्वोक्तैरष्टभिः सार्धं स्यादष्टाविंशतिर्गृहैः ॥ १८ ॥

**विभद्रादि दस भद्रों की संख्या**—राजाओं के योग्य पञ्च शाल भवनों के पूर्वोक्त आठ प्रकार के भवनों के साथ युक्त करने पर उसके अट्ठाईस भेद निष्पन्न होते हैं ॥ १८ ॥

### पञ्चशालानां मूषाभेदक्रमकथनम्

कथ्यते पञ्चशालानां मूषाभेदक्रमोऽधुना ।
विभद्रमेकं तत्रैकभद्राणि दशसंख्यया ॥ १९ ॥
द्विभद्राणि पुनः पञ्चचत्वारिंशत् प्रचक्षते ।
त्रिभद्राणां शतं विंशत्युत्तरं द्वे दशोत्तरे ॥ २० ॥
चतुर्भद्रगृहाणां तु द्विपञ्चाशच्छतद्वयम् ।
गृहाणां पञ्चभद्राणां षड्भद्राणां दशोत्तरे ॥ २१ ॥
द्वे शते सप्तभद्राणां स्याद् विंशत्युत्तरं शतम् ।
गृहाणामष्टभद्राणां चत्वारिंशच्च पञ्च च ॥ २२ ॥
दश स्युर्नवभद्राणि तथैकं दशभद्रकम् ।

इन अट्ठाईस पञ्चशाल गृहों के मध्य में जिस किसी एक का मूषा-भेद जितने रूप के गृहभेदों को पैदा करता है, उनका क्रम अब कहते हैं—

वहाँ पर विभद्र एक और एक भद्राओं वाले दस तथा दो भद्राओं वाले पैंतालीस, तीन भद्राओं के एक सौ बीस, चार भद्राओं के दो सौ दस, पाँच भद्राओं वाले घरों के दो सौ बावन, षड्भद्राओं के दो सौ दस, सप्तभद्राओं के एक सौ बीस और अष्टभद्रों के पैंतालिस, नवभद्रों के दस और दस भद्राओं के केवल एक भेद होते हैं ॥ १९-२३ ॥

**एवं सहस्त्रमेकं स्याद् विंशतिश्च चतुर्युता ॥ २३ ॥**
**गृहाणां पञ्चशालानां मूषावहनसङ्ख्यया ।**

इस प्रकार से मूषा वहन संख्या के भेद से पञ्चशाल भवनों के एक हजार चौबीस (१०२४) भेद निष्पन्न होते हैं ॥ २३-२४ ॥

**विमर्श—**

| | | |
|---|---|---|
| विभद्र | = | ०१ |
| एकभद्र | = | १० |
| द्विभद्र | = | ४५ |
| त्रिभद्र | = | १२० |
| चतुर्भद्र | = | २१० |
| पञ्चभद्र | = | २५२ |
| षड्भद्र | = | २१० |
| सप्तभद्र | = | १२० |
| अष्टभद्र | = | ४५ |
| नवभद्र | = | १० |
| दसभद्र | = | १ |
| कुलयोग | | १०२४ |

यहाँ कुल ध्यान देने योग्य है कि षड्भद्र से लेकर दस भद्र तक पुनः विलोम संख्या की आवृत्ति की गई है ।

**षट्शालोत्पत्तिप्रकारः**

**अथ लक्ष्म च संख्यां च ब्रूमः षट्शालवेश्मनाम् ॥ २४ ॥**
**एकद्वित्रिचतुश्शालगृहाणां योजनान्मिथः ।**

**षट्शाल भवनों की उत्पत्ति और उनके लक्षण**—एकशाल, द्विशाल, त्रिशाल तथा चतुःशाल भवनों के पारस्परिक संयोग से बनने वाले षट्शाल भवनों के लक्षण और उनकी संख्याओं का अब वर्णन करते हैं ॥ २४-२५ ॥

**द्विशालस्यैकशालस्य त्रिशालस्य च योगतः ॥ २५ ॥**
**षट्शालं जायते वेश्म भेदास्तस्य तु षोडश ।**

द्विशाल, त्रिशाल और एकशाल भवनों के परस्पर योग से षट्शाल भवन निष्पन्न होते हैं और इस प्रकार उनके सोलह भेद हो जाते हैं ॥ २५-२६ ॥

**षोडशविधानां षट्शालानां संज्ञाः लक्षणं च**

**पक्षघ्नवातयोर्योगादेकशालगृहस्य च ॥ २६ ॥**

स्यात् पङ्कजाङ्कुरं नाम गृहं षट्शालमुत्तमम् ।
हिरण्यनाभं सिद्धार्थं चैकशालेन वेश्मना ॥ २७ ॥
संयोज्यं तु यदा गेहं तदा स्याच्छ्रीगृहं शुभम् ।
संयोगादेकशालेन सुक्षेत्रयमसूर्ययोः ॥ २८ ॥
धनेश्वरं नाम गृहं जायते धनवृद्धये ।
दण्डाख्यचुल्लयोः संयोगादेकशालगृहस्य च ॥ २९ ॥
प्रभूतकाञ्चनकरं गृहं स्यात् काञ्चनप्रभम् ।
द्वादशान्यानि जानीयाद् भवनान्यनया दिशा ॥ ३० ॥

**सोलह प्रकार के षट्शाल भवनों की संज्ञा और उनके लक्षण—१. पङ्कजाङ्कुर**—पक्षघ्न और वात इन दोनों का एकशाल भवन से संयोग होने पर पङ्कजाङ्कुर नामक उत्तम षट्शाल भवन होता है और **२. श्रीगृह**—एकशाल भवन के साथ हिरण्यनाभ और सिद्धार्थ जब संयुक्त होते हैं तो श्रीगृह नामक शुभ भवन निष्पन्न होता है । **३. धनेश्वर**—एकशाल के साथ सुक्षेत्र और यमसूर्य इन दोनों के संयोग से धनेश्वर नाम का घर धन वृद्धि के लिये होता है । **४. काञ्चनप्रभ**—एकशाल गृह का जब दण्ड और चुल्ली के साथ संयोग होता है तो प्रभूत-काञ्चन-कारक काञ्चनप्रभ नाम वाला घर बनता है । ५-१६. इसी दिशा से द्वादश अन्य भवनों को भी निष्पन्न कर लेना चाहिये ॥ २६-३० ॥

### अखिलवर्णिनां शुभानि षट्शालानि तद्भेदाश्च

एतेषामेव भेदेषु शुभान्यखिलवर्णिनाम् ।
तुल्यात् त्रिशालद्वितयात् षट्शालकचतुष्टयम् ॥ ३१ ॥
स्याद् द्विशालचतुःशालयोगादन्यच्चतुष्टयम् ।

**सभी वर्णों के लिए शुभ षट्शाल भवन और उनके भेद**—इन्हीं के भेदों में ब्राह्मण क्षत्रिय आदि वर्णों के लिये शुभ त्रिशाल भवनों के बराबर जोड़ों से चार और भी षट्शाल भवन होते हैं और द्विशाल एवं चतुःशाल के संयोग से दूसरे प्रकार के चार षट्शाल भवन निष्पन्न होते हैं ॥ ३१-३२ ॥

सिद्धार्थेन चतुःशालं वेश्म(नां?ना)संयु(तिर्य?तं य)दा ॥ ३२ ॥
गृहं तदा स्यात् षट्शालं त्रैलोक्यानन्दकं शुभम् ।

सिद्धार्थ वेश्म के साथ जब चतुःशाल भवन संयुक्त होता है, तब त्रैलोक्यानन्दक नामक शुभ षट्शाल गृह निष्पन्न होता है ॥ ३२-३३ ॥

यमसूर्येण संयुक्तं विलासचयमुच्यते ॥ ३३ ॥

**दण्डयुक्तं चतुःशालं सुखदं नामतो भवेत् ।**
**वातेन च चतुःशालं संयुक्तं नामतो भवेत् ॥ ३४ ॥**

यमसूर्य से संयुक्त (चतुःशाल भवन) विलासचय (नामक शुभ षट्शाल भवन) कहा जाता है । दण्ड से युक्त चतुःशाल सुखद नाम से सङ्कीर्तित होता है और वात से युक्त चतुःशाल श्रीपद नाम वाला होता है ॥ ३३-३४ ॥

**राजोचितानि विंशतिः षट्शालानि**

**चतुर्विंशतिरन्यानि षट्शालान्यन्ययोगतः ।**
**पञ्च यानि चतुश्शालान्युचितानि महीभृताम् ॥ ३५ ॥**
**तेषां द्विशालयोगेन षट्शालान्यभिदध्महे ।**

**राजाओं के लिए उचित बीस षट्शाल भवन**—चौबीस अन्य षट्शाल भवन अन्य प्रकार के भवनों के योग से निष्पन्न होते हैं । अब राजाओं के लिये जो पाँच उचित चतुःशाल भवन होते हैं उनके साथ के द्विशाल योग से षट्शालों का वर्णन करते हैं ॥ ३५-३६ ॥

**सिद्धार्थे सर्वतोभद्रयुक्ते स्याच्छ्रीपुरं गृहम् ॥ ३६ ॥**

**१. श्रीपुर**—सर्वतोभद्र से सिद्धार्थ के साथ समायुक्त होने पर 'श्रीपुर' नाम का घर होता है ॥ ३५-३६ ॥

**श्रीवासं सर्वतोभद्रे यमसूर्यान्विते भवेत् ।**
**दण्डाख्ये भद्रयुक्ते श्रीभूषणं जायते गृहम् ॥ ३७ ॥**
**वाताख्यं सर्वतोभद्रयोगाच्छ्रीभाजनं विदुः ।**
**सिद्धार्थे वर्धमानेन युक्ते स्याद् भूतिमण्डनम् ॥ ३८ ॥**
**यमसूर्ये तु तेनैव संयुक्ते भूतिभाजनम् ।**
**भूतिमानं तु दण्डाख्ये वाताख्ये भूतिभूषणम् ॥ ३९ ॥**

**२. श्रीवास**—यमसूर्य से युक्त सर्वतोभद्र के होने पर श्रीवास निष्पन्न होता है और **३. श्रीभूषण**—भद्र से युक्त दण्ड में श्रीभूषण नाम का घर निष्पन्न होता है । **४. श्रीभाजन**—सर्वतोभद्र के योग से वात भवन को श्रीभाजन कहते हैं और **५. भूतिमण्डन**—वर्धमान से युक्त सिद्धार्थ के होने पर वह भूतिमण्डन कहलाता है और **६. भूतिभाजन**—उसी भूतिमण्डन से यमसूर्य के युक्त होने पर भूतिभाजन होता है और **७. भूतिमान**—उसी भूतिमण्डन से दण्डयुक्त होने पर भूतिमान होता है तथा **८. भूतिभूषण**—उसी भूतिमण्डन से वात संयुक्त होने पर भूतिभूषण बनते हैं ॥ ३७-३९ ॥

**नन्द्यावर्तस्य योगेन सिद्धार्थादिचतुष्टयम् ।**
**श्रीमुखं श्रीधरं श्रीकृच्छ्री(ध?क)रं चेति जायते ॥ ४० ॥**
**सिद्धार्थादिचतुष्कस्य भवेत् स्वस्तिकयोगतः ।**
**श्रियाकारं श्रियोवासं श्रीयानं श्रीमुखं तथा ॥ ४१ ॥**

नन्द्यावर्त के संयोग से सिद्धार्थ आदि ९. श्रीमुख, १०. श्रीधर, ११. श्रीकृत और १२. श्रीकर, ये चार षट्शाल भवन निष्पन्न होते हैं । सिद्धार्थ आदि चारों का रुचक नामक वेश्म से संयोग होने पर १३. श्रियाकार, १४. श्रियोवास, १५. श्रीयान और १६. श्रीमुख ये चार षट्शाल भवन निष्पन्न होते हैं ॥ ४०-४१ ॥

**सिद्धार्थादिचतुष्कस्य भवेत् स्वस्तिकयोगतः ।**
**धनपालधनानन्तधनप्रदधानाह्वयम् ॥ ४२ ॥**

सिद्धार्थ आदि चारों का यदि स्वस्तिक नामक वेश्म से संयोग हो तो, १७. धनपाल, १८. धनानन्त, १९ धनप्रद और २०. धनाह्वय ये चार षट्शाल गृह बनते हैं ॥ ४२ ॥

### विभद्रादिद्वादशभद्रान्तानां षट्शालानां प्रत्येकं संख्या

**भवन्त्येवं राजवेश्मयोगतो विंशतिर्गृहाः ।**
**प्राक् चतुर्विंशतिश्चेति चत्वारिंशच्चतुर्युता ॥ ४३ ॥**

**विभद्रादि द्वादश भद्राओं के षट्शाल भवनों की संख्या**—इस प्रकार से राजोचित पञ्चशाल भवनों की कुल संख्या बीस होती है और पहले के चौबीस मिलाकर चौवालीस हुए ॥ ४३ ॥

**मूषाव्यूढिवशादेकभद्रादीन्यभिदध्महे ।**
**भिदाभिरेकं (?) मूषाभिरभद्रं द्वादशैकया ॥ ४४ ॥**
**द्वाभ्यां षट्षष्टिरुद्दिष्टा विंशे द्वे तिसृभिः श(तेः?)ते।**
**स्याद् व्यूढाभिश्चतसृभिः पञ्चोनं शतपञ्चकम् ॥ ४५ ॥**
**शतानि पञ्चभद्राणां सप्त द्वानवतिस्तथा ।**
**चतुर्विंशा नवशती षड्भद्राणामुदाहृता ॥ ४६ ॥**
**जानीयात् सप्तभद्राणि संख्यया पञ्चभद्रवत् ।**
**गृहाणामष्टभद्राणां पञ्चोनं शतपञ्चकम् ॥ ४७ ॥**
**द्वे विंशे नवभद्राणां भवनानां शते विदुः ।**
**षट्षष्टिर्दशभद्राणि तथा द्वादशसङ्ख्यया ॥ ४८ ॥**

**स्युरेकादशभद्राख्यान्येकं द्वादशभद्रकम् ।**
**एवं षट्शालगेहानां स्यात् साहस्रचतुष्टयम् ॥ ४९ ॥**

अब विभिन्न मूषाओं की संयोजना से एक भद्रादि षट्शाल भवनों का वर्णन करते हैं । विभद्र-१, एकभद्र-१२, द्विभद्र-६६, त्रिभद्र-२२०, चतुर्भद्र-४९५, पञ्चभद्र-७९२, षड्भद्र-९२४, सप्तभद्र-७९२, अष्टभद्र-४९५, नवभद्र-२२०, दसभद्र-६६, एकादसभद्र-१२, द्वादसभद्र-१, इस प्रकार से चार हजार छीयानबे विभद्रादि द्वादसभद्रान्त षट्शाल भवनों के भेद हुए ॥ ४४-४९ ॥

**विमर्श—**

| | | |
|---|---|---|
| विभद्र | = | ०१ |
| एकभद्र | = | १२ |
| द्विभद्र | = | ६६ |
| त्रिभद्र | = | २२० |
| चतुर्भद्र | = | ४९५ |
| पञ्चभद्र | = | ७९२ |
| षड्भद्र | = | ९२४ |
| सप्तभद्र | = | ७९२ |
| अष्टभद्र | = | ४९५ |
| नवभद्र | = | २२० |
| दसभद्र | = | ६६ |
| एकादशभद्र | = | १२ |
| द्वादशभद्र | = | १ |
| कुलयोग | | ४०९६ |

यहाँ यह ध्यान देने योग्य है कि सप्तभद्र से लेकर द्वादशभद्र तक पुनः विलोम संख्या की आवृत्ति की गई है ।

### सप्तशालनिष्पत्तिस्तद्भेदाश्च

**षण्णवत्यधिकं ब्रूमः सप्तशालानि साम्प्रतम् ।**
**तुल्यं त्रिशालद्वितयमेकशालेन युज्यते ॥ ५० ॥**
**यदा स्युः सप्तशालानि तदा द्वादशसङ्ख्यया ।**

**सप्तशाल भवनों की निष्पत्ति और इनके भेद**—अब सप्तशाल भवनों के भेद का वर्णन करता हूँ । त्रिशाल भवनों के जोड़े और एकशाल भवन के योग से जो सप्तशाल भवन बनते हैं उनके द्वादस भेद होते हैं ॥ ५०-५१ ॥

**एकशालं द्विशालं च चतुःशालेन युज्यते ॥ ५१ ॥**
**यदा तदा सप्तशालमपरं वेश्म जायते ।**

एकशाल और द्विशाल जब चतुश्शाल से युक्त होता है, तब सप्तशाल वेश्म का दूसरा प्रकार होता है ॥ ५१-५२ ॥

**सैकशालं चतुःशालं यमसूर्येण संयुतम् ॥ ५२ ॥**
**तदा भवेद्विभेदः (?) स्यात् तद्गृहं श्रीप्रदायकम् ।**
**वातेन श्रीपदं तद्वद् दण्डेन श्रीप्रदं भवेत् ॥ ५३ ॥**

यमसूर्य से एकशाल और चतुःशाल का जब संयोग होता है तब वह घर श्रीप्रदायक नाम का होता है और वात संयुक्त होने पर श्रीपद और दण्ड के साथ संयुक्त होने पर श्रीप्रद सप्तशाल होता है ॥ ५२-५३ ॥

राजयोग्यानि सप्तशालानि

**सिद्धार्थकेन श्रीमालं तद्वदेव प्रजायते ।**
**पञ्चानां राजयोग्यानां स्युश्चतुश्शालवेश्मनाम् ॥ ५४ ॥**
**सप्तशालानि संयोगादेकशालद्विशालयोः ।**

**राजयोग्य सप्तशाल भवन**—सिद्धार्थ के साथ उसी तरह श्रीमाल सप्तशाल निष्पन्न होता है । राजाओं के योग्य जो पाँच चतुश्शाल भवन होते हैं, उनका एकशाल और द्विशाल के साथ संयोग होने पर सप्तशाल गृह बनते हैं॥५४-५५॥

प्रकारान्तरेण निष्पन्नानि अन्यानि तादृशानि सप्तशालानि

**युज्यते सर्वतोभद्रं सिद्धार्थं च यदा गृहम् ॥ ५५ ॥**
**एकशालेन जायेत श्रीपदं श्रीपदं त(था?)दा ।**

**प्रकारान्तर से निष्पन्न सप्तशाल गृह**—जब सर्वतोभद्र और सिद्धार्थ एकशाल के साथ संयुक्त होते हैं, तो श्रीप्रदान करने वाला **श्रीपद** नामक सप्तशाल वास्तुगृह तैयार होता है ॥ ५५-५६ ॥

**सर्वतोभद्रगेहस्य यमसूर्यैकशालयोः ॥ ५६ ॥**
**योगेन श्रीफलं नाम स्याद् गृहं श्रीफलावहम् ।**

सर्वतोभद्र गृह का यमसूर्य और एकशाल से संयोग होने पर श्रीफलावह **श्रीफल** नाम का सप्तशाल घर निष्पन्न होता है ॥ ५६-५७ ॥

**सर्वतोभद्रदण्डाभ्यामेकशालं युतं यदा ॥ ५७ ॥**
**श्रीस्थलं नाम भवनं तदा स्यादास्पदं श्रियः ।**

सर्वतोभद्र और दण्ड के साथ एकशाल जब संयुक्त होता है, तो लक्ष्मी का आस्पद **श्रीस्थल** नाम का सप्तशाल भवन होता है ॥ ५७-५८ ॥

**स्यादेकशाले मिलिते सर्वतोभद्रवातयोः ॥ ५८ ॥**
**लक्ष्मीनिवासभवनं गृहं श्रीतनुसंज्ञितम् ।**

सर्वतोभद्र और वात में एकशाल के मिलने पर लक्ष्मी का निवास भूत **श्रीतनु** नामक सप्तशाल भवन निष्पन्न होता है ॥ ५८-५९ ॥

**यदैकशालं सिद्धार्थं वर्धमानं च युज्यते ॥ ५९ ॥**
**श्रीपर्वताभिधानं स्यात् तदानीं भवनोत्तमम् ।**

जब एकशाल से सिद्धार्थ और वर्धमान संयुक्त होते हैं, तब **श्रीपर्वत** नाम का उत्तम सप्तशाल भवन कहलाता है ॥ ५९-६० ॥

**यमसूर्यस्य योगेन वर्धमानैकशालयोः ॥ ६० ॥**
**श्रीवर्धनं नाम गृहं श्रियो वृद्धिकरं भवेत् ।**

यमसूर्य के साथ वर्धमान और एकशाल के योग से **श्रीवर्धन** नाम का सप्तशाल लक्ष्मी की वृद्धि करने वाला होता है ॥ ६०-६१ ॥

**दण्डं च वर्धमानं च सैकशालं यदा भवेत् ॥ ६१ ॥**
**तदा श्रीसङ्गमं नाम भवेद् भवनमुत्तमम् ।**

जब दण्ड और वर्धमान एकशाल सहित होते हैं, तब **श्रीसङ्गम** नाम का उत्तम सप्तशाल भवन कहलाता है ॥ ६१-६२ ॥

**यदैकशालं वाताख्यं वर्धमानं च युज्यते ॥ ६२ ॥**
**भवनं श्रीप्रसङ्गाख्यं नृपयोग्यं तदा भवेत् ।**

जब वात और वर्धमान एकशाल से युक्त होते हैं तो राजा के योग्य **श्रीप्रसङ्ग** नाम वाला सप्तशाल भवन कहलाता है ॥ ६२-६३ ॥

**सिद्धार्थमेकशालेन नन्द्यावर्तेन चान्वितम् ॥ ६३ ॥**
**श्रीभारं नाम भवनं भवेद् भूपालसेवितम् ।**

एकशाल और नन्द्यावर्त से सिद्धार्थ के अन्वित होने पर भूपाल सेवित **श्रीभार** नामक सप्तशाल भवन निष्पन्न होता है ॥ ६३-६४ ॥

**नन्द्यावर्तस्य योगेन यमसूर्यैकशालयोः ॥ ६४ ॥**
**राज्ञां सुखावहं वेश्म श्रीभारमिति च स्मृतम् ।**

यमसूर्य और एकशाल इन दोनों भवनों का नन्द्यावर्त के साथ जब संयोग हो

तो भी राजाओं के लिए सुखावह **श्रीभार** नाम का सप्तशाल वेश्म स्मृत किया गया है ॥ ६४-६५ ॥

**श्रीशैलमेकशालेन स्यान्नन्द्यावर्तदण्डयोः ॥ ६५ ॥**
**योगाद् भोगावहं राज्ञां सप्तशालं गृहोत्तमम् ।**

नन्द्यावर्त और दण्ड इन दोनों का एकशाल भवनों के साथ संयोग होने पर राजाओं के लिए भोग के योग्य **श्रीशैल** नाम का उत्तम सप्तशाल गृह सम्पन्न होता है ॥ ६५-६६ ॥

**एकशालस्य योगेन स्यान्नन्द्यावर्तवातयोः ॥ ६६ ॥**
**श्रीखण्डं नाम भवनं भूभृतां भूतिकृद्भवेत् ।**

नन्द्यावर्त और वात इन दोनों का एकशाल के साथ संयोग होने पर राजाओं के लिए ऐश्वर्यदायक **श्रीखण्ड** नाम का सप्तशाल भवन होता है ॥ ६६-६७ ॥

**सिद्धार्थस्यैकशालेन संयोगाद् रुचकस्य च ॥ ६७ ॥**
**श्रीषण्डं नामतो वेश्म भवेद् योग्यं महीभृताम् ।**

सिद्धार्थ और रुचक का एकशाल के साथ संयोग होने पर राजाओं के योग्य **श्रीषण्ड** (अथवा श्रीघण्ट) नाम का सप्तशाल भवन बनता है ॥ ६७-६८ ॥

**रुचकस्यैव योगेन यमसूर्यैकशालयोः ॥ ६८ ॥**
**स्याच्छ्रीनिधानं श्रीकुण्डं तस्य दण्डैकशालयोः ।**

रुचक से ही यमसूर्य और एकशाल इन दोनों के योग से **श्रीनिधान** नामक सप्तशाल भवन होता है और उसका दण्ड और एकशाल इन दोनों के योग से **श्रीकुण्ड** नाम का सप्तशाल भवन होता है ॥ ६८-६९ ॥

**वातैकशालरुचकैर्युक्तैः श्रीनाभमुच्यते ॥ ६९ ॥**
**भवनं भूमिपालानां तद् भवेद् भूतिदायकम् ।**

वात, एकशाल और रुचक इन तीनों के एक साथ युक्त होने पर **श्रीनाभ** नामक सप्तशाल भवन कहलाता है और वह भवन राजाओं के लिए भूतिदायक होता है ॥ ६९-७० ॥

**एकशालेन युज्येते सिद्धार्थस्वस्तिके यदा ॥ ७० ॥**
**श्रीप्रियं स्यात् तदा वेश्म सन्ततं वल्लभं श्रियः ।**

एकशाल के साथ जब सिद्धार्थ और स्वस्तिक मिल जाते हैं तो लक्ष्मी देवी का संतत-वल्लभ होकर **श्रीप्रिय** नाम का सप्तशाल भवन निष्पन्न होता है ॥७०-७१॥

**यमसूर्यैकशालाभ्यां स्वस्तिकं युज्यते यदा ॥ ७१ ॥**
**तदा श्रीकान्तमित्याहुर्भवनं भूभृतां हितम् ।**

यमसूर्य और एकशाल के साथ जब स्वस्तिक भवन मिलता है तब उसे राजाओं का हितकारक **श्रीकान्त** नाम का सप्तशाल भवन निष्पन्न होता है ॥ ७१-७२ ॥

**एकशालेन संयोगो दण्डस्वस्तिकयोर्यदा ॥ ७२ ॥**
**श्रीमतं नामतो वेश्म तदा स्याद् विजयावहम् ।**

दण्ड और स्वस्तिक इन दोनों का एकशाल के साथ जब संयोग होता है तब विजय प्राप्त कराने वाला वह वेश्म **श्रीमत्** के नाम से पुकारा जाता है ॥७२-७३॥

**वातस्वस्तिकसंयोगमेकशालं यदा व्रजेत् ॥ ७३ ॥**
**श्रीप्रदत्तमिति प्राहुस्तदा वेश्म महीभृताम् ।**
**एकैकस्य द्विभेदत्वाच्चत्वरिंशदियं भवेत् ॥ ७४ ॥**

वात और स्वस्तिक का संयोग जब एकशाल भवन से होता है तब राजाओं का वह वेश्म **श्रीप्रदत्त** नाम से पुकारा जाता है । इस प्रकार से एक-एक के दो भेदों से चालीस भेद निष्पन्न हुए ॥ ७३-७४ ॥

**एवमत्र प्रकाराः स्युश्चत्वारिंशद् युताष्टभिः ।**

इस प्रकार से यहाँ तक सप्तशाल भवन के अड़तालीस भेद निष्पन्न हुए, आठ पहले के और चालीस ये ॥ ७५ ॥

### चतुर्थेदं सप्तशालकथनम्

**यदा त्रिशालं भवनं चतुश्शालेन युज्यते ॥ ७५ ॥**
**तदापि सप्तशालं स्याच्चतुर्धेदं समासतः ।**

जब त्रिशाल भवन चतुःशाल से युक्त होता है तब भी सप्तशाल भवन चार प्रकार का निष्पन्न होता है ॥ ७५-७६ ॥

### विंशतिभेदसप्तशालकथनम्

**पञ्चानां राजगेहानां मिलत्येकतमस्य चेत् ॥ ७६ ॥**
**त्रिशालं स्यात् तदा सप्तशालं विंशतिभेदवत् ।**

पाँच चतुःशाल राजगृहों में से किसी एक का त्रिशाल से यदि मेल होता है तो बीस प्रकार का सप्तशाल भवन निष्पन्न होता है ॥ ७६-७७ ॥

**हिरण्यनाभ (भो?यो)गेन सर्वतोभद्रमन्दिरम् ॥ ७७ ॥**
**श्रीवत्सं जनयेद् वेश्म नरेन्द्राणां हितावहम् ।**

**श्रीवृक्षं सर्वतोभद्रे सुक्षेत्रे मिलिते भवेत् ॥ ७८ ॥**

हिरण्यनाभ के योग से सर्वतोभद्र भवन राजाओं के लिए हितकारक **श्रीवत्स** नाम का सप्तशाल वेश्म उत्पन्न करता है और सर्वतोभद्र और सुक्षेत्र के मिलने पर **श्रीवृक्ष** नामक सप्तशाल गृह होता है ॥ ७७-७८ ॥

**चुल्लीयुक्ते पुनस्तस्मिन् श्रीपालं नाम जायते ।**
**पक्षघ्ने सर्वतोभद्रयुक्ते श्रीकण्ठमुच्यते ॥ ७९ ॥**

फिर उसमें चुल्ली के संयोग से **श्रीपाल** नाम का अन्य सप्तशाल वेश्म निष्पन्न होता है । पक्षघ्न में सर्वतोभद्र युक्त होने पर **श्रीकण्ठ** नाम से सप्तसाल भवन कहा जाता है ॥ ७९॥

**हिरण्यनाभे श्रीवासं वर्धमानयुते भवेत् ।**
**श्रीनिवासं तु सुक्षेत्रे वर्धमानेन मिश्रिते ॥ ८० ॥**
**वर्धमानेन चुल्ल्या च गृहं श्रीभूषणं विदुः ।**

वर्धमान से युक्त हिरण्यनाभ **श्रीवास** नाम से अभिहित होता है और वर्धमान से सुक्षेत्र के मिश्रित होने पर **श्रीनिवास** निष्पन्न होता है तथा वर्धमान और चुल्ली के साथ मिलकर जो घर बनता है उसे **श्रीभूषण** कहते हैं ॥ ८०-८१ ॥

**पक्षघ्नं वर्धमानेन यदा संयोगमृच्छति ॥ ८१ ॥**
**तदा श्रीमण्डनं नाम जायते भवनोत्तमम् ।**

इसी प्रकार वर्धमान के साथ जब पक्षघ्न संयुक्त होता है तब **श्रीमण्डन** नामक उत्तम भवन निष्पन्न होता है ॥ ८१-८२ ॥

**जाते हिरण्यनाभस्य नन्द्यावर्तेन सङ्गमे ॥ ८२ ॥**
**स्याद् वेश्म श्रीकुलं नाम श्रियः कुलनिकेतनम्।**

हिरण्यनाभ का नन्द्यावर्त के साथ सङ्गम होने पर लक्ष्मी का निवासभूत वह कुलनिकेतन **श्रीकुल** के नाम से प्रख्यात होता है ॥ ८२-८३ ॥

**नन्द्यावर्तेन सुक्षेत्रे युक्ते श्रीगोकुलं भवेत् ॥ ८३ ॥**

नन्द्यावर्त के साथ सुक्षेत्र के मिलने पर **श्रीगोकुल** नामक सप्तशाल भवन निष्पन्न होता है ॥ ८३ ॥

**नन्द्यावर्तस्य चुल्ल्याश्च योगे श्रीस्थावरं गृहम् ।**
**नन्द्यावर्तस्य पक्षघ्नयोगे कुम्भं प्रजायते ॥ ८४ ॥**

नन्द्यावर्त और चुल्ली का योग होने पर **श्रीस्थावर** नामक गृह निष्पन्न होता है

और नन्द्यावर्त का पक्षघ्न के साथ योग होने पर कुम्भ नाम का सप्तशाल घर निष्पन्न होता है ॥ ८४ ॥

**हिरण्यनाभरुचकयोगे स्याच्छ्रीसमुद्गकम् ।**
**श्रीनन्दं नाम सुक्षेत्रे रुचकाख्येन संयुते ॥ ८५ ॥**

हिरण्यनाभ और रुचक के योग से **श्रीसमुद्गक** नामक भवन सम्पन्न होता है और रुचक के साथ सुक्षेत्र के संयोग होने पर **श्रीनन्द** नामक सप्तशाल गृह बनता है ॥ ८५ ॥

**चुल्ल्यां रुचकयुक्तायां श्रीहृदं नाम जायते ।**
**श्रीधरं नाम पक्षघ्ने भवेद् रुचकसंयुते ॥ ८६ ॥**

रुचक से जब चुल्ली नामक गृह संयुक्त होता है तब **श्रीहृद** नामक गृह निष्पन्न होता है और पक्षघ्न का रुचक के साथ संयोग होने पर **श्रीधर** नामक सप्तशाल गृह निष्पन्न होता है ॥ ८६ ॥

**हिरण्यनाभेन युते स्वस्तिके श्रीकरण्डकम् ।**
**सुक्षेत्रेण युते तस्मिन् श्रीभाण्डागारसंज्ञितम् ॥ ८७ ॥**
**चुल्लीयुते श्रीनिलयं भवेन्नरपतिप्रियम् ।**
**स्वस्तिकस्य यदा योगः पक्षघ्नेन प्रजायते ॥ ८८ ॥**
**श्रीनिकेतनसंज्ञं स्यात् तदा नृपतिमन्दिरम् ।**
**उक्तानि सप्तशालानि नामलक्षणयोगतः ॥ ८९ ॥**

हिरण्यनाभ के साथ स्वस्तिक के संयोग में **श्रीकरण्डक** नामक गृह होता है और उसी में सुक्षेत्र के साथ संयोग होने पर **श्रीभाण्डागार** नामक गृह होता है । इसी प्रकार उसके चुल्ली से मिलने पर नरपति प्रिय **श्रीनिलय** नामक सप्तशाल गृह होता है और पक्षघ्न के साथ जब स्वस्तिक का योग होता है तब वह राज मन्दिर **श्रीनिकेतन** के नाम से प्रसिद्ध होता है । इस प्रकार नाम और लक्षणों से युक्त सप्तशालाओं का यहाँ वर्णन किया गया है ॥ ८७-८९ ॥

**सर्वाणि सार्वभौमानां नृपाणां मन्त्रिणामपि ।**
**भवन्ति च सतां वित्तयशोविजयवृद्धये ॥ ९० ॥**

सार्वभौम राजाओं, मन्त्रियों और सज्जनों के लिए ये सब भवन धन, यश और विजय की वृद्धि के लिए होते हैं ॥ ९० ॥

### एकादिमूषावहनप्रभेदात् संख्याकथनम्

**एकादिमूषावहनप्रभेदादथ वेश्मनाम् ।**

**एतेषां सप्तशालानां ब्रूमः संख्यामनुक्रमात् ॥ ९१ ॥**

अब इन सप्तशाल भवनों की एकादि मूषाओं के सन्निवेश भेद से क्रमशः गणना कहते हैं ॥ ९१ ॥

**विभद्रादिचतुर्दशभद्रान्तानां सप्तशालानां प्रत्येकं संख्या**

**वहत्येकापि नो यत्र मूषैकं तद् भवेद्गृहम् ।**
**विभद्रमेकभद्राणि विजानीयाच्चतुर्दश ॥ ९२ ॥**
**द्विभद्रवेश्मनां सैका नवतिः परिकीर्तिता ।**
**भवनानां त्रिभद्राणां चतुष्षष्टिः शतत्रयम् ॥ ९३ ॥**
**सहस्रमेकाभ्यधिकं स्याच्चतुर्भद्रवेश्मनाम् ।**
**भवतः पञ्चभद्राणां द्वे सहस्रे द्विसंयुते ॥ ९४ ॥**
**षड्भद्राणां सहस्राणि त्रीणि त्रीणि गृहाणि च ।**
**द्वात्रिंशता चतुस्त्रिंशत् सप्तभद्रशतानि च ॥ ९५ ॥**

**चतुर्दशभद्रान्त विभद्रादि सप्तशाल भवनों की संख्या**—सप्तशाल गृह में जब एक भी मूषा नहीं होती है, तो वह विभद्र कहलाता है और उस विभद्र की संख्या एकभद्र-१४, द्विभद्र-९१, त्रिभद्र-३६४, चतुर्भद्र-१००१, पञ्चभद्र-२००२, षड्भद्र-३००३ और सप्तभद्र की ३४३२ संख्या होती है ॥ ९२-९५ ॥

**अष्टभद्राणि षड्भद्रसंख्यातुल्यानि जायते (?) ।**
**गृहाणां नवभद्राणां द्वे सहस्रे तथा द्वयम् ॥ ९६ ॥**
**सहस्रं दशभद्राणामेकोत्तरमुदाहृतम् ।**
**तथैकादशभद्राणां चतुष्षष्ट्या शतत्रयम् ॥ ९७ ॥**
**सैका द्वादशभद्राणां नवतिर्वेश्मनां भवेत् ।**
**स्युस्त्रयोदशभद्राणि गृहाणीह चतुर्दश ॥ ९८ ॥**
**यच्चतुर्दशभिर्भद्रैरेकमेव हि वेश्म तत् ।**
**इत्येषां सप्तशालानां सहस्राण्यत्र षोडश ॥ ९९ ॥**
**एकोनत्रिशती तद्वदशीतिश्चतुरुत्तरा ।**

फिर अष्टभद्राओं वाले वेश्मों की संख्या षड्भद्र वाली संख्या के समान (३००३) होती हैं और नवभद्राओं वाले घरों की संख्या २००२ होती है । दसभद्राओं वाले गृह १००१ भेद वाले होते हैं और एकादस भद्राओं वाले ३६४, द्वादस भद्रों की संख्या ९१ और त्रयोदस भद्रों की संख्या १४, चतुर्दस

भद्रों से युक्त भवन का एक ही प्रकार होता है। इस तरह सप्तशाल वेश्मों (= भवनों) की संख्या १६३८४ हुई ॥ ९६-१०० ॥

### अष्टशालनिष्पादनप्रकाराः

**इदानीमष्टशालानि भवनान्यभिदध्महे ॥ १०० ॥**
**बहिरन्तश्चतुःशालद्वयादेकं समासतः ।**
**अन्यानि सर्वभद्रादिद्वयसंयोगतो दश ॥ १०१ ॥**

**अष्टशाल भवन और उनके प्रकार**—अब अष्टशाल भवनों के भी भेद कहते हैं—बाहर और भीतर के दो चतुःशाल भवनों के संयोग से अष्टशाल भवन का एक भेद निष्पन्न होता है और सर्वभद्रादिकों के दो-दो के संयोग से अष्टशाल भवनों के दूसरे और दस भेद निष्पन्न होते हैं ॥ १००-१०१ ॥

**एकोनत्रिंशता क्षेत्रं चतुरस्रं विभाजयेत् ।**
**भागद्वयेन मूषा स्याच्छाला भागचतुष्टयात् ॥ १०२ ॥**

उन्तीस पद वास्तु से चौकोर क्षेत्र विभाग का विभाजन करना चाहिए। दो भागों से मूषा का सन्निवेश विहित होता है और चार भागों से शाला (= कमरों) का सन्निवेश विहित होता है ॥ १०२ ॥

**कुर्वीत पञ्चभिर्भागैस्तन्मध्येऽङ्गणवापिकाम् ।**
**चतस्रश्च प्रतिदिशं मूषाः स्युस्तत्र वास्तुनि ॥ १०३ ॥**

पाँच भागों से उसके मध्य में आँगन की वापी का न्यास विहित होता है और उस वास्तु में प्रति दिशा में चार मूषाएँ होनी चाहिए ॥ १०३ ॥

**शालयोनं सप्तशालं षट्शालं द्वितयोज्झितम् ।**
**त्रिहीनं पञ्चशालं स्यादष्टशालमिदं क्वचित् ॥ १०४ ॥**

यह अष्टशाल भवन कहीं पर एकशाल से कम सप्तशाल के रूप में होता है और कहीं पर दो शालाओं से विहीन षट्शाल के रूप में होता है और कहीं तीन शालाओं से विहीन पाँच शालाओं के रूप में होता है ॥ १०४ ॥

**तुल्यत्रिशालद्वितयं द्विशालेन युतं यदा ।**
**अष्टौ तदाष्टशालानि गृहाण्यन्यानि निर्दिशेत् ॥ १०५ ॥**

दो त्रिशाल भवनों में जब द्विशाल भवन मिलता है तो आठ प्रकार के अष्टशाल भवन निर्दिष्ट किये गये हैं ॥ १०५ ॥

**विभद्रादिषोडशभद्रान्तानामष्टशालानां प्रत्येकं संख्या**

**मूषाव्यूढिवशादष्टशालानामथ कथ्यते ।**

**षोडश भद्रान्त विभद्रादि अष्टशाल भवनों की संख्या**—मूषाओं की सङ्घटना वश अब अष्टशाला भवनों की संख्या कहता हूँ ॥ १०६ ॥

**संख्या तत्र विभद्रं स्यादवहन्मूषसंज्ञितम् ॥ १०६ ॥**
**षोडशैवैकभद्राणि द्विभद्राणां शतं विदुः ।**
**विंशं षष्ट्या त्रिभद्राणां विज्ञेयं शतपञ्चकम् ॥ १०७ ॥**
**अष्टादशाहुर्विंशानि चतुर्भद्रशतानि च ।**
**पञ्चभद्रसहस्राणि चत्वारि स्युः शतत्रयम् ॥ १०८ ॥**
**अष्टषष्टिश्च गेहानि तानि सम्यग् विभावयेत् ।**
**सहस्राष्टकमष्टौ च षड्भद्राणि प्रचक्षते ॥ १०९ ॥**
**एकादशसहस्राणि तथा शतचतुष्टयम् ।**
**जानीयात् सप्तभद्राणि चत्वारिंशद् गृहाणि च ॥ ११० ॥**
**द्वादशैवाष्टभद्राणां सहस्राणि शताष्टकम् ।**
**सप्तत्याभ्यधिकं प्राहुर्वास्तुविद्याविशारदाः ॥ १११ ॥**

उनमें एक विभद्र होता है जिसमें मूषा नहीं होती है । एक भद्र १६, द्विभद्र १२०, त्रिभद्र ५६०, चतुर्भद्र १८२०, पञ्चभद्र ४३६८, षड्भद्र ८००८, सप्तभद्र ११४४० और अष्टभद्र की १२८७० संख्या होती है ॥ १०६-१११ ॥

**एकादशसहस्राणि तथा शतचतुष्टयम् ।**
**चत्वारिंशच्च गेहानि नवभद्राणि संख्यया ॥ ११२ ॥**
**अष्टौ स्युर्दशभद्राणां सहस्राण्यष्टभिः सह ।**
**तथैकादशभद्राणां संख्या स्यात् पञ्चभद्रवत् ॥ ११३ ॥**
**अष्टादशशतानि स्युर्विंशतिर्भवनानि च ।**
**इति द्वादशभद्राणां सङ्ख्या भवति वेश्मनाम् ॥ ११४ ॥**
**स्यात् त्रयोदशभद्राणां षष्ट्यग्रं शतपञ्चकम् ।**
**स्याच्चतुर्दशभद्राणां विंशत्यभ्यधिकं शतम् ॥ ११५ ॥**
**वेश्मानि स्युस्तथा पञ्चदशभद्राणि षोडश ।**
**एकमेव हि विज्ञेयं गृहं षोडशभद्रकम् ॥ ११६ ॥**

नवभद्र वाले भवनों की संख्या सप्तभद्र वाली संख्या के समान ११४४० होती है । दसभद्र संख्या ८००८, एकादसभद्र की संख्या पञ्चभद्र के समान (४३६८)

कही जाती है । द्वादसभद्र वेश्म की संख्या १८२० होती है । त्रयोदसभद्रों की संख्या ५६० और चतुर्दस भद्रों की संख्या १२०, पञ्चदसभद्रों की संख्या १६ और षोडसभद्र गृह की एक ही संख्या मानी गयी है ॥ ११२-११६ ॥

**तेषां सर्वेषामेकीकृता संख्या**

**पञ्चषष्टिसहस्राणि षट्त्रिंशं शतपञ्चकम् ।**
**गृहाणामष्टशालानां भवत्येकत्र सङ्ख्यया ॥ ११७ ॥**

**सभी की एकीकृत संख्या**—इस प्रकार यहाँ पर अष्टशाल गृहों की कुल एकत्रित संख्या ६५५३६ होती है ॥ ११७ ॥

**नवशालनिष्पादनप्रकाराः**

**स्यात् समानचतुश्शालद्वययोगात् समासतः ।**
**एकैकशालयोगाच्च नवशालचतुष्टयम् ॥ ११८ ॥**

**नवशाल भवनों के लक्षण**—चतुःशालाओं के युगल संयोग से संक्षेप में एक-एक एकशाल के योग से चार-चार नवशाल भवन बनते हैं ॥ ११८ ॥

**सर्वतोभद्रमुख्यानां मिथो द्वितययोगतः ।**
**एकैकशालयोगाच्च चत्वारिंशत् तथापरा ॥ ११९ ॥**

सर्वतोभद्र आदि मुख्य वेश्मों के जोड़ों के साथ और एक एकशाल के योग से नवशाल गृह के ४० भेद और होते हैं ॥ ११९ ॥

**तुल्यत्रिशालत्रितययोगेन च चतुष्टयम् ।**
**गृहाणां नवशालानामन्यदुक्तं पुरातनैः ॥ १२० ॥**

त्रिशाल के त्रितय (तिगुने) के योग से नवशाल गृहों के चार अन्य भेद प्राचीन शास्त्रकारों ने बताये हैं ॥ १२० ॥

**संस्थानमुक्तं गेहानां नवशालात्मनामिदम् ।**
**मूषावहनभेदेन तत्संख्या कथ्यतेऽधुना ॥ १२१ ॥**

नवशाल गृहों का यह संस्थान कहा गया, अब मूषाओं के भेद से इनके और भी भेद बताये जाते हैं ॥ १२१ ॥

**विभद्राद्यष्टादशभद्रान्तानां नवशालानां पृथक् पृथक् संख्या**

**अवहन्मूषमेकं स्याद् वहन्त्याष्टादशैकया ।**
**द्वाभ्यां शतं त्रिपञ्चाशदधिकं वेश्मनां भवेत् ॥ १२२ ॥**
**तिसृभिः स्युः शतान्यष्टौ सह षोडशभिर्गृहैः ।**

षष्ट्या सहस्त्रत्रितयं ताभिश्चतसृभिर्भवेत् ॥ १२३ ॥
पञ्चाशीतिशतान्यष्टषष्टियुक्तानि पञ्चभिः ।
वहन्तीभिः प्रजायन्ते मूषाभिरिह वेश्मनाम् ॥ १२४ ॥
अष्टादशसहस्राणि तथा पञ्चशतानि च ।
चतुःषष्टिं च गेहानि मूषाभिः षड्भिरादिशेत् ॥ १२५ ॥
एकत्रिंशत्सहस्राणि सहितान्यष्टभिः शतैः ।
चतुर्विंशतियुक्तानि मूषाभिः सप्तभिर्विदुः ॥ १२६ ॥
चत्वारिंशत्सहस्राणि त्रिसहस्री च वेश्मनाम् ।
शतानि चाष्टपञ्चाशत् सप्त मूषाभिरष्टभिः ॥ १२७ ॥
चत्वारिंशत्सहस्राणि सहस्राण्यष्ट षट्शती ।
विंशति चैव मूषाभिर्गृहाणां नवभिर्विदुः ॥ १२८ ॥
चत्वारिंशत्सहस्राणि सहस्त्रत्रयमोकसाम् ।
मूषाभिर्दशभिः साष्टपञ्चाशच्छतसप्तकम् ॥ १२९ ॥
एकत्रिंशत्सहस्राणि चतुर्विंशच्छताष्टकम् ।
मूषाभिरेकादशभिर्गृहाणां मुनयो जगुः ॥ १३० ॥
अष्टादशसहस्राणि तथा पञ्चशतानि च ।
धाम्नां द्वादशमूषाणां चतुःषष्टिश्च जायते ॥ १३१ ॥
भवन्त्यष्टौ सहस्राणि तथा पञ्चशतानि च ।
स्यात् त्रयोदशमूषाणामष्टषष्टिश्च वेश्मनाम् ॥ १३२ ॥
स्याच्चतुर्दशमूषाणां त्रिसहस्री सषष्टिका ।
मूषाभिः पञ्चदशभिः षोडशाष्टशती तथा ॥ १३३ ॥
धाम्नां षोडशमूषाणां त्रिपञ्चाशच्छतं भवेत् ।
स्युः सप्तदशमूषाणि वेश्मान्यष्टादश स्फुटम् ॥ १३४ ॥
मूषाभिरष्टादशभिर्वेश्मैकं तद्विदो विदुः ।
लक्षद्वयं सहस्राणि द्वाषष्टिश्च शतान्विता ॥ १३५ ॥
वेश्मनां नवशालानां चत्वारिंशच्चतुर्युता ।

अष्टादश भद्रान्त विभद्रादि नवशाल भवनों की पृथक् पृथक् संख्या—
बिना मूषा वाला अर्थात्

| | | | |
|---|---|---|---|
| विभद्र | १ | | |
| एकभद्र | १८ | दसभद्र | ४३७५८ |

| | | | |
|---|---|---|---|
| द्विभद्र | १५३ | एकादसभद्र | ३१८२४ |
| त्रिभद्र | ८१६ | द्वादसभद्र | १८५६४ |
| चतुर्भद्र | ३०६० | त्रयोदसभद्र | ८५६८ |
| पञ्चभद्र | ८५६८ | चतुर्दशभद्र | ३०६० |
| षड्भद्र | १८५६४ | पञ्चदसभद्र | ८१६ |
| सप्तभद्र | ३१८२४ | षोडशभद्र | १५३ |
| अष्टभद्र | ४३७५८ | सप्तदसभद्र | १८ |
| नवभद्र | ४८६२० | अष्टादसभद्र | १ |

इस प्रकार नवशाल भवनों के कुल मिलाकर दो लाख बासठ हजार एक सौ चौवालीस भेद सम्पन्न हुए ॥ १२२-१३६ ॥

**दशशालनिष्पादनप्रकाराः**

**स्यात् समानचतुःशालद्वययोगात् समासतः ॥ १३६ ॥**
**एकेन च द्विशालेन दशशालचतुष्टयम् ।**
**सर्वतोभद्रमुख्यानां मिथे द्वितययोगतः ॥ १३७ ॥**
**एकद्विशालयोगाच्च चत्वारिंशत् तथापरा ।**

**दसशाल भवनों के लक्षण**—एक द्विशाल भवन के साथ समान दो चतुःशाल भवनों के योग से संक्षेप में चार दसशाल वेश्म निर्मित होते हैं और प्रधान वेश्म और सर्वतोभद्रादि के द्वितय (दो-दो) के परस्पर योग से तथा एक द्विशाल भवन के योग से दूसरी संख्या ४० हुई ॥ १३६-१३८ ॥

**तुल्यत्रिशालत्रितयमेकशालयुतं यदा ॥ १३८ ॥**
**साधारणं तदान्यत् स्याद् दशशालचतुष्टयम् ।**
**तुल्ये त्रिशाले युज्येते सर्वभद्रादिभिर्यदा ॥ १३९ ॥**
**तदान्या दशशालानां समुत्पद्येत विंशतिः ।**

समान त्रिशालों के त्रितय और एकशाल से संयुक्त होने पर तब अन्य साधारण चार दसशाल होते हैं । सर्वभद्रादिकों से जब-जब दो तुल्य त्रिशाल भवन संयुक्त होते हैं, तब दसशालों के बीस और भेद होते हैं ॥ १३८-१४० ॥

**विभद्रादिविंशतिभद्रान्तानां दशशालानां पृथक् पृथक् संख्या, तेषां सर्वेषामेकीकृता संख्या**

**तेष्वेकमवहन्मूषं विंशतिर्मूषयैकया ॥ १४० ॥**
**वहन्त्या स्यादुभाभ्यां तु नवत्यभ्यधिकं शतम् ।**

चत्वारिंशानि तिसृभिः शतान्येकादश ध्रुवम् ॥ १४१ ॥
चत्वारि स्युश्चतसृभिः सहस्राणि शताष्टकम् ।
चत्वारिंशच्च गेहानि जायन्ते पञ्चभिः सह ॥ १४२ ॥
पञ्चभिस्तु सहस्राणि मूषाभिर्दशपञ्च च ।
जायन्ते सचतुष्काणि तथा पञ्चशतानि च ॥ १४३ ॥
अष्टात्रिंशत्सहस्राणि षड्भिः सप्त शतानि च ।
षष्ट्युत्तराणि जायन्ते वेश्मनां परिसङ्ख्यया ॥ १४४ ॥
गृहाणां स्युः सहस्राणि सप्तभिः सप्तसप्ततिः ।
शतपञ्चकमन्यच्च भवेद् विंशतिसंयुतम् ॥ १४५ ॥
लक्षमेकं सहस्राणि पञ्चविंशतिरष्टभिः ।
शतानि नव जायन्ते सप्तत्यभ्यधिकानि च ॥ १४६ ॥
लक्षमेकं सहस्राणि सप्तषष्टिः शतानि च ।
नव स्युः षष्टियुक्तानि नवमूषाप्रचारतः ॥ १४७ ॥
लक्षं चतुरशीतिश्च सहस्राणि शतानि च ।
सप्त स्युर्दशभिस्तद्वत् पञ्चाशच्च षडुतरा ॥ १४८ ॥
लक्षमेकं सहस्राणि सप्तषष्टिश्च वेश्मनाम् ।
शतानि चैकादशभिः षष्ट्यानि नव निर्दिशेत् ॥ १४९ ॥
लक्षं तथा सहस्राणि जायन्ते पञ्चविंशतिः ।
शतानि च द्वादशभिर्नव तद्वच्च सप्ततिः ॥ १५० ॥
सहस्राणि निकेतानां संख्यया सप्तसप्ततिः ।
सविंशतिः पञ्चशती त्रयोदशभिरीरिता ॥ १५१ ॥
अष्टात्रिंशत्सहस्राणि तथा सप्तशतानि च ।
स्युश्चतुर्दशभिः षष्ट्या वेश्मनामन्वितानि च ॥ १५२ ॥
स्यात् पञ्चदशसाहस्री शतैः पञ्चभिरन्विता ।
मूषाभिः पञ्चदशभिश्चत्वारि भवनानि च ॥ १५३ ॥
स्युः सहस्राणि चत्वारि तद्वदष्टौ शतानि च ।
तथा षोडशमूषाणां चत्वारिंशच्च पञ्च च ॥ १५४ ॥
सहस्रं सप्तदशभिः शतमेकं च वेश्मनाम् ।
चत्वारिंशच्च वेश्मानि भवन्ति परिसंख्यया ॥ १५५ ॥
शतं नवत्यभ्यधिकमष्टादशभिरुच्यते ।

**भवत्येकोनविंशत्या मूषाणां वेश्मविंशतिः ॥ १५६ ॥**
**एकमेव गृहं मूषाविंशतेर्वहनाद् भवेत् ।**
**सङ्ख्येयं दशशालानां मूषाभेदप्रचारतः ॥ १५७ ॥**
**प्रयुतं चत्वार्ययुतान्यष्टसहस्राणि पञ्च च शतानि ।**
**षट्सप्ततिर्गृहाणि च दशशालेष्वेकसंख्येयम् ॥ १५८ ॥**

**बीस भद्रान्त विभद्रादि दशशाल भवनों की अलग-अलग संख्या**—बिना मूषा वाला अर्थात्

| | | | |
|---|---|---|---|
| विभद्र | १ | | |
| एकभद्र | २० | एकादसभद्र | १६७९६० |
| द्विभद्र | १९० | द्वादसभद्र | १२५९७० |
| त्रिभद्र | ११४० | त्रयोदसभद्र | ७७५२० |
| चतुर्भद्र | ४८४५ | चतुर्दशभद्र | ३८७६० |
| पञ्चभद्र | १५५०४ | पञ्चदसभद्र | १५५०४ |
| षड्भद्र | ३८७६० | षोडशभद्र | ४८४५ |
| सप्तभद्र | ७७५२० | सप्तदसभद्र | ११४० |
| अष्टभद्र | १२५९७० | अष्टादसभद्र | १९० |
| नवभद्र | १६७९६० | एकोनविंशतिभद्र | २० |
| दसभद्र | १८४७५६ | विंशतिभद्र | १ |

इस प्रकार से दसशाल भवनों की मूषा भेद प्रसार से दस लाख अड़तालीस हजार पाँच सौ छिहत्तर (१०४८५७६) संख्या हुई ॥ १४०-१५८ ॥

**चतुश्शालादिदशशालान्तानां सर्वेषां वेश्मनां मूषावहनादिना निर्दिष्टाः संख्याः**

**चतुःशालादिगेहानि यावन्त्यादशशालतः ।**
**चतुर्गुणानि प्रत्याशं तान्यलिन्देन निर्दिशेत् ॥ १५९ ॥**

**चतुःशाल से लेकर दसशाल पर्यन्त सभी भवनों की मूषादि से निर्दिष्ट संख्या**—चतुःशालों से लेकर दसशालों तक की जो संख्या अभी तक बताई गई है, उसकी चौगुनी संख्या प्रत्येक दिशाओं में अलिन्द की दिशा से संयुक्त कर निर्दिष्ट होती है ॥ १५९ ॥

**एकद्वित्रिचतुःशालवेश्मनां सङ्गमान्मिथः ।**
**गृहाणि दशशालान्तान्येवमुक्तानि विस्तरात् ॥ १६० ॥**

एकशाल, द्विशाल, त्रिशाल तथा चतुश्शाल इन चारों के परस्पर संयोग से दसशालान्त शालभवनों का सविस्तर वर्णन किया गया ॥ १६० ॥

**समारभ्य चतुःशा(ल?)लं दशशालान्तवेश्मनाम् ।**
**संख्यामिदानीमैक्येन सर्वेषामभिदध्महे ॥ १६१ ॥**

अब चतुश्शाल भवनों से लेकर दसशाल भवनों तक की जो संख्या निकलती है उन सभी का निर्देश करते हैं ॥ १६१ ॥

**मूषाभेदेन लक्षाणि स्युस्त्रयोदश वेश्मनाम् ।**
**सहस्राण्यष्टनवतिस्तथा वेश्मानि षोडश ॥ १६२ ॥**
**मूषासंस्थानभेदेन भिन्नानां वेश्मनां पुनः ।**
**जायन्ते कोटिशो भेदा यस्मान्नोक्तानि तान्यतः ॥ १६३ ॥**

मूषाभेद से तेरह लाख अट्ठानबे हजार सोलह (१३९८०१६) भेद निष्पन्न होते हैं । पुनश्च मूषाओं के अलग-अलग संस्थान भेद से तो नाना प्रकार से अगणित भेद निष्पन्न होते हैं । अतः यहाँ उनका विस्तारभय से वर्णन नहीं किया गया है ॥ १६२-१६३ ॥

**इत्थं चतुःशालमुखानि वेश्मा-**
**न्युक्तानि यावद्दशशालमत्र ।**
**शालाप्रभेदेन मिथोऽभिषङ्गात्**
**संख्या च तेषामुदिता यथावत् ॥ १६४ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे समस्तगृहाणां संख्याकथनं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥**

इस प्रकार से प्रमुख चतुःशाल भवनों से लेकर दसशाल पर्यन्त जितने भी भवनों के प्रभेद होते हैं, उनका यहाँ वर्णन किया गया है । उनकी शालाओं के प्रभेद से एवं उनके परस्पर संयोग से जो संख्या होती है वह भी यहाँ यथावत् प्रतिपादित की गई है ॥ १६४ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'समस्तगृहाणां सङ्ख्याकथन' नामक पचीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ २५ ॥**



# अथ षड्विंशोऽध्यायः

## * आयादि-निर्णयः[1] *

## (The Auspicious and Inauspicious Norms of Construction)

**इदानीमभिधास्यामः सूत्रपातविधेः क्रमम् ।**
**शस्ते मासि सिते पक्षे विदध्यात् तं शुभेऽहनि॥ १ ॥**

**सूत्रपात (= शिलान्यास) विधि का क्रम कथन**—गृहारम्भ के लिये शुभाशुभ काल का विवेचन एवं तदनुकूल वार, तिथि का निर्णय अत्यन्त आवश्यक है । अतः शुभ मास के शुक्ल पक्ष में एवं शुभ दिन में इस सूत्रपात (= गृहारम्भ) विधि का विधान कहा गया है ॥ १ ॥

**प्रासादकर्मणि सूत्रपातविधिः**

**चैत्रे शोकाकुलो भर्ता वैशाखे च धनान्वितः ।**
**ज्येष्ठे गृही विपद्येत नश्यन्ति पशवः शुचौ ॥ २ ॥**
**श्रावणे धनवृद्धिः स्यान्नभस्ये न वसेद् गृहे ।**
**कलहश्चाश्विने मासि भृत्या नश्यन्ति कार्त्तिके ॥ ३ ॥**
**मार्गशीर्षे धनप्राप्तिः सहस्ये कामसम्पदः ।**
**माघे वह्निभयं चैव फाल्गुने श्रीरनुत्तमा ॥ ४ ॥**

**गृहारम्भ के लिए शुभाशुभ मास—चैत्र** में गृहारम्भ से स्वामी शोकाकुल होता है, **वैशाख** में वह धन से समृद्ध होता है, **ज्येष्ठ** में गृहस्वामी विपत्ति को प्राप्त करता है, **आषाढ़** में उस गृह के पशु नष्ट हो जाते हैं, **श्रावण** में गृहारम्भ से धन वृद्धि होती है और **भाद्रपद** में घर बनाने से उस घर में रहने को नहीं मिलता । **आश्विन** मास में लड़ाई झगड़ा और कार्तिक में नौकर पीड़ित होते हैं, **मार्गशीर्ष** में धन प्राप्ति, **पौष** (= सहस्ये) में अभिलषित समृद्धि प्राप्त होती है । **माघ** में गृहारम्भ से अग्निभय और **फाल्गुन** में गृहारम्भ से अति उत्तम श्रीसमृद्धि की प्राप्ति होती है ॥ २-४ ॥

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह बारहवाँ अध्याय है ।

**द्वितीया पञ्चमी मुख्या सप्तमी नवमी तथा ।**
**एकादशीत्रयोद(श्यस्ति?)श्यो तिथयः स्युः शुभावहाः॥ ५ ॥**

**गृहारम्भ की शुभाशुभ तिथियाँ** — द्वितीया, पञ्चमी, सप्तमी, नवमी, एकादशी एवं त्रयोदशी—ये तिथियाँ गृहारम्भ के लिए शुभ कही गई है ॥ ५ ॥

**चन्द्रताराबलं भर्तुरनुकूलं च शस्यते ।**
**इयं हि सूत्रपाताख्या क्रिया प्रासादकर्मणि ॥ ६ ॥**
**कार्या पुरनिवेशे च प्रारम्भे भवनस्य च ।**
**शिलानिवेशने द्वारस्तम्भोच्छ्रायादिकेषु च ॥ ७ ॥**

गृहारम्भ की विधि में गृहस्वामी के चन्द्र एवं नक्षत्रों के बल (Density) की अनुकूलता प्रशस्त कही गई है । इसी प्रकार प्रासाद कर्म में भी यही सूत्रपात की क्रिया कही गई है । पुर निवेश (City Planing) में और भवन के प्रारम्भ में तथा गृह की नींव डालने में या द्वार एवं स्तम्भ की ऊँचाई (के छाजन) आदि में भी यही तिथियाँ एवं मास (शिलान्यास में) प्रशस्त होते है ॥ ६-७ ॥

### प्राच्यादिदिङ्मुखानां वेश्मनामारम्भे निषिद्धा मासाः

**आद्रियेत सिते पक्षे शोभने लग्न एव हि ।**
**रवौ कन्यातुलालिस्थे गृहं वरुणदिङ्मुखम् ॥ ८ ॥**
**न कुर्याद् तद्धि शून्यं स्यान्न च वृद्धिर्भवेत् प्रभोः।**

**प्राच्यादि दिङ्मुख के अनुसार शुभाशुभ विचार**—शुक्ल पक्ष, शुभ लग्न और कन्या, तुला और वृश्चिक में सूर्य स्थित होने से **पश्चिम मुख** घर बनाने में शुभ होता है । हे प्रभो! इसका पालन न करने पर वह पश्चिम मुख घर वृद्धि शून्य होता है और उस घर में स्वामी की वृद्धि नहीं होती ॥ ८-९ ॥

**न दक्षिणमुखं कुम्भमृगधन्विस्थिते रवौ ॥ ९ ॥**
**कुर्वीत निष्फलं तत् स्यान्नृपदण्डवधादिकृत् ।**

कुम्भ, मृग और धनु में सूर्य की स्थिति रहने पर **दक्षिण मुख** भवन का निर्माण नहीं करना चाहिए, क्योंकि वह गृहस्वामी के लिए निष्फल होता है और इसमें रहने वाला राजा से दण्ड प्राप्त करता है और वधादि का भी कारण बनता है ॥ ९-१० ॥

**न मीनवृषमेषस्थे कुर्वीत प्राङ्मुखं रवौ ॥ १० ॥**
**तद् धनघ्नं कलिक्षुद्रराजचौरार्तिकृद् यतः ।**

मीन, वृष और मेष (= अप्रैल) में सूर्य के स्थित होने से **प्राङ्मुख** घर नहीं

बनाना चाहिए, क्योंकि वह गृह धन का नाश करने वाला होता है और लड़ाई तथा क्षुद्रों, नृप और चोरों के द्वारा पीड़ा पहुँचाने वाला कहा गया है ॥ १०-११ ॥

**आये परिज्ञातव्ये क्षेत्रमानसाधननियमः**

**रवौ मिथुनसिंहस्थे न कर्किस्थेऽप्युदङ्मुखम् ॥ ११ ॥**
**कुर्यात् तद्धि दरिद्रत्वं दद्याच्चरणदासताम् ।**

**आय-व्यय एवं क्षेत्रमान साधन के नियम**—मिथुन, सिंह तथा कर्क में सूर्य के स्थित होने पर उत्तर मुख भवन का निर्माण नहीं करना चाहिए क्योंकि वह दारिद्र्य एवं दासता प्रदान करने वाला होता है ॥ ११-१२ ॥

**आयव्ययांशकर्क्षाणि प्रवक्ष्यामोऽथ वेश्मनाम् ॥ १२ ॥**
**गृहमानवशात् सम्यक् कर्तुः स्थानबलाबलम् ।**
**नगरे वा पुरादौ वा दण्डैर्मानं विधीयते ॥ १३ ॥**

**आयादि विचार**—अब वास्तु (भवनों) के आय, व्यय, अंश और ऋक्षों (= तारों) का वर्णन करता हूँ । गृहस्वामी के प्रमाण वश से ठीक तरह विचार कर नगर में अथवा पुरादि में दण्डों से मान (माप करने) का विधान कहा गया है । इसे दण्डाश्रित मान कहना चाहिये ॥ १२-१३ ॥

**तदलाभे करैः कार्यं सम्यगायविशुद्धये ।**
**यत्र हस्तैर्मितिः क्षेत्रे तत्रायो हस्तसंश्रितः ॥ १४ ॥**

उस दण्ड मान के अभाव में ठीक तरह से आय की विशुद्धि के लिए हस्तों के द्वारा मान करना चाहिए । जहाँ पर क्षेत्र में हस्तों के द्वारा मान किया जाता है, वहाँ पर हस्ताश्रित आय होता है ॥ १४ ॥

**क्षेत्रालाभे तु तत्रैव ग्राह्यः स स्यादिहाङ्गुलैः(?) ।**
**अङ्गुलैस्तु मिते क्षेत्रे सोऽङ्गुलैस्तदलाभतः ॥ १५ ॥**

क्षेत्र में हस्ताश्रित मान के अलाभ में वहीं पर वह मान अङ्गुलों से ग्राह्य होता है, अङ्गुलों के द्वारा नापे गए क्षेत्र में वह मान अङ्गुलाश्रित मान कहा है ॥ १५ ॥

**पादैर्वाथ यवैर्वापि ग्राह्यः क्षेत्रानुसारतः ।**
**गृहेषु कर्महस्तेन मानं स्वाभिकरेण वा ॥ १६ ॥**
**देवतानां तु धिष्ण्येषु कर्महस्तेन केवलम् ।**

उसके अलाभ में क्षेत्र के अनुसार पादों से अथवा यवों से मान करना चाहिए । स्वामी के हाथ से अथवा अपने कर्म हस्त से भवनों में मान होता

है । परन्तु देवताओं के मन्दिरों में केवल अपने कर्म हस्त से मान किया जाता है ॥ १६-१७ ॥

**आयानयनप्रकारः, प्राच्यादिदिक्षूत्पन्नानामायानां यथाक्रममुद्दिष्टाः ध्वजादिसंज्ञाः तेषां फलं च**

**दैर्घ्यं हन्यात् पृथुत्वेन हरेद् भागं ततोऽष्टभिः ॥ १७ ॥**
**यच्छेषमायं तं विद्याच्छास्त्रदृष्टं ध्वजादिकम् ।**

**आय साधन के नियम**—पृथुत्व से दैर्घ्य को अर्थात् लम्बाई और चौड़ाई में गुणा करे और उसके बाद उसे आठ से भाग दे, जो शेष रह जाय उसको 'आय' समझना चाहिए । फिर वही शास्त्रोक्त ध्वजादिक भी जानने चाहिए ॥ १७-१८ ॥

**ध्वजो धूमोऽथ सिंहश्च श्वा वृषः खरकुञ्जरौ ॥ १८ ॥**
**ध्वाङ्क्षश्चेति उद्दिष्टः प्राच्याद्यासु प्रदक्षिणम् ।**
**अन्योऽन्याभिमुखास्ते च कामं स्वच्छन्दचारिणः॥ १९ ॥**
**पूर्वाचार्यैः समुद्दिष्टः आयवृद्धिविधायकाः ।**
**वृषसिंहगजाः शस्ताः प्रासादपुरवेश्मसु ॥ २० ॥**

**फलानुसार आय की संज्ञाएँ**—इन ध्वज आदिकों में निम्नलिखित उपलक्षण कहे जाते हैं—१. ध्वज, २. धूम, ३. सिंह, ४. श्वा, ५. वृष, ६. खर, ७. कुञ्ज तथा ८. ध्वांक्ष । प्राची आदि दिशाओं में प्रदक्षिण और परस्पर अभिमुख और स्वतन्त्रतापूर्वक, स्वच्छन्दचारी वृद्धि विधायक आय की ये संज्ञाएँ हैं जो पूर्वाचार्यों के द्वारा समुद्दिष्ट की गयी है ॥ १८-२० ॥

**ध्वजेऽर्थलाभः सन्तापो धूमे भोगो मृगाधिपे ।**
**कलिः शुनिं धनं धान्यं वृषे स्त्रीदूषणं खरे ॥ २१ ॥**
**गजे भद्राणि दृश्यन्ते ध्वाङ्क्षे तु मरणं ध्रुवम् ।**
**वृषस्थाने गजं कुर्यात् सिंहं वृषभहस्तिनोः ॥ २२ ॥**

वृष, सिंह और गजवाली ध्वजाएँ प्रासादों, पुरों एवं भवनों में मङ्गलकारी कही गई हैं । ध्वज में अर्थलाभ, धूम में सन्ताप, सिंह में भोग, कुत्ते में कलि, वृष में धन और धान्य, खर में स्त्री दूषण, गज में मङ्गल दिखाई देते हैं; ध्वाङ्क्ष में तो मरण निश्चित है; वृष के स्थान में गज रखे और वृषभ एवं गज के स्थान में सिंह रखे ॥ २०-२२ ॥

**विप्रादीनां प्रशस्ता आयाः**

**न कुर्याद् वृषमन्यत्र शस्यते सर्वतो ध्वजः ।**

**कल्याणं कुरुते सिंहो ब्राह्मणस्य विशेषतः ॥ २३ ॥**
**क्षत्रियस्य गजः शस्तो वृषभः शस्यते विशः ।**
**शूद्रस्य ध्वज एवैकः शस्यतेऽर्थप्रदः सदा ॥ २४ ॥**
**एवमेते गृहादीनामायाः सर्वे प्रकीर्तिताः ।**

**ब्राह्मणादिक जातियों के प्रशस्त आय**—वृष संज्ञक आय को दूसरे स्थान पर न रखे, तो ध्वज सर्वत्र प्रशस्त माना जाता है । सिंह विशेषकर ब्राह्मण वर्ण का कल्याणकर्ता कहा गया है । क्षत्रिय वर्ण के लिए गज प्रशस्त माना गया है । वृषभ वैश्य वर्ण के लिए प्रशस्त है और शूद्र वर्ण के लिए 'ध्वज' ही एकमात्र प्रशस्त है । वह सदा अर्थप्रद होता है । इस प्रकार से भवनों के ये सब आय वर्णित किये गए हैं ॥ २३-२५ ॥

**प्रदद्यादासने सिंहमातपत्रेषु तु ध्वजम् ॥ २५ ॥**
**चिह्नेष्वपि च सर्वेषु चामरव्यजनादिषु ।**
**सिंहं गजं वा शस्त्रेषु रथेषु कवचेषु च ॥ २६ ॥**

आसन अर्थात् राजा के सिंहासन में सिंह को और आतपत्र अर्थात् राजछत्र में ध्वज को, इसी प्रकार चामर और व्यजनादि राजचिह्नों में, शस्त्रों में, रथों में और कवचों में, सब में सिंह अथवा गज चिह्न को प्रदान करे ॥ २५-२६ ॥

**सार्यश्वगजपर्याणेष्विभं वृषभमेव च ।**
**अर्थधारणपात्रेषु शयनेषु मतङ्गजम् ॥ २७ ॥**
**याने च वाहने चैव मतिमान् योजयेद् गजम् ।**

सारी (पक्षिविशेष), घोड़ा, गज, पर्याण (काठी) में गज या वृषभ चिह्न को प्रदान करे । अर्थ के रखने वाले पात्रों में, शयनों में गज को प्रदान करे । इसी प्रकार यान में और वाहन में भी बुद्धिमान् गृहस्वामी को गज की योजना करनी चाहिए ॥ २७-२८ ॥

**प्रासादप्रतिमालिङ्गपीठमण्डपवेदिषु ॥ २८ ॥**
**कुण्डेषु च ध्वजं दद्यात् देवोपकरणेषु च ।**

प्रासाद, मूर्ति, लिङ्ग, पीठ, मण्डप और वेदियों में, कुण्डों में तथा देवोपकरणों में ध्वज संज्ञक आय देना चाहिए ॥ २८-२९ ॥

**आयो गृहवदुद्वाहवेदीमण्डपयोर्भवेत् ॥ २९ ॥**
**महानसे वृषं दद्याज्जलाधारे जलाशये ।**
**स्थाल्यां भोजनपात्रे चकोष्ठागारेऽन्नधारणे ॥ ३० ॥**

**एतद्गृहे तथा दद्याद् गृहोपकरणेषु च ।**

गृह के समान ही विवाह की वेदी और मण्डप इन दोनों में आय की व्यवस्था होती है । रसोई में वृष संज्ञक को और जलाधार अर्थात् जलाशय में, थाली या अन्य भोजन पात्र में तथा अन्न रखने वाले कोष्ठागार में भी वृष नामक आय दे । घर में और गृहोपकरणों में भी वृष को देना चाहिए ॥ २९-३१ ॥

**वृषभं गजशालायां प्रदद्याद् गजमेव वा ॥ ३१ ॥**
**वृषं तुरगशालासु गोशालागोकुलेषु च ।**
**गजाश्ववृषशालासु सिंहं यत्नेन वर्जयेत् ॥ ३२ ॥**

किन्तु गजशाला में वृष अथवा गज आय को दे । अश्वशालाओं में एवं गोशालाओं में और गोकुलों में वृष नामक आय को दे । किन्तु गजशालाओं में, अश्वशालाओं में और वृषशालाओं में यत्नपूर्वक सिंह नामक आय का वर्जन करना चाहिए ॥ ३१-३२ ॥

**अधमानां खरध्वाङ्क्ष धूमश्वानः शुभावहाः ।**
**धूमोऽग्निजीविनां शस्तो ध्वाङ्क्षः सन्न्यासिनां हितः ॥ ३३ ॥**

(निकृष्ट कर्मोपजीवियों) अधमों के लिए खर, ध्वांक्ष, धूम, और श्वान ये शुभ आय कहे गए हैं । अग्निजीवियों (लोहार आदि) के लिए धूम प्रशस्त कहा गया है और संन्यासियों के लिए ध्वांक्ष आय हितकारी कहा गया है ॥ ३३ ॥

**स्वगणानां श्वपाकानां स्ववेश्मानां खरः शुभः ।**
**नटनर्तकवेश्मेषु पण्यस्त्रीणां खरः शुभः ॥ ३४ ॥**
**कुलालरजकादीनां तथा गर्दभजीविनाम् ।**

स्वगणों, चाण्डालों के अपने घरों के लिए 'खर' नामक आय शुभ कहा गया है । इसी प्रकार नटों, नर्तकों तथा वेश्याओं के भवनों के लिए भी 'खर' शुभ कहा गया है । कुम्भकारों, गदहे से जीविकोपार्जन करने वाले धोबियों आदि के भवनों के लिए भी यही विधान कहा गया है ॥ ३४-३५ ॥

**तत्तन्निवेशनानि प्रति तत्तदायानां विनियोगः,**
**तेष्वधमानां क्वचिद्दोषत्वकथनम्, व्ययानयनप्रकारः**

**गृहादिषु क्षेत्रफलं गणयेदष्टभिर्भजेत् ॥ ३५ ॥**

**समाधिकादिभेदेन त्रिप्रकारस्य व्ययस्य यथाक्रममुद्दिष्टाः पिशाचादिसंज्ञाः**

**त्रिघनेन भजेच्छेषं नक्षत्रेऽष्टहृते व्ययः ।**
**पिशाचो राक्षसो यक्ष इति त्रेधा व्ययो मतः ॥ ३६ ॥**

**व्यय विचार**—घरों आदि में सम्पूर्ण क्षेत्रफल की गणना करके उसको आठ से भाग देकर तीन घन से भजन फल शेष प्राप्त करे। अष्टहृत क्षेत्र या नक्षत्र में व्यय होता है। इसको पिशाच, राक्षस और यक्ष इन तीन नामों से 'व्यय' माना गया है ॥ ३५-३६ ॥

**अंशकानयनप्रकारः, गृहादिष्वंशकस्य मुख्यत्वव्यवस्थापनम्, अंशकत्रयस्य संज्ञाः**

**साम्याधिक्यन्यूनताभिरायतः स्याद् यथाक्रमम्।**
**व्ययं क्षेत्रफले क्षिप्त्वा गृहनामाक्षराणि च ॥ ३७ ॥**
**भागं त्रिभिर्हरेत् तत्र यच्छेषं सोंऽशको भवेत्।**

**अंशक विचार**—क्रमशः सम, अधिक एवं न्यून आय से क्षेत्रफल में व्यय को क्षिप्तकर और गृहनाम के अक्षरों की संख्या को भी क्षिप्त करके तीन से भाग दे और जो बाकी बचे वह 'अंशक' कहलाता है ॥ ३७-३८ ॥

**चतुरङ्गो यथा मन्त्रो मुख्यो लग्ने नवांशकः ॥ ३८ ॥**
**तथा गृहादिषु प्रोक्तं मुख्यत्वेनांशकत्रयम्।**
**इन्द्रो यमश्च राजा च त्रयो नामभिरंशकाः ॥ ३९ ॥**
**स्वनामतुल्यफलदा विज्ञातव्यास्त्रयोऽपि च।**

**इन्द्रादि तीन अंशकों की प्रधानता**—जिस प्रकार चतुरङ्ग मन्त्र मुख है और लग्न में नवांशक मुख्य है, उसी प्रकार से घरों में प्रधानतया तीन अंश मुख्य होते हैं, वे हैं—इन्द्र, यम और राजा। इन तीन नामों से घरों में अशङ्क की गणना की जाती है। अपने नाम के अन्वर्थ फल देने वाले इन तीनों अंशकों को जानना चाहिए ॥ ३८-४० ॥

**गृहतारास्तत्संज्ञाश्च भर्तुर्नक्षत्रगणसाम्यादिना विहितस्य गृहस्य शुभफलप्रदत्वकथनम्, गृहविधाववश्यचिन्तनीयानि षट्करणानि**

**गणयेत् स्वामिनक्षत्राद् यावत् स्याद् भवनस्य भम्॥ ४० ॥**
**नवभिर्भाजिते तस्मिन् शेषं तारा प्रकीर्तिता।**
**जन्मसम्पद्विपत्क्षेमपापसाधकनैधनीः ॥ ४१ ॥**
**मैत्रीपरममैत्र्यौ च प्राहुः संज्ञाः समाः फले।**

**तारा विचार**—गृहस्वामी के जन्म नक्षत्र से गणना करे और जब तक भरणी नक्षत्र न आ जाए तब तक गणना करनी चाहिए। फिर उसमें नौ से भाग देने पर जो शेष हो उसे 'तारा' नक्षत्र कहा गया है। १. जन्म, २. सम्पत्, ३. विपत्, ४. क्षेम, ५. पाप, ६. साधक, ७. नैधनी, ८. मैत्री और ९. परम मैत्री—उस नक्षत्र की ये संज्ञाएँ कही गई है। इनके फल समान हैं ॥ ४०-४२ ॥

**वर्ज्या मध्यमाश्च ताराः त्रयाणां नक्षत्रगणानां संज्ञास्तदन्तर्भूतानि नक्षत्राणि च**

**त्रिसप्तपञ्चमीर्भर्तुर्गृहतारा विवर्जयेत् ॥ ४२ ॥**
**आद्याद्वितीयाष्टम्यस्तु ताराः स्युरिह मध्यमाः ।**
**तथा ऋक्षेऽपि चानिष्टे चन्द्रेऽष्टमगतेऽपि च ॥ ४३ ॥**
**नयते दुरितं तारा चतुःषण्णवती (?) नृणाम् ।**

तीसरी, सातवीं और पाँचवीं तारा स्वामी के गृह में वर्जित कही गयी है । पहली, दूसरी, आठवीं तारा को मध्यम तारा कहा गया है । अनिष्ट ऋक्ष (नक्षत्र) में भी और अष्टम चन्द्रमा में भी चौथी, छठी और नवमी ताराएँ मनुष्यों का दुरित अर्थात् पाप क्षय करके ले जाते हैं ॥ ४२-४४ ॥

**सुरराक्षसमर्त्याख्या ऋक्षाणां स्युर्गणास्त्रयः ॥ ४४ ॥**
**यद्गणर्क्षो भवेद् भर्ता तद्गणर्क्षं गृहं शुभम् ।**

**नक्षत्रों के तीन गण**—सुर, राक्षस और मर्त्य संज्ञा वाले ऋक्षों (नक्षत्रों) के तीन गण होते हैं । जो गण और ऋक्ष (नक्षत्र) स्वामी का होता है उसी गण और नक्षत्र का घर शुद्ध होता है ॥ ४४-४५ ॥

**मृगाश्विरेवतीस्वात्यो मैत्रं पुष्यपुनर्वसू ॥ ४५ ॥**
**हस्तः श्रवण इत्येष देवाख्यो नवको गणः ।**

**१. देवगण**—१. मृग, २. अश्विनी, ३. रेवती, ४. स्वाती, ५. मैत्र, ६. पुष्य, ७. पुनर्वसु, ८. हस्त और ९. श्रवण—ये नौ देवगण होते हैं ॥४५-४६॥

**विशाखा कृत्तिकाश्लेषा नैर्ऋतं वारुणं मघा ॥ ४६ ॥**
**चित्रा ज्येष्ठा धनिष्ठेति नवको राक्षसो गणः ।**

**२. राक्षसगण**—१. विशाखा, २. कृत्तिका, ३. आश्लेषा, ४. नैर्ऋत, ५. वारुण, ६. मघा, ७. चित्रा, ८. ज्येष्ठा और ९. धनिष्ठा—ये नौ राक्षसगण कहलाते हैं ॥ ४६-४७ ॥

**आर्द्राभरण्यो रोहि(ण्यौ?)ण्या तिस्रः पूर्वास्तथोत्तराः॥ ४७ ॥**
**इति नक्षत्रनवकं विज्ञेयं मानुषे गणे ।**

**३. मनुष्यगण**—१. आर्द्रा, २. भरणी और ३. रोहिणी, ४. पूर्वाषाढ़ा, ५. उत्तराषाढ़ा, ६. पूर्वा भाद्रपाद, ७. उत्तरा भाद्रपद, ८. पूर्वा फाल्गुनी और ९. उत्तराफाल्गुनी—ये नवगण मानुषगण समझने चाहिए ॥ ४७-४८ ॥

**गणसाम्यं शुभा तारा यस्याया(तृ?)च्च व्ययोऽल्पकः ॥ ४८ ॥**
**हितोंऽशकश्च तद्वेश्म भर्तुः शुभफलप्रदम् ।**

**गृहमेलापक**—जिस घर के गण साम्य, शुभ नक्षत्र और आय से व्यय कम हो तथा हितकारी अंश होते हैं, वह घर गृहस्वामी के लिए शुभ फल देने वाला होता है ॥ ४८-४९ ॥

**आयो व्ययश्च योनित्वं ताराश्च भवनांशकाः ॥ ४९ ॥**
**गृहनामेति चिन्त्यानि करणानि गृहस्य षट् ।**

१. आय, २. व्यय, ३. योनि, ४. नक्षत्र, ५. भवनांशक और ६. गृहनाम—घर के इन छह करणों का ज्ञान करना चाहिए ॥ ४९-५० ॥

**त्र्यादिभिः शुभैस्तैर्यथोत्तरं शुभकरत्वकथनम्**

**त्रिभिः शुभैः शुभं वेश्म द्वाभ्यामेकेन चाशुभम् ॥ ५० ॥**
**करणैश्चतुराद्यैस्तु शुभैरतिशुभं भवेत् ।**

तीन शुभ करणों से शुभ वेश्म, दो और एक से अशुभ और चारों करणों से युक्त घर अति शुभ होता है ॥ ५०-५१ ॥

**समायव्ययादिवेश्मनां वर्जनीयत्वकथनम्**

**न समायव्ययं वेश्म नाव्ययं नाधिकव्ययम् ॥ ५१ ॥**
**न द्वितीयांशमसदृग्योनिभं च न कारयेत् ।**
**भर्तृतुल्याभिधानं च गृहं दूरात् परित्यजेत् ॥ ५२ ॥**

घर समान आय और व्यय वाला नहीं होना चाहिए और न अव्यय होना चाहिए और न अधिक व्यय ही होना चाहिए । द्वितीयांश एवं असमान योनि और असमान नक्षत्र वाला घर नहीं बनाना चाहिए और स्वामी के तुल्य अभिधान वाले घर को भी दूर से ही त्याग देना चाहिए ॥ ५१-५२ ॥

**समसप्तकादीनां गृहाणां कर्तव्यत्वोपदेशः**

**समसप्तकमेकर्क्षं तृतीयैकादशं तथा ।**
**चतुर्थदशकं चेति कर्तव्यं मन्दिरं सदा ॥ ५३ ॥**

समान सप्तक, एक नक्षत्र, तीसरा, ग्यारहवाँ और चौथा तथा दसवाँ ऐसे नक्षत्र में गृह निर्माण करना चाहिए ॥ ५३ ॥

**षट्कोष्ठकादिगृहाणां वर्जनीयत्वकथनम्**

**षट्कोष्ठकं त्रिकोणं च वर्ज्यं द्विर्द्वादशं तथा ।**
**षट्कोष्ठके मृतिर्दैन्यं वियोगश्च भवेद् गृहे ॥ ५४ ॥**
**त्रिकोणे वसतां दुःखं वैधव्यं च प्रजायते ।**

**द्विर्द्वादशे पुत्रपौत्रगुरुबन्धुधनक्षयः ॥ ५५ ॥**

छह कोष्ठ वाला, तीन कोने वाला और साथ ही साथ दूसरा और बारहवाँ कोण वाला भवन वर्ज्य हैं क्योंकि षट्कोष्ठक वाले गृह में मृत्यु, दैन्य तथा वियोग प्राप्त होते हैं । त्रिकोणगृह में बसने वालों को दुःख और वैधव्य सहन करना पड़ता है । द्विर्द्वादश कोण वाले गृह में बसने वालों को पुत्र, पौत्र, गुरु, बन्धु एवं धन आदि का नाश प्राप्त होता है ॥ ५४-५५ ॥

### गृहज्जीवितादिविज्ञानोपायादिकम्

**हृतेऽष्टभिः क्षेत्रफले खनेत्रशशिभाजिते ।**
**शेषं जीवितमेतस्मिन् पञ्चभक्ते भवेन्मृतिः ॥ ५६ ॥**

**गृह निवास में जीवन या मृत्यु के फल का विचार**—आठ से हृत क्षेत्रफल के ख (०) नेत्र (२) शशि (१) अर्थात् १२० से विभाजित करने पर जो शेष बचे उसमें बसने वालों को जीवन प्राप्त होता है और पाँच से विभाजित करने पर मृत्यु प्राप्त होती है ॥ ५६ ॥

**सभुजं सह षड्दारुमुखमण्डपसंयुतम् ।**
**आयामतः पृथुत्वाच्च मानं कृत्वा विभाजयेत् ॥ ५७ ॥**

सभुज, षड्दारु सहित, मुखमण्डप से युक्त भवन के आयाम और पृथुत्व से मान करके विभाजन करे ॥ ५७ ॥

**सर्वतः शोधितं वास्तु यच्च सम्यङ्मितं भवेत् ।**
**स्वामिनस्तद् भवेद् धन्यं स्थपतेश्च यशस्करम् ॥ ५८ ॥**

**शुद्ध वास्तु के फल**—जो वास्तु सभी प्रकार से शोधित और ठीक तरह से नाप-जोखकर बनाया गया हो वह स्वामी के लिए धन्य होता है और स्थपति के लिए तो अत्यन्त कीर्ति प्रदान करने वाला होता है ॥ ५८ ॥

**अर्चितं वर्धते वास्तु नारीभिः पशुभिर्नरैः ।**
**कीर्त्त्यायुर्धनधान्यैश्च प्रमोदैस्तु महोत्सवैः ॥ ५९ ॥**

शोधित वास्तु स्त्रियों, पशुओं, मनुष्यों से समन्वित गृह तथा कीर्ति, आयु, धन, धान्यों से समृद्धि को प्राप्त गृह और प्रमोद एवं महोत्सवों से अर्चित वास्तु वृद्धि को प्राप्त करता है ॥ ५९ ॥

### मेर्वादीनि षट् छन्दांसि तद्विन्यसनप्रकारश्च

**मेरुश्च खण्डमेरुश्च पताका सूचिका तथा ।**

**उद्दिष्टं नष्टमिति षट् छन्दांसीह प्रचक्षते ॥ ६० ॥**

**पताकादि षट् छन्द**—१. मेरु, २. खण्डमेरु, ३. पताकाछन्द, ४. सूचिछन्द, ५. उद्दिष्ट और ६. नष्टछन्द—ये छह छन्द कहे गए हैं ॥ ६० ॥

**१. मेरुछन्दकथनम्**

**एकाद्येकोत्तरान् कोष्ठान् विन्यसेदिच्छयात्मनः ।**
**आद्यादारभ्य तद्वृद्धिर्यथा स्यात् पार्श्वयोः समम् ॥ ६१ ॥**

**(१) मेरुछन्द**—एक से एक उत्तर कोष्ठों को अपनी इच्छा से विन्यसित करे। आदि कोष्ठ से आरम्भ कर फिर तब तक बढ़ता जाय, जब तक दोनों पार्श्वों का एक-सा सम्पादन न हो जाय । तब मेरु छन्द निष्पन्न होता है ॥ ६१ ॥

**मेरोरेकाधिका संख्या शरावस्यैव चाकृतिः ।**
**प्रथमे कोष्ठके रूपमन्तं यावच्च पार्श्वयोः ॥ ६२ ॥**

मेरु छन्द की एक से अधिक संख्या होती है और शराव (प्याला) के समान उसकी आकृति होती है । प्रथम कोष्ठ का जो रूप होता है वही बगलों (= पार्श्वों) का रूप बन जाता है ॥ ६२ ॥

**आसनोर्ध्वस्थयोर्न्यस्येन्मध्ये सङ्कलितं पृथक् ।**
**तस्मिन्निष्टविकल्पानां संख्या स्यादन्त्यपंक्तिगा ॥ ६३ ॥**

ऊर्ध्वस्थित इन दोनों पार्श्वों के मध्य में पृथक् सङ्कल्पित रूप बन जाता है, पुनः मनचाही क्रिया कल्पनाओं की संख्या अन्त की पंक्ति में मिल जाती है ॥ ६३ ॥

**२. खण्डमेरुकथनम्**

**खण्डमेरुं तु विन्यस्येत् तद्वदेवैकपार्श्वतः ।**
**प्रवृद्धैः कोष्ठकैस्तत्राप्यङ्काः प्राग्वत् फलं तथा ॥ ६४ ॥**

**(२) खण्डमेरुछन्द**—उसी प्रकार एक पार्श्व से खण्डमेरु का विन्यास करे । उसके कोष्ठक प्रवृद्ध हों और अङ्क दूसरी पंक्ति में छोर तक रखना चाहिए । पहले कोष्ठक में शून्य रखे और दूसरे अन्य कोष्ठों में भी पहले की तरह अङ्क सम्पादित करे । फल भी वैसा ही प्राप्त होता है ॥ ६४ ॥

**अथापरः खण्डमेरुः कोष्ठांस्तत्रेष्टसंख्यया ।**

**दूसरा खण्डमेरुछन्द**—अब दूसरे खण्डमेरु का वर्णन करते हैं । वहाँ पर कोष्ठों की संख्या अपनी इच्छानुसार रखकर गृह निर्माण करे ॥ ६५ ॥

### ३. पताकाछन्दकथनम्

**कृत्वैकापचितान् वामविभागापचितानधः ॥ ६५ ॥**
**एकाद्येकोत्तरानङ्कानाद्यपंक्तौ निवेशयेत् ।**

**(३) पताका छन्द**—एक संख्या कम करके पुनः नीचे बाईं ओर झुके हुए एक जिनके आरम्भ में है और एक ही जिनके अन्त में है, इस प्रकार के अङ्कों को पहली पंक्ति में रखे ॥ ६५-६६ ॥

**अन्यासु पंक्तिष्वाप्रान्तं शून्या(न्या?ना)द्येषु कल्पयेत्॥ ६६ ॥**
**द्वितीयेषु च कोष्ठेषु तासामेकैकमावयेत्(?) ।**
**द्वितीयायां तृतीयादिकोष्ठकेषु यथाक्रमम् ॥ ६७ ॥**
**विकर्णयोगजानन्यानूर्ध्वाधो योगसम्भवान् ।**
**फलं विकर्णयोगोत्थमेकस्मिन् परिकल्पयेत् ॥ ६८ ॥**

अन्य पंक्तियों में इसमें भी यही प्रक्रिया करे, पुनः तृतीय आदि कोष्ठकों में क्रमशः विकर्ण योग से उत्पन्न अथवा ऊँचे और नीचे योग से उत्पन्न अन्य अङ्कों का विन्यास करे । पुनः विद्वान् दैवज्ञ विकर्ण योग से उत्पन्न फल की एक कोष्ठ में प्रकल्पना करे ॥ ६६-६८ ॥

**एकाधिकानभीष्टायाः संख्यायास्तिर्यगालिखेत् ।**
**कोष्ठाने (काञ्च?तांश्च) रूपादींस्तन्मध्ये द्विगुणोत्तरान् ॥ ६९ ॥**

अभीष्ट संख्या को एक से अधिक तिरछा लिखे । मध्य में दुगुने अन्तः कोष्ठ रूपादि का न्यास करे ॥ ६९ ॥

**एकोनं पृष्ठतस्तेषामेकं द्विगुणमग्रतः ।**
**नातिक्रामेत् परां संख्यां पताकाछन्द उच्यते ॥ ७० ॥**

उनमें से पीछे की एक संख्या कम करे और आगे एक संख्या को दुगुना करे यदि परा संख्या का अतिक्रमण न हो तो 'पताका' छन्द कहा जाता है ॥ ७० ॥

### ४. सूचीछन्दकथनम्

**तद्विनेष्टाद्यगा संख्येत्येकाद्यैस्तैस्ततो गृहे ।**
**न्यस्ताङ्कसंख्याः संख्याः स्युरलिन्दाद्यैः प्रकल्पिताः॥ ७१ ॥**
**एकैकमिष्टस्थानेषु लिखेत् सैकेष्वतः परम् ।**
**अन्त्या(द?दृ)ते पूर्वपूर्वयुक्तेनायोजयेत् परम् ॥ ७२ ॥**

**(४) सूची छन्द**—उसको छोड़कर पहली आदि इष्ट संख्याओं से अङ्क

विन्यास वाली संख्याओं को अलिन्दों से प्रकल्पित कर एक-एक संख्या को इष्ट स्थानों में लिखे । पुनः अन्त की संख्या को छोड़कर पहले-पहले वाली संख्या को दूसरी-दूसरी संख्या से मिलाए ॥ ७१-७२ ॥

**अन्त्यादारभ्य तद्वनावेकाद्येषु (?) च पर्ययात् ।**
**अलिन्दादिषु यत्र स्यात् संख्या सूचीं तु तां विदुः ॥ ७३ ॥**

पुनः अन्त से आरम्भ कर पीछे लौटे, जहाँ पर अलिन्द आदि में यह संख्या निकले, उसे सूची कहते हैं ॥ ७३-७४ ॥

### ५. उद्दिष्टछन्दकथनम्

**उद्दिष्टे स्थापयेत् संख्यामुद्दिष्टां सम्भ(वे?जे)च्च ताम् ।**
**दलयेद् रूपयुक्तां तु दलयेन्नाम सम्भवेत्(?) ॥ ७४ ॥**
**लघुस्वरूपदलने सैकार्धे करणे गुरुः ।**
**यावदिष्टपदाप्तिः स्याल्लघवोऽलिन्दकोदयः ॥ ७५ ॥**

**(५) उद्दिष्ट तथा (६) नष्ट छन्द**—उद्दिष्ट संख्या में इष्ट संख्या को स्थापित करे, पुनः उसको बराबर विभाजित करे । रूप वाली संख्या लघु स्वरूप के दलन में आधे सहित एक में जब गुरु बन जाये और इष्ट पद की प्राप्ति हो जाये और सारे लघु हो जायें तब अलिन्द का उदय होता है ॥ ७४-७५ ॥

**कृत्वा छन्दः समुद्दिष्टं तदन्ते लघुनि द्विकम् ।**
**न्यसेदेकं गुरूणां च द्विगुणं द्विगुणं ततः ॥ ७६ ॥**

फिर छन्द को समुद्दिष्ट करके अन्त लघु में एक लघु द्विक रखे, फिर दुगुना-दुगुना गुरुओं का विन्यास करे ॥ ७६ ॥

### ६. नष्टछन्दकथनम्

**व्यत्ययाल्लघुनः स्थाने द्विगुणादेककं गुरोः ।**
**कुर्यात् तमाद्यस्थानाङ्कसंख्यं नष्टे गृहं भवेत् ॥ ७७ ॥**

फिर इस क्रिया को उलट दे और लघु के स्थान में एक गुरु रखे तो नष्ट में आदि संख्या वाला घर कहलाता है ॥ ७७ ॥

### तेभ्यो गृहमूषासंख्यादिज्ञानम्

**प्राप्तस्यैकं कोष्ठमेकैकवृद्ध्या**
**न्यस्येदूर्ध्वं पंक्तयो यावदिष्टः ।**

**इष्टानेकादींल्लिखेदानुपूर्व्या**
**कर्णेनाधः शून्यरूपे च दद्यात् ॥ ७८ ॥**

**गृहमूषा की संख्यादि का ज्ञान कथन**—कोष्ठ में एक-एक संख्या की वृद्धि से ऊपर की ओर पंक्तियों को तब तक न्यस्त करे जब तक इष्ट न मिल जाय। जो इष्ट हो उनमें आनुपूर्व एकादि संख्या लिखे और कर्ण के नीचे शून्य रूप लिखना चाहिए ॥ ७८ ॥

**कर्णस्थाङ्कश्लेषतोऽङ्के भवेद् यस्-**
**तं विन्यस्येत् कोष्ठकेषु क्रमेण ।**
**उद्दिष्टाङ्को भद्रसंख्यानि मध्ये**
**याभ्यः कर्णश्लेषतो मूषिकास्ताः ॥ ७९ ॥**

**एकादिषु द्विगुणितेष्विह यावदिष्ट-**
**मूषाक्रमव्युपहितेष्वथ तेषु विद्यात् ।**
**उद्दिष्टवेश्मकृतनिर्गममार्गमूषा-**
**सत्काङ्कसैकयुतिनिर्मितसंख्यमोकः ॥ ८० ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचितसमराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे आयव्ययनक्षत्रराशिफलतद्योगताराङ्कयोनितच्छन्दो-योगनिर्णयो नाम षड्विंशोऽध्यायः ॥ २६ ॥**

...❀...

**मूषिका प्राप्त करने की विधि**—कर्णस्थ (कोने के) भाग को श्लिष्ट करने से जो प्राप्त होता है उसी को क्रमशः कोष्ठकों में विन्यस्त करना चाहिए। उद्दिष्टाङ्क एवं भद्रसंख्याओं के मध्य तथा कर्ण (बगल के कोने) एवं श्लिष्ट के बीच जो स्थान होता है वहीं मूषिका बनानी चाहिए। इस प्रकार इस संरचना में न केवल अलिन्दों का ही ज्ञान प्राप्त होता है बल्कि मूषा (झरोखों एवं खिड़कियों) आदि स्थानों का भी ज्ञान प्राप्त होता है ॥ ७९-८० ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-वास्तुशास्त्र के 'आयव्ययनक्षत्रराशिफलतद्योगताराङ्कयोनितच्छन्दो-योगनिर्णय' नामक छब्बीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ २६ ॥**



# समीक्षात्मक टिप्पणी

## छन्दविज्ञान (२६.७४-८०)

१. **वास्तुमण्डन** (६.१०-११) ग्रन्थ में छन्दविज्ञान के नष्टोद्दिष्ट का स्वरूप इस प्रकार वर्णित है—

नष्टे रूपे बुधैः पृष्ठे गुरुरूने समे लघुः ।
विषमे चैकमाधाय दलयेत्यूनरेव हि ।।
उद्दिष्टे स्थापयेदङ्कान् क्रमाद्द्विगुणितानधः ।
लघुस्थानोद्भवैरेकैः संख्या स्यादेकमिश्रितैः ।।

वास्तुशास्त्र में १. मेरु, २. खण्डमेरु, ३. पताका, ४. सूचिका, ५. उद्दिष्ट एवं ६. नष्ट इन छः छन्दों का विवेचन है ।

छन्दों के भेदों को सामान्य रूप से जानने के लिए जिस प्रणाली का प्रयोग करते हैं उसे प्रस्तार कहते हैं । नारदपुराण (१.२.५७ ) में और गरुडपुराण के दो सौ बारहवें अध्याय में छन्दशास्त्र के अनुसार प्रस्तार, नष्ट, उद्दिष्ट, एकद्वयादिगलक्रिया, संख्या तथा अध्वयोग—यह छः प्रणालियाँ कही गई हैं ।

प्रस्तार के नष्ट हो जाने पर यदि उसके किसी भेद का स्वरूप जानना हो तो उसे जानने की विधि को **नष्टप्रत्यय** कहा जाता है । नष्ट रूप का निरूपण इस प्रकार है — नष्ट संख्या को आधी करने पर जब वह दो भागों में बराबर बँट जाये, तब एक लघु लिखना चाहिए । यदि नष्ट अङ्क सम है, तो उसके लिए एक लघु लिखे और उसका आधा भी यदि सम हो, तो उसके लिए पुनः एक लघु लिखे । यदि नष्ट अङ्क विषम हो तो उसके लिये एक गुरु लिखें और उसमें एक विषम हो तो उसके लिये भी गुरु ही लिखें, यह क्रिया तब तक करें, जब तक कि अभीष्ट अक्षरों का पद प्राप्त न हो जाये ।

प्रस्तार के किसी भेद का स्वरूप तो ज्ञात हो, किन्तु संख्या ज्ञात नहीं हो तो उसके जानने की विधि को **उद्दिष्ट** कहा जाता है । उद्दिष्ट रूप का निरूपण इस प्रकार है — उद्दिष्ट में गुरु-लघु बोधक जो चिह्न हो, उनमें पहले अक्षर पर एक लिखें और क्रमशः दूसरे अक्षरों पर दूने अङ्क लिखते जाये, तदनन्तर लघु के ऊपर जो अङ्क हों, उन्हें जोड़कर उसमें एक और मिला दें तथा वही उद्दिष्ट स्वरूप की संख्या होती है अर्थात् चार लघु तक पूरे प्रस्तार के लिए (ऽ) । ऽ । ये रूप कौन सा है, यह जानने के लिए पहली पंक्ति के गुरु (ऽ) ऊपर एक लिखें, दूसरी पंक्ति के लघु (।) के ऊपर उससे दो गुना अर्थात् २ लिखें

और तृतीय पंक्ति के गुरु और ऊपर उससे दो गुना अर्थात् चार का अङ्क लिखें तथा अन्तिम लघु ऊपर उससे दो गुना अर्थात् आठ का अङ्क रखें, अब लघु ऊपर के २+८=१० हुए, उसमें एक मिलाते हैं, जो उस प्रस्तार का ग्यारहवाँ रूप हुआ । इस प्रकार गुरु और लघु ऊपर अनुक्रम से १-२-४-८ ऐसे अङ्क रखें, किन्तु उसमें लघु ऊपर के अङ्कों के जोड़ में १ मिलाने से जो होता है, उसे प्रस्तार की संख्या का रूप समझना चाहिए । इसके लिए उदाहरण इस प्रकार है पहले उद्दिष्ट के गुरु-लघु को निम्नाङ्कित रीति से अङ्कित करे और उनके ऊपर क्रमशः द्विगुण अङ्क स्थापित करें—

१ २ ४ ८

ऽ ऽ ऽ ।

इसके बाद केवल लघु के अङ्क आठ में एक और जोड़ दिया जाये, तो नौ हुआ, यही उद्दिष्ट की संख्या मानी गई है, अर्थात् यह उस छन्द का नवाँ भेद होता है ।

२. **अपराजितपृच्छा** (६८.५१-५४) में समराङ्गणसूत्रधार (२६.७४-७७) के अनुसार ही श्लोक उद्धृत कर दिए गए हैं ।



# अथ सप्तविंशोऽध्यायः

## * सभाष्टकम्[1] *

## (Eight Types of Assembly Hall or Court Chambers)

**नन्दा भद्रा जया पूर्णा सभा स्याद् भाविता तथा ।**
**दक्षा च प्रवरा तद्वद् विदुरा चाष्टमी मता ॥ १ ॥**

**सभागृह (ड्राइंग रूम) के आठ प्रकार**—१. नन्दा, २. भद्रा, ३. जया, ४. भाविता, ६. दक्षा, ७. प्रवरा एवं ८. विदुरा—सभा गृह (कामन रूम) के ये आठ प्रकार कहे गए हैं ॥ १ ॥

**चतुरस्त्रीकृते क्षेत्रे ततः षोढा विभाजिते ।**
**मध्ये पदचतुष्कं स्यात् सीमालिन्दस्तु भागिकः ॥ २ ॥**

भूमि को पहले चौकोर बनाकर (फिर उसे) समतल करे और उस चौकोर भूमि (प्लाट) को सोलह भागों में बाँट दे । मध्य भाग में किनारे पर आलिन्द (बरामदा या बार्जा) चार पद का समभाग में बनाना चाहिए ॥ २ ॥

**तद्वाद्योऽलिन्दकस्तद्वद् भवेत् प्रतिसराभिधः ।**
**प्राग्ग्रीवाख्यस्तृतीयश्च बहिः क्षेत्राच्चतुर्दिशम् ॥ ३ ॥**

उसी प्रकार प्रथम पद पर 'प्रतिसर' नामक अलिन्द (= पोर्टिगो) होता है और तीसरे पद पर प्राग्ग्रीव (=आगे का कमरा) सभागृह में प्रवेश के लिए एक स्थान होता है जो चारों दिशाओं में खुला होता है ॥ ३ ॥

**निसृष्टसौर्ध्य(धे)यैर्वा(?) स्यादेकस्यां वा यदा दिशि ।**
**नन्दा भद्रा जया पूर्णा क्रमेण स्युः समास्तदा ॥ ४ ॥**

पहले क्षेत्र को चार भागों में विभक्त करे फिर उसे सोलह भाग में विभक्त कर दे । मध्य के चार भाग को छोड़कर शेष में चारों दिशाओं में लघु विन्यास करे तो उसको 'नन्दा' सभा कहते हैं । जिसके आगे एक भद्रा हो उसको 'भद्रा' सभा

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह अध्याय नहीं है ।

(कामन रूम) कहते हैं और जिसके चारो ओर एक-एक भाग के बराबर भद्र हों उसको 'जयदा' सभा (ड्राइंग रूम) कहते हैं तथा जिसके आगे चारों ओर लघु हो उसको 'पूर्णा' सभा कहते हैं ।

**विमर्श**—यहाँ मूल कुछ भ्रष्ट है । अत: मण्डनसूत्रधार रचित 'वास्तुराज-वल्लभ' ग्रन्थ के आधार पर यहाँ नन्दा, भद्रा, जयदा एवं पूर्णा सभा का अर्थ दिया गया है—

क्षेत्रं चतुष्टयपदैरपि षोडशांशं
मध्ये तुरीयपदमेकपदो लघुश्च ।
नन्देति भद्रसहिता च पदेन भद्रा
तद्वदेतश्च जयदा लघुना च पूर्णा ॥ (वास्तु० ८.१३)

**षड्भागभाजिते क्षेत्रे कर्णभित्तिं निवेशयेत् ।**
**सभा स्याद् भाविता नाम प्राग्ग्रीवात्र पञ्चमी ॥ ५ ॥**

समस्त क्षेत्र को छह बराबर भाग में बाँट देने पर एक भाग में कर्णभित्ति (बगल की दीवाल) बना देने से पाँचवीं भाविता नाम की सभा हो जाती है यदि एक प्रवेश द्वार उसमें हो ॥ ५ ॥

**स्तम्भान् षट्त्रिंशदेतासु पञ्चस्वपि निवेशयेत् ।**
**स्तम्भान् प्राग्ग्रीव संबद्धान् पृथगेभ्यो विनिर्दिशेत् ॥ ६ ॥**

इन नन्दादि पाँच प्रकार के सभा गृहों में कुल छत्तीस खम्भे (अथवा कालम) देना चाहिए । प्रवेश द्वार से सटे हुए खम्भे को प्रवेश द्वार से अलग करके बनाना चाहिए ॥ ६ ॥

**दक्षेति षष्ठी परितस्तृतीयालिन्दवेष्टिता ।**
**प्रवरा सप्तमी द्वारैर्युक्तैर्वा परिकीर्तिता ॥ ७ ॥**

दक्ष नामक छठवीं सभा तृतीय अलिन्द (पोर्टिगो या बरामदा) से परिवेष्टित होती है । 'प्रवरा' नामक सातवीं सभा (ड्राइंग रूम) द्वारों के संयोजित करने से सम्पन्न होती है ॥ ७ ॥

**प्राग्ग्रीवद्वारसंयुक्ता विदुरेत्यष्टमी सभा ।**
**सभानामिदमष्टानां लक्षणं समुदाहृतम् ॥ ८ ॥**

विदुरा नामक आठवीं सभा मुख्य मार्ग एवं प्रवेश द्वार से संयुक्त होने से निष्पन्न होती है । इस प्रकार आठ सभाओं के प्रकार एवं उनके लक्षण यहाँ बताए गए हैं ॥ ८ ॥

**इत्यशनां लक्ष्मसम्यक् सभाना-**
**मेतत् प्रोक्तं दिग्भवालिन्दभेदात् ।**
**तद्वद् द्वारालिन्दसंयोगतश्च**
**ज्ञातेऽत्र स्याद् भूभृतां स्थानयोगः ॥ ९ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेव विरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे सभाष्टकं नाम सप्तविंशोऽध्यायः ॥ २७ ॥**

इस प्रकार आठ सभाओं के लक्षणों को सभागृह में प्रवेश द्वार के दूरी के क्रम से और बरामदे के परिप्रेक्ष्य में सम्यक् रूप से प्रतिपादित किया गया है । इसी प्रकार द्वार एवं आलिन्द (बरामदा या पोर्टियो) के संयोग से निष्पन्न जो संख्या गिनी जायगी उससे राजा के निवास स्थान का स्थल भी ज्ञात किया जाता है ॥ ९ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'सभाष्टक' नामक सत्ताइसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ २७ ॥**



# समीक्षात्मक टिप्पणी

## सभाष्टक (२७.१-९)—

१. **वास्तुमण्डन** (८.३८-४२) ग्रन्थ में सभाष्टक का वर्णन इस प्रकार है—

क्षेत्रे षोडशभक्ते तु मध्यस्याच्चतुरंशकः ।।
बाह्य एकांशकोऽलिन्द सभा नन्देति सा मताः ।
भद्राद्विभागभद्राढ्याः चतुर्भद्रैर्युता जयाः ।।
द्रव्यालिन्दा चतुर्दिक्षु पूर्णाभद्रैर्युता मताः ।

**राजगृह में आठ सभा गृह बनाने का विधान है**—सभा हेतु क्षेत्र को सोलह भागों में बराबर विभाजित कर उसमें चार अंश से मध्य में यदि एक अलिन्द बनाया जाय तो उस सभा को **नन्दा** कहा जाता है । यदि उक्त मान से ही बाहर एक पद भद्र से समन्वित हो, तो वह सभा **भद्रा** तथा चारों ओर भद्र की रचना हो, तो उसे **जया** कहा जाता है । इसी प्रकार यदि वहाँ पर अलिन्दों की रचना निर्मित की जाय, तो उस सभा को **पूर्णा** कहा जाता है ।

क्षेत्रे नवांशे तु कलास्तम्भैः दिव्या सभा मताः ।।
भद्रैश्चतुर्भिः सा यक्षी त्र्यंशव्यासैस्तु रत्नजा ।
उत्पलांश प्रतिभद्रैः भूषयेत्ताः सुतोरणैः ।।
निर्यूहमद्दला लूमा वितानाद्यैः स्वरूपकैः ।
नक्रः करिहरिव्यालशालभञ्जीगणादिभिः ।।

यदि क्षेत्र के नवांश विभाजन कर उस पर सोलह स्तम्भों का निर्माण किया जाय तो उस सभा को **दिव्या** कहा जाता है । यदि इसमें चारों ओर भद्रों की रचना निर्मित की जाय तो उस सभा को **यक्षी** कहा जाता है । उपरोक्त प्रकार से यदि तीन अंश का व्यास हो तो उसे **रत्नजा** अथवा **रत्नसम्भवा** कहा जाता है । एकांश व प्रतिभद्र से युक्त सभा को **उत्पला** कहा जाता है । सभी प्रकार की सभाओं को तोरण, निर्यूह, मदला, लूमा, वितानादि स्वरूपों से सुसज्जित करना चाहिए और इसके अलावा सभाओं को मकरमुख, गज, वानर, व्याल, शालभञ्जिका तथा गणादि से भी विभूषित करना चाहिए ।

२. **वास्तुराजवल्लभ** (८.१२-१५) में भी इसी प्रकार का मत आया है । यहाँ रत्नजा को रत्नोद्‌भवा के नाम से बतलाया गया है ।

३. **अपराजितपृच्छा** (७७.१-११) में नन्दा, भद्रा, जया, पूर्णा, दिव्या,

यक्षी, रत्नजा, उत्पला नामक सभाष्टकों के लक्षणादि इस प्रकार कहे गए हैं —

नन्दाभद्राजयापूर्णादिव्यायक्षी च रत्नजा।
उत्पला तदनुज्ञेया सभा अष्टौ प्रकीर्तिताः ।।
चतुरस्रीकृते क्षेत्रे द्विरष्टपदभाजिते।
मध्यमपदचतुष्केण चतुष्कोऽलिन्दशेषतः ।।
नन्दा नाम समाख्याता सर्वकामफलप्रदा।
चतुष्के भद्रविस्तार एकोभागश्च निर्गमः ।।
भद्रा त्वेकं समाख्याता तेजःप्रतापवर्धका।
भद्रं भद्रं चतुष्के तु जया नित्यं जयावहा ।।
अलिन्दैर्वेष्टितं सर्वं निर्यूहाच्छाद्यकं तथा।
तथा पूर्णा भवेत्येवं सर्वकल्याणकारिका ।।
चतुरस्रं समं कृत्वा विभक्तं च नवांशकैः।
केवला नवशालाश्च दिव्या नामापि सुन्दरी ।।
निष्क्रान्ता च चतुर्भद्रैर्यक्षी कार्या सुशोभना।
भद्रे भद्रे द्विशालानि सा मता रत्नसम्भवा ।।
तस्याश्च प्रत्येकशालं प्रतिभद्रविभूषितम्।
उत्पला च समाख्याता महाराजेन्द्रवल्लभा ।।
लुम्बिन्याख्यवितानानि विचित्राणि च मध्यतः।
अनेकाकाररूपाश्च राजक्रीडोचिताः स्थिताः ।।
शालभञ्जादिप्रतिमा स्तम्भविमानसम्भवाः।
मुक्तलूमच्छाद्योपरि घण्टाकूटैरलङ्कृताः ।।
दिव्यसौवर्णकलशैर्मत्तवारणसंयुताः ।
सुरसद्मोपमाश्चैव नृपसद्माग्रमण्डपाः ।।



# अथाष्टाविंशोऽध्यायः

## * गृहद्रव्यप्रमाणानि[1] *

## (The Description of the Household Materials)

उपादेयानि यान्यत्र परित्याज्यानि यानि च ।
गृहद्रव्यप्रमाणानि तानीदानीं प्रचक्ष्महे ॥ १ ॥

**गृह बनाने के द्रव्य का परिमाण**—अब जो गृह द्रव्य उपादेय और परित्याज्य हैं, उन भवन निर्माण की वस्तुओं का प्रमाण कहते हैं ॥ १ ॥

### द्वारप्रमाणम्

द्वारस्य गृहविस्तारैर्हस्ततुल्याङ्गुलैर्भवेत् ।
उच्छ्रायः सप्तभिर्युक्तैर्विस्तृतिस्तु तदर्धतः ॥ २ ॥

**गृह द्वार का प्रमाण**—घर के दरवाजे की ऊँचाई की माप गृह विस्तार के हस्त तुल्य अङ्गुलों में सात जोड़ने से उचित होती है और उसका विस्तार उसके आधे परिमाण में होना चाहिए अर्थात् भवन का विस्तार यदि २४ हाथ है तो दरवाजे की ऊँचाई २४ अङ्गुल + ७ अङ्गुल होगी ॥ २ ॥

### प्रकारान्तरेण तत्प्रदर्शनम्

प्रकल्पयेद् गृहद्वारं क्रमेणैव कनीयसा(म्) ।
त्रैराशिकेन मध्यानां द्वादशांशं परित्यजेत् ॥ ३ ॥

छोटे भवनों के गृह का द्वार इसी क्रम से संयोजन करे और मध्य भवनों का त्रैराशिक से बारहवाँ अंश छोड़कर माप करना चाहिए ॥ ३ ॥

इत्युच्छ्रितिस्तदर्धेन सर्वेषामपि विस्तरः ।
उच्छ्रायमुत्तमानां तु कुर्यादष्टांशवर्जितम् ॥ ४ ॥

**गृह की ऊँचाई एवं विस्तार**—इस प्रकार ऊँचाई और उसके आधे से घर का विस्तार सभी प्रकार के भवनों का होता है; परन्तु उत्तम भवनों की ऊँचाई आठवें अंश से हीन कही गई है अर्थात् अष्टमांश से अधिक न हो ॥ ४ ॥

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह बत्तीसवाँ अध्याय है ।

**विस्तराङ्गुलसंयु(क्तां?)क्तं कुर्यादतिकनीयसाम् ।**
**चतुःषष्टिगृहद्वारमुदयेनार्धविस्तृतम् ॥ ५ ॥**

बहुत छोटे भवनों का विस्तार अङ्गुलों से युक्त करना चाहिए । ६४ अङ्गुल की गृह द्वार की ऊँचाई और उसका आधा विस्तार विधि विहित नाप है ॥ ५ ॥

**विस्तारहस्ततुल्यानि षष्ट्या पञ्चाशताथवा ।**
**संयुतान्यङ्गुलानि स्यादुच्छ्रायोऽर्धेन विस्तृतिः ॥ ६ ॥**

विस्तार के हस्तों के तुल्य साठ अथवा पचास से संयुक्त अङ्गुल ऊँचाई होती है और उसके आधे से विस्तार शास्त्र सम्मत होता है ॥ ६ ॥

**गृहोत्सेधेन वा त्र्यंशहीनेन स्यात् समुच्छ्रितिः ।**
**तदर्धेन तु विस्तारो द्वारस्येत्यपरो विधिः ॥ ७ ॥**

दूसरी विधि यह है—तीन अंश से हीन (कम) गृह की ऊँचाई से दरवाजे की ऊँचाई और उसके आधे से उसका विस्तार कहा गया है ॥ ७ ॥

### पेद्यापिण्डोदुम्बर-द्वारशाखा-रूपशाखाखल्वशाखादीनां प्रमाणम्

**द्वारोच्छ्रायकरैस्तुल्येष्वङ्गुलेषु विनिक्षिपेत् ।**
**चत्वारि पेद्यापिण्डः स्यात् सपादं विदधीत तम् ॥ ८ ॥**
**सार्धं वा सत्रिभागं वा द्विगुणं चाधिकं न तु ।**
**एवं कृते भवेद् द्वारपेद्याया विस्तृतिः स्फुटा ॥ ९ ॥**

**(१) पेद्या पिण्ड विधान**—दरवाजे की ऊँचाई के करों के तुल्य अङ्गुलों में यदि चार का विनिक्षेप किया जाय तो पेद्या-पिण्ड निष्पन्न होता है । उसका विस्तार सवाया अथवा ड्यौढ़ा, या तीन भाग अथवा दुगुना बनाना चाहिए और इससे अधिक विस्तार नहीं होना चाहिए । ऐसा करने पर द्वार की पेद्या (= ड्योढ़ी) का विस्तार (प्रमाण) स्पष्ट है ॥ ८-९ ॥

**सार्धेन पेद्यापिण्डेन पि(ण्डं स्या?ण्डस्यो)दुम्बरो भवेत् ।**
**सार्धस्तु पेद्याविस्तारः स्यादुदुम्बरविस्तृतिः ॥ १० ॥**

**(२) उदुम्बर विधान**—पेद्या पिण्ड के आधे से, पिण्ड का उदुम्बर (Sill of the Circular Orb) निर्मित होता है । पेद्या के आधे विस्तार से उदुम्बर का विस्तार विहित होता है ॥ १० ॥

**पेद्यापिण्डेन तुल्या स्याच्छाखाया विस्तृतिः शुभा ।**
**सार्धया चैतया रूपशाखाया अपि विस्तृतिः ॥ ११ ॥**

**(३) द्वारशाखा विधान**—पेद्या पिण्ड के समान शाखा (Jamb) का विस्तार शुभ समझा जाता है और उसके आधे से ही रूपशाखा (चौखट, Side Post of Door) का भी विस्तार होता है ॥ ११ ॥

**विस्तारार्धेन पेद्यायाः खल्वशाखा विधीयते ।**
**रूपशाखासमा वा स्यात् सार्धा वा बाह्यमण्डला ॥ १२ ॥**

**(४) खल्वशाखा एवं बाह्यमण्डला शाखा विधान**—पेद्या के आधे विस्तार से खल्व शाखा का विधान किया गया है और रूपशाखा के समान अथवा रूप शाखा से आधी बाह्य मण्डला नामक शाखा (Jamb) कही गई है ॥ १२ ॥

**पादोना त्र्यंशहीना वा विस्तारादर्धमेव वा ।**
**प्रासादेषु च तुल्यः स्याद् भारशाखाविनिर्गमः ॥ १३ ॥**

**(५)'भार-शाखा-विनिर्गम' विधान**—एक पाद से कम अथवा तीन अंश से हीन अथवा उसके विस्तार से आधा प्रासादों में 'भार-शाखा-विनिर्गम' (The Outlet of the Architrave) तुल्य होता है ॥ १३ ॥

**शुभाः पञ्चद्वारशाखाः**

**आद्या शाखा भवेद् देवी द्वितीया नन्दिनीति च ।**
**तृतीया सुन्दरी नाम चतुर्थी स्यात् प्रियानना ॥ १४ ॥**
**भद्रेति पञ्चमी शाखा प्रशस्ताः पञ्च वेश्मनि ।**
**अतोऽधिकास्तु याः शाखा गृहद्वारि न ताः शुभाः ॥ १५ ॥**

**पाँच शुभ द्वारशाखाएँ**—पहली शाखा को देवी कहते हैं और दूसरी को नन्दिनी कहते हैं । तीसरी सुन्दरी के नाम से जानी जाती है और चौथी प्रियानना के नाम से पुकारी जाती है । भद्रा नाम की पाँचवीं शाखा होती है । इस तरह से ये पाँच द्वार-शाखाएँ होती हैं और ये पाँच द्वार शाखाएँ गृह में प्रशस्त कही गई हैं । इनसे अधिक जो द्वार शाखाएँ होती हैं वे घर के दरवाजे पर शुभ नहीं होती किन्तु घर के भीतर शुभ हो सकती हैं ॥ १४-१५ ॥

**तलोच्छ्रायः**

**विस्तारात् षोडशो भागश्चतुर्हस्तसमन्वितः ।**
**तलोच्छ्रयः प्रशस्तोऽयं भवेद् विदितवेश्मनाम् ॥ १६ ॥**
**सप्तहस्तो भवेज्ज्येष्ठे मध्यमे षट्करोन्मितः ।**
**पञ्चहस्तः कनिष्ठे तु विधातव्यस्तथोदयः ॥ १७ ॥**

**तल (छत) की ऊँचाई**—घर के विस्तार का सोलहवाँ भाग चार हस्तों से

बीजं स्वकीयं भवति यन्त्रेषु जलजन्मसु ।
तापाद्यं पूर्वकथितं वह्निजं जलजे भवेत् ॥ ३४ ॥
संगृहीतश्च दत्तश्च पूरितः प्रतिनोदितः ।
मरुद् बीजत्वमायाति यन्त्रेषु जलजन्मसु ॥ ३५ ॥
वह्निजातेषु मृत्ताम्रलोहारुक्मादि तद्ग्रहे ।
पार्थिवं कथयन्तीह बीजं बीजविचक्षणाः ॥ ३६ ॥
वह्नेर्वह्निर्भवेद् बीजमाप आपस्तथा भवेत् ।
आद्यैर्दृत्यादिभिः प्रोक्तैर्मरुद् गच्छति बीजताम् ॥ ३७ ॥
प्रत्येषकं च जनकं प्रेरकं ग्राहकं तथा ।
संग्राहकं च भूजातं बीजं स्यादनिलोद्भवैः ॥ ३८ ॥
प्रेरणं चाभिघातश्च विवर्तो भ्रमणं तथा ।
जलजं मारुतोत्थेषु बीजं स्यादिति सम्मतम् ॥ ३९ ॥
संगृहीतस्य तापाद्यैर्यानि पावकजन्मनि ।
प्रकीर्तितानि तान्येव भवन्ति पवनोद्भवैः ॥ ४० ॥

बीजबीजिभावविकल्पनानां नानात्वम्

प्रेरितः संगृहीतश्च जनितश्च समीरणः ।
आत्मनो बीजतां गच्छत्येवमन्यत् प्रकल्पयेत् ॥ ४१ ॥
भूतमेकमिहोद्रिक्तमन्यद्धीनं ततोऽधिकम् ।
अन्यद्धीनतरं चान्यदेवंप्रायैर्विकल्पितैः ॥ ४२ ॥
नाना भेदा भवन्त्येषां कस्तान् कार्त्स्न्येन वक्ष्यति ।
निष्क्रिया भूः क्रिया त्वंशे शेषेषु सहजा त्रिषु ॥ ४३ ॥
अतः प्रायेण सा जन्या क्षितावेव प्रयत्नतः ।
साध्यस्य रूपवशतः सन्निवेशो यतो भवेत् ॥ ४४ ॥
यन्त्राणामाकृतिस्तेन निर्णेतुं नैव शक्यते ।

यन्त्रस्य गुणकथनम्

यथावद्बीजसंयोगः सौश्लिष्ट्यं श्लक्ष्णातापि च ॥ ४५ ॥

यन्त्रों की आकृति उसी प्रकार निर्णित करना अत्यन्त कठिन है जिस प्रकार से बीज का संयोग, सुश्लिष्टता और श्लक्षणता बताना कठिन है ॥ ४५ ॥

**अलक्षता निर्वहणं लघुत्वं शब्दहीनता ।**
**शब्दे साध्ये तदाधिक्यमशैथिल्यमगाढता ॥ ४६ ॥**

अलक्षता, निर्वहण, लघुत्व, शब्दहीनता और शब्द की अधिकता, अशैथित्य एवं अगाढता यन्त्र के गुण होते हैं ।। ४६ ।।

**वहनीषु समस्तासु सौश्लिष्ट्यं चास्खलद्गति ।**
**यथाभीष्टार्थकारित्वं लयतालानुगामिता ॥ ४७ ॥**
**इष्टकालेऽर्थदर्शित्वं पुनः सम्यक्त्वसंवृतिः ।**
**अनुल्बणत्वंताद्रूप्यं दाढ्र्ये मसृणता तथा ॥ ४८ ॥**
**चिरकालसहत्वं च यन्त्रस्यैते गुणाः स्मृता ।**

सौम्य और बिना रुकावट के समस्त यन्त्र में गति, अभीष्ट के अनुसार उसका कार्य करना, लय ताल के अनुरूप उसकी अनुगामिता, जब चाहे तब उस यन्त्र का कार्य करना जब न चाहे तब न कार्य करना, अनुल्बणत्व, ताद्रूप्य, दृढ़ता एवं चिर काल तक उसका कार्य करते रहना—ये यन्त्र के गुण कहे गए हैं ।। ४७-४८ ।।

### तेषूत्कृष्टा गुणाः

**एकं बहूनि चलयेद् बहुभिश्चाल्यतेऽपरम् ॥ ४९ ॥**
**सुश्लिष्टत्वमलक्षत्वं यन्त्राणां परमो गुणः ।**

**यन्त्रों के उत्कृष्ट गुण**—एक यन्त्र का बहुतों को चलाना एवं बहुत यन्त्रों का परस्पर अन्य यन्त्रों को चलना, उनका सुश्लिष्टत्व एवं दिखाई न देना ये यन्त्रों के विशेष गुण कहे गए हैं ।। ४९-५० ।।

### यन्त्राणां विचित्राणि कर्माणि

**अथ कर्माणि यन्त्राणां विचित्राणि यथाविधिः ॥ ५० ॥**
**न विस्तरात्र संक्षेपात् साम्प्रतं संप्रचक्ष्महे ।**

**यन्त्रों के विचित्र कर्म**—अब यहाँ यन्त्रों के विचित्र कर्मों को न संक्षेप से और न विस्तार से कहते हैं—

### यन्त्रसाध्याः क्रियादयस्तद्विवरणं च

**कस्यचित् सा क्रिया साध्या कालः कस्यापि कस्यचित्॥ ५१ ॥**
**शब्दः कस्यापि चोच्छ्रायो रूपस्पर्शौ च कस्यचित् ।**
**क्रियास्तु कार्यस्य वशादनन्ताः परिकीर्तिताः ॥ ५२ ॥**

यन्त्रसाध्य क्रियाएँ एवं उनके विवरण—कोई एक क्रिया साधित की जाती है

तो उस क्रिया में कुछ समय लगता है । शब्द भी कुछ होते हैं और उसके उच्छ्राय (उतार-चढ़ाव) से रूप एवं स्पर्श से क्रिया उत्पन्न होती है । वस्तुतः कार्यवशाद् क्रिया अनन्त कही गई हैं ॥ ५१-५२ ॥

**क्रियानिष्पादनाधिष्ठानम्**

**तीर्यगूर्ध्वमधः पृष्ठे पुरतः पार्श्वयोरपि ।**
**गमनं सरणं पात इति भेदाः क्रियोद्भवाः ॥ ५३ ॥**

क्रिया निष्पादन का अधिष्ठान—तिरछा, ऊर्ध्व, अधः, पृष्ठ भाग में, सामने तथा दोनों अगल बगल, गमन, सरकना और गिर जाना यह क्रिया से उत्पन्न भेद हैं ॥ ५३ ॥

**कालो मुहूर्तकाष्ठाद्यैर्भिन्नो भेदैरनेकधा ।**
**शब्दो विचित्रः सुखदो रतिकृद् भीषणस्तथा ॥ ५४ ॥**
**उच्छ्रायस्तु जलस्य स्यात् क्वचिद् भूजेऽपि शस्यते ।**

काल—मुहुर्त एवं काष्ठा आदि भेद से अनेक भेद वाला काल कहा गया है । शब्द विचित्र, सुखद, रति उत्पन्न करने वाला और भयंकर होता है ॥ ५४ ॥

फौव्वारा आदि उच्छ्रय तो जल का होता है जो राजगृह में प्रशस्त माना जाता है ॥ ५५ ॥

**प्रकृतग्रन्थोक्तदिशा युक्त्या सम्यङ् निष्पादितैर्यन्त्रैः साध्यानां विचित्राणां दिङ्मात्रप्रदर्शनपरो निर्देशः**

**गीतं नृत्यं च वाद्यं च पटहो वंश एव च ॥ ५५ ॥**
**वीणा च कांस्यतालश्च तृमिला करटापि च ।**
**यत्किञ्चिदन्यदप्यत्र वादित्रादि विभाव्यते ॥ ५६ ॥**

गीत, नृत्य, वाद्य, पटह, वंश, वीणा, साँसे का ताल (मजीरा), तृमिला और करट भी जहाँ कहीं भी गाना बजाना होता है वहाँ इन वाद्य यन्त्रों का प्रयोग होता है ॥ ५५-५६ ॥

**समस्तमपि तद् यन्त्राज्जायते कल्पनावशात् ।**
**नृत्ये तु नाटकं चोक्षस्ताण्डवं लास्यमेव च ॥ ५७ ॥**
**राजमार्गश्च देशी च यन्त्रात् सर्वं प्रसिध्यति ।**
**तथा जात्यनुगाश्चेश विरुद्धा यास्तु जातितः ॥ ५८ ॥**
**ताः सर्वा अपि सिध्यन्ति सम्यग्यन्त्रस्य साधनात् ।**

सभी यन्त्रों का निर्माण कल्पना वशात् जैसा चाहते हैं कर लेते हैं । नृत्य में नाटक, ऊक्ष, ताण्डव, लास्य-नृत्त में राजमार्ग के अथवा देशी यन्त्रों की प्रसिद्धि होती है । जाति से जाति के अनुसार यदि विरुद्ध होता है तो वह सभी यन्त्र के साधन से ही सिद्ध किया जाता है ।। ५७-५९ ।।

**भूचराणां गतिर्व्योम्नि भूमौ व्योमचरागमः ॥ ५९ ॥**
**चेष्टितान्यपि मर्त्यानां तथा भूमिस्पृशामिव ।**
**जायन्ते यन्त्रनिर्माणाद् विविधानीप्सितानि च ॥ ६० ॥**

भूचारी जीव की गति आकाश में होती है और आकाश में गमन करने वाले पक्षिगण की गति भूमि पर यन्त्र से सम्भव होती है । मनुष्यों की अन्य चेष्टाएँ भी यन्त्र के निर्माण से (विविध इप्सितों को) पूर्ण होती हैं ।। ५९-६० ।।

**यथासुरा जिता देवैर्यथा निर्मथितोऽम्बुधिः ।**
**हिरण्यकशिपुर्दैत्यो नृसिंहेन हतो यथा ॥ ६१ ॥**

जिस प्रकार देवों के द्वारा असुर जीत लिए गए और समुद्र का मन्थन भी सम्भव हुआ, जैसे नृसिंह के द्वारा दैत्य हिरण्यकशिपु का वध हुआ उसी प्रकार यन्त्रों से सभी सम्भव है ।। ६१ ।।

**धावनं हस्तियुद्धं च गजानामगडोऽपि च ।**
**नाना प्रकार(रा) या चेष्टा नानाधारागृहाणि च ॥ ६२ ॥**

हाथियों का युद्ध और उनका दौड़ना, हाथियों को बेड़ी में बाँधना और भी नाना प्रकार की चेष्टाएँ तथा नाना प्रकार के धारागृह यन्त्रों द्वारा कल्पित होते हैं ।। ६२ ।।

**दोलाकेल्यो विचित्राश्च तथा रतिगृहाणि च ।**
**चित्रा सेन(ना) च कुट्यश्च स्वयंवाहकसेवकाः ॥ ६३ ॥**

झूला झूलने का खेल तथा विचित्र प्रकार के रतिगृह, विचित्र प्रकार की सेना एवं कुट्य और स्वयं कार्य करने वाले सेवक सभी कुछ यन्त्रों से कल्पित होते हैं ।। ६३ ।।

**सभाश्च विविधाकाराः सत्य मायाः प्रकल्पिताः ।**
**एवंप्रायाणि चान्यानि यन्त्रात् सिध्यन्ति कल्पनात् ॥ ६४ ॥**

विविध आकार की सभा और सत्य लगने वाला मायाजाल आदि सभी प्रकार के यन्त्रों को अपनी बुद्धि से बनाया जा सकता है ।। ६४ ।।

**तत्र प्रथमभूमिकात उपरिभूमिकासु पञ्चसु कल्पितासु प्रतिप्रहरमेकैक-भूमिकां प्रति यन्त्रेण शय्यायाः प्रसर्पणम्**

**विधाय भूमिकाः पञ्च शय्या त्वादिभुवि स्थिता ।**
**प्रतिप्रहरमन्यासु सर्पन्ती याति पञ्चमीम् ॥ ६५ ॥**
**एवंप्रायाणि चित्राणि सम्यक् सिध्यन्ति यन्त्रतः ।**

प्रथम मञ्जिल से ऊपर के मञ्जिलों में प्रति प्रहर एक एक मञ्जिल में यन्त्रों का प्रसर्पण—पाँच मञ्जिल की एक शय्या का निर्माण करे । एक के बाद एक प्रहर में एक-एक शय्या पाँचवीं मञ्जिल तक प्रसर्पण करती है । इस प्रकार से विचित्र प्रकार के यन्त्रों से कार्य सिद्ध किए जाते हैं ॥ ६५-६६ ॥

**पुत्रिकया नाडीप्रबोधनम्**

**क्रमेण त्रिशतावर्तं स्थाले दन्ता भ्रमन्त्यसौ ॥ ६६ ॥**
**तन्मध्ये पुत्रिका क्लृप्ता प्रति नाडिं प्रबोधयेत् ।**

पुत्तलिकाओं द्वारा नाडी का प्रबोधन (जगाना)—एक थाली में क्रमशः तीन सौ हाथी गोलाई में घूमते हैं और उनके बीच में एक पुत्तलिका रहती है जो नाड़ी का प्रबोधन करती है ॥ ६६-६७ ॥

**तोये वह्निदर्शनादीन्यत्यद्भुतानि यन्त्रकार्याणि**

**वह्नेश्च दर्शनं तोये वह्निमध्याज्जलोद्गतिः ॥ ६७ ॥**
**अवस्तुतोऽपि वस्तुत्वं वस्तुतोऽपि तथान्यथा ।**
**निःश्वासेन वियद् याति श्वासेनायाति मेदिनीम् ॥ ६८ ॥**

जल में अग्नि दिखना आदि अत्यन्त अद्भुत यन्त्रों की प्रकल्पना—अग्नि के मध्य में जल दिखाई देना और अग्नि में से जल का स्रोत निकलते हुए दिखाई देना यन्त्र से सम्भव है । वस्तु का समक्ष में रहकर भी वस्तु का न होना, निःश्वास (फूँक मारने) से ही आकाश में वस्तु को उड़ा देना और श्वास से ही उसे पृथ्वी पर खींच लेना—यह यन्त्र से सम्भव है ॥ ६७-६८ ॥

**क्षीरोदमध्यगा शय्या प्रतीष्टाधः फणाभृता ।**

**सूर्यादिग्रहगतिप्रदर्शनपरं गोलभ्रमणम्**

**गोलश्च सूति(चि)विहितः सूर्यादीनां प्रदक्षिणम् ॥ ६९ ॥**

क्षीर सागर के मध्य शय्या का सर्पों के फणों से आच्छादित होना और गोल पृथ्वी के चारों ओर सूर्य आदि का प्रदक्षिण क्रम से घूमना तथा रात-दिन घूमते हुए ग्रहों की गति एवं उनका दिखाई देना यन्त्र से सम्भव है ॥ ६९-७० ॥

**परिभ्राम्यत्यहोरात्रं ग्रहाणां दर्शनं गतिम् ।**

**दारवस्य पुरुषस्यैकनाडिकयैकयोजनगमनम्**

**गजादिरूपे रथिकरूपतां गमितः पुमान् ॥ ७० ॥**
**भ्रान्त्वा नाडिकया तस्याः पर्यन्ते हन्ति भो(यो)जनम् ।**

हाथी के रूप में मनुष्य का रथिक रूपता का प्राप्त होना नाद के चारों ओर घूमते हुए भोजन का खान यन्त्र से हो सकता है ॥ ७०-७१ ॥

**तालगत्यनुसारेण नृत्यन्त्या पुत्रिकया दीपे क्षीणक्षीणतैलप्रक्षेपः**

**दीपिका पुत्रिका क्लृप्ता क्षीणं क्षीणं प्रयच्छति ॥ ७१ ॥**
**दीपे तैलं प्रनृत्यन्ती तालगत्या प्रदक्षिणम् ।**

दीप लिए हुए पुत्तलिका का धीरे धीरे एक दूसरे को देना दीप के तेल में नाचती हुई ताल की गति के अनुसार घूमती हुई पुतली बनाना यन्त्र से सम्भव है ॥ ७१-७२ ॥

**यन्त्रहस्तिनः प्रदीयमानभूरिवारिपानम्**

**यावत् प्रदीयते वारि तावत् पिबति सन्ततम् ॥ ७२ ॥**
**यन्त्रेण कल्पितो हस्ती न तद् गच्छत् प्रतीयते ।**

जितना भी पानी दिया जाए सब पानी पीते जाने का यन्त्र एवं यन्त्र से बना हाथी किन्तु वह जाता हुआ दिखाई नहीं देता ॥ ७२-७३ ॥

**यन्त्रशुकानां तालगत्या गाननर्तनादीनि**

**शुकाद्याः पक्षिणः क्लृप्तास्तालस्यानुगमान्मुहुः ॥ ७३ ॥**
**जनस्य विस्मयकृतो नृत्यन्ति च पठन्ति च ।**

तोते आदि पक्षियों का ताल के अनुसार अनुगमन (चलना) और उनके द्वारा नृत्य करना तथा पढ़ना मनुष्यों को विस्मय में डाल देता है ॥ ७३-७४ ॥

**पुत्रिकाणां गजानां तुरगादीनां च तालगत्या वलनवर्तननर्तनादीनि**

**पुत्रिका वा गजेन्द्रो वा तुरगो मर्कटोऽपि वा ॥ ७४ ॥**
**वलनैर्वर्तनैर्नृत्यंस्तालेन हरते मनः ।**

पुत्तलिका हो या गजेन्द्र हो, घोड़ा हो या बन्दर हो, उनका अपने-आप हिलना डुलना और ताल के अनुसार नृत्य करना राजा के मन का हरण कर लेता है ॥ ७४-७५ ॥

**वापीकूपादितः क्षेत्रेषु यन्त्रेण जलानयनपनयनवैचित्र्यम्**

**येनैव वर्त्मना क्षेत्रं ध्रियते तेन तत्पयः ॥ ७५ ॥**
**यात्यायाति पुनस्तद्वद् गर्तात् पुष्करिणीष्वपि ।**

जिस मार्ग से पानी आ रहा है उसी मार्ग से उस पानी का चले जाना अर्थात् गड्ढे से नदी का निकलना और पुनः उसी में उसका समा जाना यन्त्र से सम्भव है ॥ ७५-७६ ॥

**कृत्रिमाणां गजादि रूपाणां यथेच्छं निर्गमनधावनयुद्धकरणादिकाश्चेष्टाः**

**फलके कानि(?)तिष्ठन्ति धावन्त्यनुमतानि च ॥ ७६ ॥**
**घातां(तं) ददति युध्यन्ते निर्यान्त्यश्रमनावृतम् ।**

फलक पर कुछ लोग बैठे हैं, किन्तु कुछ लोग एक के पीछे एक दौड़ रहे हैं। एक दूसरे को घूँसा दे रहे हैं, युद्ध भी कर रहे हैं और बिना श्रम के पुनः निकल आ रहे हैं ॥ ७६-७७ ॥

**नृत्यन्ति गायन्ति तथा वंशादीन् वादयन्ति च ॥ ७७ ॥**
**निरुद्धमुक्तस्य वशान्मरुतो यन्त्रभागिभिः ।**
**याश्चेष्टा दिव्यमानुष्यस्ता एवात्र न केवलम् ॥ ७८ ॥**
**दुष्करं यद्यदन्यच्च तत्तद् यन्त्रात् प्रसिध्यति ।**

एक ही फलक पर नृत्य कर रहे हैं और कुछ बाजा बजा रहे हैं कुछ बाँसुरी आदि बजा रहे हैं और कुछ गायन कर रहे हैं । रुके हुए किन्तु उन्मुक्त होकर वायु के कारण यन्त्र के ये पात्र अपना अपना कार्य सम्पादन करते हैं । यहाँ पर जो दिव्य एवं मानुष चेष्टाएँ हैं वही यहाँ पर हो ऐसा नहीं है बल्कि जो अन्य भी दुष्कर कार्य हैं वह भी यन्त्र द्वारा कल्पित हो सकता है ॥ ७७-७९ ॥

**स्वबुद्धिपरिकल्पितानामुक्तानामेषामन्येषां च यन्त्राणां घटनारीतिप्रदशन प्रति ग्रन्थकर्तुरप्रवृत्तौ कारणम्**

**यन्त्राणां घटना नोक्ता गुप्त्यर्थं नाज्ञतावशात् ॥ ७९ ॥**
**तत्र हेतुरयं ज्ञेयो व्यक्ता नैते फलप्रदाः ।**

यन्त्रों को बनाने की विधि यहाँ नहीं कही गई है । अज्ञानवश ऐसा नहीं किया गया है किन्तु इन यन्त्रों को गुप्त रक्खा जा सके इसलिए ऐसा किया गया है । अतः उसमें हेतु यही जानना चाहिए कि यदि इनको बनाने की विधि व्यक्त कर दी गई तो ये फलप्रद नहीं होंगे ॥ ७९-८० ॥

**कथितान्यत्र बीजानि यन्त्राणां घटना न यत् ॥ ८० ॥**
**तस्माद् व्यक्तीकृतेष्वेषु न स्यात् स्वार्थो न कौतुकम् ।**

यन्त्रों के बीजों को यहाँ पर जो कह दिया गया है और उनकी विधि नहीं कही गई है इससे कौतूहल जाग्रत करना ही मेरा स्वार्थ है ॥ ८०-८१ ॥

**वस्तुतः कथितं सर्वं बीजानामिह कीर्तनात् ॥ ८१ ॥**

**पुरातनोक्तदिशा वक्ष्यमाणानां यन्त्राणां सुग्रहाय बीजभूतानां भूतानां पुनः स्मारणम्**

**अभ्यूह्यं स्वधिया प्राज्ञैर्यन्त्राणां कर्म यद् यथा ।**
**यन्त्राणि यानि दृष्टानि कीर्तितान्यत्र तान्यपि ॥ ८२ ॥**
**नन्द्यानि यस्मात् तान्यातो विज्ञेयान्युपदेशतः ।**
**एतत् नवबुद्ध्यैवास्माभिः समग्रमपि कल्पितम् ।**
**अग्रतश्च पुनर्ब्रूमः कथितं यत् पुरातनैः ॥ ८३ ॥**

वस्तुतः यहाँ पर सभी बीजों (खिलौने रूप यन्त्रों) को बता देने से ही उनका बोध हो जाता है । प्रज्ञावान् कारीगर के द्वारा अपनी बुद्धि से उनके कर्म को ऊह करके उन्हें बना लेना चाहिए । ये यन्त्र जो यहाँ बताए गए हैं वह अन्यत्र भी प्रदर्शित हुए हैं । जो नहीं कहा गया है उसे उपदेश (गुरु) से समझ लेना चाहिए। यहाँ पर सभी कुछ नवीन यन्त्र मेरे द्वारा बनाए गए हैं और आगे उन यन्त्रों को भी मैं कहता हूँ जिन्हें पुरातन कारीगरों ने बनाए हैं ॥ ८१-८३ ॥

**यन्त्रस्य पुरातनसिद्धान्तकथनम्**

**बीजं चतुर्विधमिह प्रवदन्ति यन्त्रे-**
**ष्वम्भोग्निभूमिपवनैर्निहितैर्यथावत् ।**
**प्रत्येकतो बहुविधं हि विभागतः स्या-**
**न्मिश्रैर्गुणः पुनरिदं गणनामपास्येत् ॥ ८४ ॥**

यन्त्रों में निहित रहने वाले चार प्रकार के बीज वैज्ञानिकों ने इस प्रकार कहे है—१. जल, २. अग्नि, ३. भूमि एवं ४. पवन । इन सभी बीजों में अलग-अलग बहुत से गुण विद्यमान हैं । जब ये परस्पर एक-दूसरे से मिल जाते हैं तो भला इनके गुणों की गणना ही कैसे हो सकती है ॥ ८४ ॥

**किमेतस्मादन्यद् भवति भुवने चित्रमपरं**
**किमन्यद् वा तुष्ट्यै भवति किमु वा कौतुककरम् ।**

**किमन्यद् वा कीर्त्तेर्भवनमपरं कामसदनं**
**किमस्मात् पुण्यं वा किमिव च परीतापशमनम् ॥ ८५ ॥**

इन यन्त्रों के अतिरिक्त संसार में और क्या अद्‌भुत यन्त्र हो सकता है, इनके अतिरिक्त सन्तुष्ट करने वाला और कौतूहल उत्पन्न करने वाला भला कौन यन्त्र हो सकता है । इससे बढ़कर कीर्त्ति क्या हो सकती है और मदनागार इससे बढ़कर संसार में कोई अन्य क्या होगा? इससे बढ़कर पुण्य क्या है? और इससे बढ़कर आनन्द क्या हो सकता है ॥ ८५ ॥

**एतादृशविचित्र नाना यन्त्रनिर्माणप्रावीण्य सामग्री**
**स्वनोद्‌गारियन्त्रद्वयघटना**

**एतेऽत्यर्थं प्रीतिदा बीजयोगाः**
**सञ्जायन्ते योजिताः सूत्रधारैः ।**
**भ्रान्त्या नान्यश्चित्रकृद् दारुक्लृप्तं**
**चक्रं दोलाद्यं पुनः पञ्चमं तत् ॥ ८६ ॥**

इस प्रकार ये बीज योग अत्यन्त प्रसन्नता प्रदान करने वाले कहे गए हैं जिन्हें सूत्रधार (स्थपति, कारीगर) द्वारा संयोजित करवाना चाहिए । इधर उधर घूमने वाले अन्य भी लकड़ी के अद्‌भुत यन्त्र सूत्रधार द्वारा बनवाए जा सकते हैं । चरखी और झूला आदि पाँच प्रकार के यन्त्रों का निर्माण भी कारीगर द्वारा हो सकता है ॥ ८६ ॥

**पारम्पर्यं कौशलं सोपदेशं**
**शास्त्राभ्यासो वास्तुकर्मोद्यमो धीः ।**
**समग्रीयं निर्मला यस्य सोऽस्मि-**
**श्चित्राण्येवं वेत्ति यन्त्राणि कर्तुम् ॥ ८७ ॥**

जिस बुद्धिमान् वास्तुविद् में शास्त्र का अभ्यास होता है और गुरु परम्परा से कर्म में कौशल प्राप्त होता है । जिसका समग्र ज्ञान निर्मल होता है वही इन चित्र विचित्र यन्त्रों के निर्माण में दक्ष होता है ॥ ८७ ॥

**चित्रैर्युक्तं ये गुणैः पञ्चरूपं**
**जानन्त्येनं यन्त्रशास्त्राधिकारम् ।**
**ये वा कृत्स्नं योजयन्तेऽत्र सम्यक्**
**तेषां कीर्त्तिर्द्यां भुवं चावृणोति ॥ ८८ ॥**

चित्र विचित्र यन्त्र के पञ्च रूप गुणों से जो कारीगर अवगत होता है वही इस यन्त्रशास्त्र का अधिकारी होता है । अथवा जो सम्यक् रूप से सभी यन्त्रों की योजना करते हैं उन स्थपति की कीर्त्ति इस पृथ्वी पर फैली रहती है ॥ ८८ ॥

**अङ्गुलेन मितमङ्गुलपादेनो**
**च्छ्रितं द्विपुटकं तनुवृतम् ।**
**संविधेयमृजु मध्यगरन्ध्रं**
**श्लिष्टसन्धि दृढताम्रमयं तत् ॥ ८९ ॥**
**दारवेषु विहगेषु तदन्तः**
**क्षिप्तमुद्गतसमीरवशेन ।**
**आतनोति विचलन्मृदुशब्दं**
**शृण्वतां भवति चित्रकरं च ॥ ९० ॥**

एक अंगुल से भी कम पाद बनाकर दो पुट का शरीर बनावे मध्य में रन्ध्र रहे और श्लिष्ट सन्धि का दृढ ताम्बे का एक पक्षी बनावे । पेड़ पर बैठे उन पक्षियों का मृदुशब्द वायु के जाने से कूजन उत्पन्न करता है जो सुनने वाले को अत्यन्त विचित्र का प्रतीत होता है ॥ ८९-९० ॥

**सुश्लिष्टखण्डद्वितयेन कृत्वा**
**सरन्ध्रमन्तर्मुरजानुकारम् ।**
**ग्रस्तं तथा कुण्डलयोर्युगेन**
**मध्ये पुटं तस्य मृदु प्रदेयम् ॥ ९१ ॥**
**पूर्वोक्तयन्त्रे विधिनोदरेऽस्य**
**क्षिप्तेऽथ शय्यातलसंस्थमेतत् ।**
**ध्वनिं ततः सञ्चलनादनंग-**
**क्रीडारसोल्लासकरं करोति ॥ ९२ ॥**

मुरज वाद्य के अनुकृति का एक दूसरे से मिला हुआ दो खण्ड करके उसके अन्दर छिद्र करे । दो कुण्डल से उसे नद्ध करके उसके मध्य में एक मृदु थपथपी दे । यह पूर्वोक्त यन्त्र शय्या पर इधर उधर फेंकने से काम क्रीडा की उल्लासकर ध्वनि (सीत्कार) निकालता है ॥ ९१-९२ ॥

**अस्मिञ् शय्यातलविनिहिते मुञ्चति व्यक्तरागं**
**चित्राञ् शब्दान् मृगशिशुदृशां यान्ति(ति) भीत्येव मानः ।**
**किञ्चैतासां दयितमभितो निर्भरप्रेमभाजां**

**प्रौढिं गच्छन्त्यधिकमधिकं मन्मथक्रीडितानि ॥ ९३ ॥**

इस (काम क्रीडा की) शय्या पर यह यन्त्र अनुराग व्यक्त करता हुआ ऐसा विचित्र सा मृग शिशु जैसा शब्द करता है कि मानवती नायिका भय के कारण अपना मान छोड़ देती है । प्रेम में आसक्त चित्त वाले नायक के लिए इससे बढ़कर क्या होगा कि मन्मथ क्रीड़ा में और अधिक से अधिक प्रौढि (नायिका का अनुराग) बढ़ा देता है ॥ ९३ ॥

पटहमुरजादिस्वनोद्गारियन्त्राणां तत्त्वम्

**पटहमुरजे वेणुः शंखो विपञ्च्यथ कहला**
**डमरुटिविले वाद्यातोद्यान्यमून्यखिलान्यपि ।**
**मधुरमधिकं यच्चित्रं च ध्वनिं विदधात्यलं**
**तदिह विधिना रुद्धोन्मुक्तानिलस्य विजृम्भितम् ॥ ९४ ॥**

पटह, मुरज, वेणु, शंख, विपञ्ची वीणा, कहल, डमरू और टिविल आदि वाद्य तथा आतोद्य आदि सभी संगीत के यन्त्र अत्यन्त मधुर और अधिक जो विचित्र सा जान पड़ता है, ऐसी ध्वनि निकालते हैं वे यन्त्र यहाँ पर रुद्ध एवं उन्मुक्त वायु के द्वारा बजाए जाते हैं ॥ ९४ ॥

अम्बरचारित्रविमानघटनाकथनम्

**लघुदारुमयं महाविहंगं दृढसुश्लिष्टतनुं विधाय तस्य ।**
**उदरे रसयन्त्रमादधीत ज्वलनाधारमधोऽस्य चाति(ग्नि) पूर्णम् ॥ ९५ ॥**

एक बहुत बड़ा सा विहंग (परयुक्त चिड़िया) हल्की लकड़ी से बनाई जाती है । उसके सभी अंग प्रत्यंग एक दूसरे से परस्पर सुश्लिष्ट रहते हैं । फिर उस लकड़ी की चिड़िया के उदर में रस (= पारद) यन्त्र रख देते हैं । उसके आधार में फिर अग्नि नीचे रख देते हैं ॥ ९५ ॥

**तत्रारूढः पुरुषस्तस्य पक्षद्वन्द्वोच्चालप्रोज्झितेनानिलेन ।**
**सुप्तस्वान्तः पारदस्यास्य शक्त्या चित्रं कुर्वन्नम्बरे याति दूरम् ॥९६॥**

उस हल्की लकड़ी की चिड़िया पर एक पुरुष चढ़ जाता है और उसके दोनों पंखों को चालित कर देता है जिससे वायु में वह उड़ने लगता है । वस्तुत पहले से भीतर रक्खे गए पारद की शक्ति से विचित्र रूप से वह आकाश में दूर तक चला जाता है ॥ ९६ ॥

**इत्थमेव सुरमन्दिरतुल्यं सञ्चलत्यलघु दारुविमानम् ।**
**आदधीत विधिना चतुरोऽन्तस्तस्य पारदभृतान् दृढकुम्भान् ॥ ९७ ॥**

अयःकपालाहितमन्दवह्निप्रतप्ततत्कुम्भभुवा गुणेन ।
व्योम्नो झगित्याभरणत्वमेति सन्तप्तगर्जद्रसराजशक्त्या ॥ ९८ ॥

दुष्टगजोच्चाटनाय रसयन्त्रेण सिंहनादविधानप्रकारः

वृत्तसन्धितमथायसयन्त्रं तद् विधाय रसपूरितमन्तः ।
उच्चदेशविनिधापिततप्तं सिंहनादमुरजं विदधाति ॥ ९९ ॥
स कोऽप्यस्य स्फारः स्फुरति नरसिंहस्य महिमा
पुरस्ताद् यस्यैता मदजलमुचोऽपि द्विपघटाः ।
मुहुः श्रुत्वा श्रुत्वा निनदमपि गम्भीरविषमं
पलायन्ते भीतास्त्वरितमवधूयांकुशमपि ॥ १०० ॥

दासादिपरिजनवर्गैर्विना तत्कृत्यानां सर्वेषां यथावन्निर्वहणाय कल्पितस्य स्त्रीपुरुषप्रतिमायन्त्रस्यघटना

दृग्ग्रीवातलहस्तप्रकोष्ठबाहूरुहस्तशाखादि ।
सच्छिद्रं वपुरखिलं तत्सन्धिषु खण्डशो घटयेत् ॥ १०१॥
श्लिष्टं कीलकविधिना दारुमयं सृष्टचर्मणा गुप्तम् ।
पुंसोऽथवा युवत्या रूपं कृत्वातिरमणीयम् ॥ १०२ ॥
रन्ध्रगतैः प्रत्यंग विधिना नाराचसंगतैः सूत्रैः ।
ग्रीवाचलनप्रसरणविकुञ्चनादीनि विदधाति ॥ १०३ ॥
करग्रहणताम्बूलप्रदानजलसेचनप्रमाणा(णामा)दि ।
आदर्शप्रतिलोकनवीणावाद्यादि च करोति ॥ १०४ ॥
एवमन्यदपि चेदृशमेतत् कर्म विस्मयविधायि विधत्ते ।
जृम्भितेन विधिना निजबुद्धेः कृष्टमुक्तगुणचक्रवशेन ॥ १०५ ॥

अनभिमतजनप्रवेशनिरोधनाय द्वारदेशे
स्थापनीयं द्वारपालयन्त्रम्

पुंसो दारुजमूर्ध्वं रूपं कृत्वा निकेतनद्वारि ।
तत्करयोजितदण्डं निरुणद्धि प्रविशतां वर्त्म ॥ १०६ ॥

लकड़ी का एक पुतला द्वार पर चौकीदार का रूप बनाकर रहता है जो अपने हाथ के डण्डे से अन्दर प्रवेश करने वालों को रोकता है ॥ १०६ ॥

निशि प्रविशतश्चौरस्य प्रसभघातनाय स्थापनीयं योधयन्त्रम्

खड्गहस्तमथ मुद्गरहस्तं कुन्तहस्तमथवा यदि तत् स्यात् ।

तन्निहन्ति विशतो निशि चौरान् द्वारि संवृतमुखं प्रसभेन ॥१०७॥

दुर्गगुप्त्यै क्रीडाद्यर्थे च युक्त्या योजितैर्यन्त्रैश्चापशतघ्न्यादि तत्तद्वस्तुविधानवचनम्

ये चापाद्या ये शतघ्न्यादयोऽस्मि-
न्नुष्ट्र ग्रीवाद्याश्च दुर्गस्य गुप्त्यै ।
ये क्रीडाद्याः क्रीडनार्थं च राज्ञां
सर्वेऽपि स्युर्योगतस्तेगुणानाम् ॥ १०८ ॥

वारियन्त्रकथनम्

इदानीं प्रक्रमायातं वारियन्त्रं प्रचक्ष्महे ।
क्रीडार्थं कार्यसिद्ध्यै च चतुर्धा तद्गतिं विदुः ॥ १०९ ॥

तत्र पातयन्त्रस्वरूपम्

निम्नगं भवति द्रोणीदेशादूर्ध्वस्थिताज्जलम् ।
यत्र तत् पातयन्त्रः स्याद् वाटिकादिप्रयोजनम् ॥ ११० ॥

उच्छ्रायसमपातयन्त्रस्वरूपम्

उच्छ्रायसमपाताख्यं यत्रोर्ध्वा नाडिका पयः ।
जलाधारगुणान्मुञ्चेदधस्तात् समनाडिका(कम्) ॥ १११ ॥
यत्र पातसमुच्छ्रायं पतित्वोच्छ्रायतो जलम् ।
तिर्यग् गत्वा प्रयात्यूर्ध्वं सच्छिद्रस्तम्भयोगतः ॥ ११२ ॥

पातसमाच्छ्राययन्त्रस्वरूपम्

पतित्वोच्छ्रायतस्तोयं तिर्यगूर्ध्वोर्ध्वमेत्यथ ।
सच्छिद्रस्तम्भयोगेन तत् स्यात् पातसमोच्छ्रयम् ॥ ११३ ॥

उच्छ्रययन्त्रस्वरूपम्

वाप्यां वापि च कूपे विधानतो दीर्घिकादिका विहिता ।
यत्रोर्ध्वमम्बु गमयति तदिहोच्छ्रयसंज्ञितं कथितम् ॥ ११४ ॥
दारुजमिभस्य रूपं यत् सलिलं पात्रसंस्थितं पिबति ।
तन्माहात्म्यं निगदितमेतस्योच्छ्रायतुल्यस्य ॥ ११५ ॥
सलिलं सुरंगदेशानीतं निम्नेन वर्त्मना दूरे ।
अद्भुतमम्भस्थानं तदिह समोच्छ्रायतः कुरुते ॥ ११६ ॥

### धारागृहादिवारिगृहपञ्चकम्

धारागृहमेकं स्यात् प्रवर्षणाख्यं ततो द्वितीयं च ।
प्राणालं जलमग्नं नन्द्यावर्तं तथान्यदपि ॥ ११७ ॥

### १. तत्र धारागृहविधानम्

प्राकृतजनार्थमेतन्न विधेयं योग्यमेतदवनिभुजाम्।
मंगल्यानां सदनं दिव्यमिदं तुष्टिपुष्टिकरम् ॥ ११८ ॥
सलिलाशयस्य सविधे कस्याप्याश्रित्य शोभनं देशम् ।
यन्त्रोत्सेधाद् द्विगुणा त्रिगुणा वा नाडिका कार्या ॥ ११९ ॥
जलनिर्वाहसहासावन्तर्मसृणा बहिश्च नीरन्ध्रा ।
निर्व्यूढाम्भसि तस्यां शुभे मुहूर्त्ते गृहं कार्यम् ॥ १२० ॥
सर्वाभिरोषधीभिर्युक्तं सहितरण्यपूर्णकुम्भैश्च ।
सुविचित्रगन्धमाल्यं विनादितं ब्रह्मघोषेण ॥ १२१ ॥
रत्नोद्भावैर्विचित्रैः स्तम्भैर्युक्तं हिरण्यघटितैर्वा ।
रजतोद्भवैः कदाचित् सुरदारुसमुद्भवैरथवा ॥ १२२ ॥
श्रीखण्डोत्थैरथवा सालकमुख्यप्रशस्तवृक्षोत्थैः ।
शतसंख्यैर्द्वात्रिंशत्संख्यैर्यदि वापि षोडशभिः ॥ १२३ ॥
अथवा चतुस्समन्वितविंशतिसंख्यैर्दिनेशसंख्यैर्वा।
भूषितमतिरमणीयैश्चतुर्भिरपि वा विधातव्यम् ॥ १२४ ॥
प्राग्ग्रीवैरतिचित्रैः शालैर्जालैर्विभूषितं विविधैः ।
वेदीभिः परिकरितं कपोतपालीभिरभिरामम् ॥ १२५ ॥
रमणीयसालभञ्जिकमनेकविधयन्त्रशकुनिकृतशोभम् ।
मिथुनैश्च वानराणां जम्भकनिवहैश्च नैकविधैः ॥ १२६ ॥
विद्याधरसिद्धभुजंगकिन्नरैश्चारणैश्च रमणीयम् ।
नृत्यद्भिः परमग(गु)णैः शिखण्डिभिर्मण्डितोद्देशम्॥१२७॥
कल्पतरुभिर्विचित्रैश्चित्रलतावल्लिगुल्मसंछन्नम् ।
परपुष्टषट्पदालीमरालमालामनोहारि ॥ १२८ ॥
प्रवहत्सकलस्रोतः सुश्लिष्टनिविष्टनाडिकं मध्ये ।
सच्छिद्रनाडिकयुतं नानाविधरूपरमणीयम् ॥ १२९ ॥
सुश्लिष्टनाडिकाग्रे स्तम्भतुलाभित्तिसंश्रिते परितः।
सम्यक् कृत्वा दृढतरविलेपनं वज्रलेपाद्यैः ॥ १३० ॥

लाक्षासर्जरसदृषन्मेषविषाणोत्थचूर्णसंमिश्रम् ।
अतसीकरञ्जतैलप्रविगाढो वज्रलेपः स्यात् ॥ १३१ ॥
दृढसन्धिबन्धहेतोः स तत्र देयो द्विशः कदाचिद् वा ।
शणवल्कश्लेष्मातकसिक्थकतैलैः प्रलेपश्च ॥ १३२ ॥
उच्छ्रययन्त्रेणैतद् भ्रान्तजलेनाथ तदभितः कृत्वा ।
चित्रानुपातयुक्तं प्रदर्शयेन्नृपतये स्थपतिः ॥ १३३ ॥
कार्याण्यस्मिन् करिणां मिथुनान्यभितोऽम्बुकेलियुक्तानि ।
अन्योऽन्यपुष्करोज्झितसीकरभयपिहितनयनानि ॥ १३४ ॥
वर्षानुकृतं चास्मिन् प्रीतिमति प्रतिमंगजो वीक्ष्य ।
दृक्कटमेहनहस्तैर्मदमिव मुञ्चन् जलं कार्यः ॥ १३५ ॥
स्तनयोर्युगेन सृजती जलधारे तत्र कापि कार्या स्त्री ।
आनन्दाश्रुलवानिव सलिलकणान् पक्ष्मभिः काचित् ॥ १३६ ॥
नाभिह्रदनदिकामिव विनिर्गतां कापि बिभ्रती धाराम् ।
काप्यङ्गुलीनखांशुभिरिव योषित् सिञ्चती कार्या ॥ १३७ ॥
एवम्प्रायांश्चित्रान् स्वभावचेष्टान् बहूंश्च रमणीयान् ।
क्षोभान् विधाय कुर्यादाश्चर्यं नरपतेः स्थपतिः ॥ १३८ ॥
मध्ये तस्य विधेयं सिंहासनममलहेममणिघटितम् ।
तत्रासीदेन्नरपतिरवनिपतिः श्रीपतिर्देवः ॥ १३९ ॥
स्नायात् कदाचिदस्मिन् मंगलगीतैर्विवर्धितानन्दः ।
वादित्रनाट्यनिपुणैर्निषेव्यमाणः सुरेन्द्र इव ॥ १४० ॥
य एतस्मिन् गाढग्लपितघनघर्मव्यतिकरे
शुचौ धाराधाम्नि स्फुटसलिलधारे नरपतिः ।
सुखेनास्ते पश्यन् विविधजलशिल्पानि स भवे-
न्न मर्त्यः किन्त्वेष क्षितिकृतनिवासः सुरपतिः ॥ १४१ ॥

२. प्रवर्षणगृहविधानम्

जलदकुलाष्टकयुक्तं पूर्ववदन्यद् गृहं समारचयेत् ।
वर्षद्धारानिकरैः प्रवर्षणाख्यां तदाप्नोति ॥ १४२ ॥
प्रतिकुलमस्मिन् कार्या दिव्यालंकारधारिणः पुरुषाः ।
विधिना त्रयः सुरूपाश्चत्वारः सप्त वा सुदृढाः ॥ १४३ ॥
यन्त्रेण समोच्छ्रायेण तांश्चतुर्थेन वा ततः पुरुषान् ।

कृत्वा सवक्रनालानम्भोभिः पूरयेद् विमलैः ॥ १४४ ॥
सलिलप्रवेशरन्ध्राण्यखिलानि पिधाय तत्र पुरुषाणाम् ।
अंगानि वारिमोक्षाण्यखिलान्यथ मोचयेत् तेषाम् ॥ १४५ ॥
सलिलं सवक्रनालं द्वारप्रतिरोधमोचनैः पुरुषाः ।
मुञ्चन्ति स्वेच्छममी विचित्रपातेन चित्रकरम् ॥ १४६ ॥
इत्थमिमान् वारिधरान् सामस्या(स्त्या)द्द्व्यन्तरेण वा सलिलम् ।
त्र्यन्तरतो वा स्वेच्छं प्रवर्षयेदतिमहच्चित्रम् ॥ १४७ ॥
इदं नानाकारं कुलभवनमाद्यं रतिपते-
र्निवासश्चित्राणामनुकरणमेकं जलमुचाम् ।
पयःपातैर्ग्रीष्मे रविकरपरीतापशमनं
न केषामत्यर्थं भवति नयनानन्दजननम् ॥ १४८ ॥

### ३. प्राणालगृहविधानम्

एकेनाथ चतुर्भिः स्तम्भैरष्टभिरथार्कसंख्यैर्वा ।
षोडशभिर्वा कुर्यान्मनोहरं गृहमिह द्वितलम् ॥ १४९ ॥
भद्रैर्युतं चतुर्भिश्चतुरस्रं सर्वभित्तिसंयुक्तम् ।
ईलीतोरणयुक्तं कर्तव्यं पुष्पकाकारम् ॥ १५० ॥
तस्योपरि मध्यगता प्रांगणवापीदृढा विधातव्या ।
शतपत्रविहितभूषा तन्मध्ये कर्णिका कार्या ॥ १५१ ॥
तत्कोणेषु चतुर्ष्वपि रमणीया दारुदारिकाः कार्याः ।
मध्याम्बुजनिहितदृशः सालंकाराः सश्रृंगाराः ॥ १५२ ॥
पूर्वोक्तयन्त्रयोगात् पद्मासीने वसन्धुराधिपतौ ।
भृङ्गारामलवारिभिरङ्गणवापीं भ्रियाच्च ततः ॥ १५३ ॥
तामिति भृत्वा वापीं तत्सलिलं तदनुपट्टगर्भगतम् ।
छाद्यस्तु गन्धरोध्रेष्वतिरोहित सर्वतो नियतम् ॥ १५४ ॥
मुखपट्टसमुत्कीर्णे रूपैश्चित्रैर्मनोरमैरखिलैः ।
अंगैर्वारि विमुञ्चति नासास्य-श्रवणनेत्राद्यैः ॥ १५५ ॥
प्राणालाख्यं धाराभवनमिदमत्यद्भुततरं
स्थितिं धत्ते यस्य क्षितिपतिलकस्याङ्गणभुवि ।
करोत्येतद् वेत्थं स्थपतिरपि बुद्ध्या चतुरया
जात्येतौ द्वावप्यधि[illegible]हनीयौ कृतधियाम् ॥ १५६ ॥

वापीयन्त्रकथनम्

चतुरस्त्रातिगम्भीरा वापी कार्या मनोरमा सुदृढा ।
गर्भगतं गृहमस्याः कर्त्तव्यं लिप्तसन्धि ततः ॥ १५७ ॥
विहितप्रवेशनिर्गति सुरंगयाधो निवेशितद्वारम् ।
विदधीत चारुरूपैः प्रवर्षकैर्व्याप्तमुपरिष्टात् ॥ १५८ ॥
चित्राध्यायोदितवर्त्मना ततोऽलंकृतं च चित्रेण ।
तस्य विधेयं मध्यं सलिलाधिपवाससंकाशम् ॥ १५९ ॥
ऊर्ध्वविनिर्गमिताब्जैर्नालैस्तत्पट्टकन्दकोद्धृतैः ।
सच्छिद्रकर्णिकागतदिनकरकरनिर्मितोद्द्योतम् ॥ १६० ॥

४. जलमग्नगृहविधानम्

आपूरयेत् ततोऽनु च पाताम्बुभिरमलकमलपर्यन्तम् ।
विधिनामुनैव सम्यक् प्रविधाय मनोरमं भवनम् ॥ १६१ ॥

५. नन्द्यावर्तगृहविधानम्

नानारूपकयुक्त्याउ(व्यु)परचिततमङ्गतोरणद्वारम् ।
शालाभिरायताभिश्चतसृष्वपि दिक्षु कृतशोभम् ॥ १६२ ॥
कृत्रिमशफरीमकरीपक्षिभिरपि चाम्बुसम्भवैर्युक्ताम् ।
कुर्यादम्भोजवतीं वापीमाहार्ययोगेन ॥ १६३ ॥
सामन्तमुख्यपुरुषा राजाज्ञालब्धसंश्रयास्तत्र ।
परराष्ट्रागतदूतास्तिष्ठेयुर्निहितमिह निभृताः ॥ १६४ ॥
अथ स यथाविधि सलिलक्रीडां पूर्वोक्तमार्गरूपाणाम् ।
दृष्ट्वा मुदितः कुर्यात् पर्यंकारोहणं नृपतिः ॥ १६५ ॥

जलमग्नधाम्नि आमोद प्रमोदकथनम्

तत्र स्थितस्य नृपतेः परिवारितस्य
वारांगनाभिरभितो जलमग्नधाम्नि ।
पातालसद्मनि यथा भुजगेश्वरस्य
निस्सीमसम्भृतरतिर्भवति प्रमोदः ॥ १६६ ॥
पूर्वोक्तवापिकायां मध्ये स्तम्भैश्चतुर्भिसपरचितम् ।
मुक्ताप्रवालयुक्तं पुष्पकमथ कारयेल्लटभम् ॥ १६७ ॥
वापीं परितः पुष्पकमापूर्य सुनिर्गमाभिरथ सुदृढम् ।

गर्भस्वस्तिकभित्तिभिरुपहितशोभं समन्ततः कुर्यात् ॥१६८॥
पूर्वोक्तवारियोगात् पूर्णामाकर्णतो विधायैताम् ।
जलककेलिषु सोत्कण्ठो महीपतिः पुष्पकं यायात् ॥ १६९॥
कुर्वीत नर्मसचिवैर्विलासिनीभिश्च सार्धमवनिपतिः ।
तद्भित्त्यन्तरवर्ती निमज्जनोन्मज्जनैः क्रीडाम् ॥ १७० ॥

एकत्र मग्नैरपत्र दृष्टै
रन्यत्र हत्वा सलिलेन नष्टैः ।
क्रीडत्यलं केलिकरैः सहायै-
र्नृपः सुखं मज्जनपुष्करिण्याम् ॥ १७१ ॥

वापीतलस्थितमथ त्रपयावनम्र-
माच्छादितस्तनभरं करपल्लवेन ।
गाढावसक्तवसनं जलरोधमुक्ता-
वालोकते प्रणयिनीजनमत्र धन्यः ॥ १७२ ॥

अथ रथदोलाप्रस्तावः

रथदोलादिविधानं दारवमभिदध्महे वयं सम्यक्।
यन्त्रभ्रमणककर्म प्रकीर्तितं पञ्चमं यत् तत् ॥ १७३ ॥

अब रथदोला का विधान करते हैं—लकड़ी के रथ दोला अर्थात् झूलते हुए रथ को अब यहाँ सम्यक् रूप से कहते हैं । यह पाँचवें प्रकार का यन्त्र भ्रमणक (घूमने वाला यन्त्र) कहा गया है ॥ १७३ ॥

वसन्तादयः पञ्चदोलाः

तत्र वसन्तः प्रथमो मदननिवासो वसन्ततिलकश्च ।
विभ्रमकस्त्रिपुराख्यः पञ्चैते दोलकाः कथिताः ॥ १७४ ॥

१. वसन्त, २. मदननिवास, ३. वसन्ततिलक, ४. विभ्रमक एवं ५. त्रिपुर नामक पाँच प्रकार के झूले कहे गए हैं ॥ १७४ ॥

१. तत्र वसन्तदोलाविधानम्

निखनेच्चतुरः स्तम्भान् समैकसूत्रोपगान् ऋजून् सुदृढान् ।
सदृशान्तरान् धरित्रीवशतः सुश्लिक्ष्ण(ष्ट)पीठगतान्॥१७५॥
प्रसादस्योक्तदिशि प्रविदध्याद् विरचिताष्टकरदैर्ध्यम् ।

चार स्तम्भों का निर्माण करे जो एक सीध में सीधे और दृढ हों, पृथ्वी के हिसाब से उन्हें आठ हाथ विस्तृत सुन्दर और चिकना बनावे तथा प्रसाद की उक्त दिशा में प्रतिष्ठित करे ॥ १७५-१७६ ॥

**भूमिगृहं रमणीयं तदर्धतो विहितगाम्भीर्यम् ॥ १७६ ॥**
**तद्गर्भतले स्तम्भो लोहमयाधारसंस्थितः कार्यः ।**

उसका आधा गहरा वहाँ रमणीय भूमि-गृह बनावे और उस गर्भ तल में लोहमय आधार पर संस्थित स्तम्भ बनावे ॥ १७६-१७७ ॥

**भ्रमसहितः पीठयुतो ग्रस्तश्चच्छादकतुलाभिः ॥ १७७ ॥**
**संस्थाप्योपरि पीठस्य कुम्भिकामतिदृढां विभक्तां च ।**
**धनुरुच्छ्रितैस्ततोऽमूमष्टभिरावेष्टयेद् भद्रैः ॥ १७८ ॥**
**स्वेच्छमथ भूमिकोच्छ्रयमस्योर्ध्वे कल्पयेन्नितान्तमृजुम् ।**
**निदधीत वेष्टनोर्ध्वे पट्टयुक् स्तम्भशीर्षं च ॥ १७९ ॥**
**हीरग्रह(ण?)पर्यन्तं मदला गजशीर्षिका विधातव्या ।**
**सुदृढा प्रयत्नरचिता मनोभिरामा यथाशोभम् ॥ १८० ॥**
**पट्टस्योपरि कार्या चतुष्किका क्षेत्रमानतोऽभीष्टात् ।**
**तस्यामुपरि विधेयस्तलबन्धो दृढतरन्यासः ॥ १८१ ॥**
**स्तम्भैर्द्वादशभिरथ क्षेत्रे युक्त्या समुच्छ्रितैर्भव्यैः ।**
**रूपवतीकोणस्थितिरधिका भूः प्रथमिका कार्याः ॥ १८२ ॥**
**मध्ये भ्रमश्च तस्या गर्भस्तम्भप्रतिष्ठितः कार्यः ।**
**क्षेत्रप्रमाणवशतस्तां पश्चाच्छादयेत् पट्टैः ॥ १८३ ॥**
**रथिकाशिखाग्रकेषु च फलकाम(व)रणस्य तद्वदुपरिष्टात् ।**
**भ्रमचक्राणि न्यस्येन्मध्ये स्तम्भे च पञ्चैव ॥ १८४ ॥**
**अत उपरि यथाशोभं हि भूमिका पुष्पकाकृतिः कार्या ।**
**मध्यस्तम्भाधारा कृतकलशविभूषणा शिरसि ॥ १८५ ॥**
**स्तम्भेऽव(ध)स्ताद् भ्रमि ते भृशं भ्रमत्यर्थभूमिका तत्र ।**
**रथिकाभ्रमरकयुक्ता परस्परं चक्रयन्त्रेण ॥ १८६ ॥**
**वसन्तरथिकाभ्रमे समधिरूढवारांगना-**
**परिभ्रमणसम्भृताभ्यधिकविभ्रमं भूपतिः ।**
**करोति नयनोत्सवस्त्रि(वं त्रि)दशधाम्नि यत्कीर्तनं**
**वसन्तसमये भवत्यमलकीर्त्तिधामैव सः ॥ १८७ ॥**

### २. मदननिवासाख्यदोलाविधानम्

आरोप्य स्थिरमेकं स्तम्भं भूमीगृहादिरहितमथ ।
हस्तचतुष्कोच्छ्राया कार्योपरि भूमिका चास्य ॥ १८८ ॥
मध्ये भ्रमरकयुक्तं शेषं पूर्ववदिहाचरेदखिलम् ।
पुष्पकमपि च स्तम्भे शिथिलं कलशोच्छ्रितं कुर्यात् ॥१८९॥
तस्योपरि च ग्रीवा चतुरासनसंयुता विधातव्या ।
घण्टास्तम्भौ कार्यौ स्तम्भेन महाबलौ तत्र ॥ १९० ॥
एवं पुष्पकभूमिकान्तरलस्थायी निगूढो जनो
यावद् भ्रामकयन्त्रचक्रनिकरं सम्यक् क्रमाच्चालयेत् ।
तावत् ता रथिकासना मृगदृशस्तत्र स्थिताः पुष्पके
कामावासकुतूहलार्पितदृशो भ्राम्यन्ति सर्वा अपि ॥१९१ ॥

### ३. वसन्ततिलकाख्यदोलाविधानम्

अथ कोणगतान् स्तम्भांश्चतुरो विनिवेशयेद् ऋजुन् सुदृढान्।
सुश्लिष्टपीठसंस्थान् समान्तरान् मेदिनीवशतः ॥ १९२ ॥
तेषामुपरि लता(तला)न्तरसंयुक्ता भूमिका विधातव्या ।
रथिकास्तत्र चतस्रो जायन्ते पूर्ववद् दिक्स्थाः ॥ १९३ ॥
तदुपरि तथार्धभूमिः कार्या सुश्लिष्टदारुसन्धाना ।
मध्यभ्रमरकयुक्ता सरूपका मत्तवारणयुता च ॥ १९४ ॥
नानाविधकर्मवती वसन्ततो बाह्यरेखा स्यात् ।
अन्योन्ययन्त्रपरिघट्टनदोल्यमान-
निश्शेष चक्ररथिकाभ्रमणाभिरामम् ।
दृष्ट्वा वसन्ततिलकं सुरमन्दिराणां
भूषायमाणमुपयाति न विस्मयत्वं(यं कः) ॥ १९५ ॥

### ४. विभ्रमकदोलाविधानम्

प्रविधाय रंगभूमिं प्रथमां शास्त्रान्तराधरस्यार्थे (?) ।
चतुरस्रा रूपवती सचतुर्भद्रा विधेया भूः ॥ १९६ ॥
प्रतिकोणमागत(ता)स्या भद्रेषु भवन्ति संयता भ्रमराः ।
अत उपरिष्टाद् भूम्या भ्रमराश्चाष्टासनाः कार्याः ॥ १९७ ॥
रेखाः शुद्धाः कार्या बहिरन्तश्चित्रिताश्चान्याः ।

पीठेषु मध्यग(सं)स्थास्ततोऽपरा भूमिकाः कार्याः ॥१९८॥
पीठस्य मध्यसंस्थैरन्योऽन्यारालियोजितैश्चक्रैः ।
सर्वे वेगाद् भ्राम्यन्ति सान्तरा(रा) विभ्रमे भ्रमराः ॥ १९९ ॥

दोलासनो विहितवारवधूकृ(भृ)ताति-
चित्रेण यस्त्रिदशधामसु विभ्रमेण ।
पृथ्वीपतिमुदमुपैति समुल्लसन्ती
कीर्त्तिर्न माति भुवनत्रितयेऽपि तस्य ॥ २०० ॥

५. त्रिपुराख्यदोलाविधानम्

चतुरस्रमथ क्षेत्रं कृत्वांशैर्भाजितं ततोऽष्टाभिः ।
कोणैः शेषैस्तस्मिंश्चतुरस्रं कल्पयेद् भद्रम् ॥ २०१ ॥
तद्द्विगुणमूर्ध्वमेतस्य भूमिकाभागसंख्यया कार्यम् ।
तत्राद्यंशचतुष्केण भूमिका स्यात् समुच्छ्रयतः ॥ २०२ ॥
तत्राष्टषट्चतुर्भागवर्जिता भूमिका उपर्युपरि ।
क्रमशो भवन्त्यथैवं ताः स्युस्तिस्रोऽर्धसंयुक्ताः॥ २०३ ॥
शेषांशोच्छ्रययुक्ता घण्टा चतुरस्रकायता कार्या ।
त्रिचतुर्भूम्यौ कार्ये सषट्चतुर्भागविस्तारे ॥ २०४ ॥
रंगः स्यादाद्यभुवि द्वितीयभुवि कोणगास्तथा रथिकाः ।
स्युर्भद्राकृतियुक्ता दोला अपि तत्र रमणीयाः ॥ २०५॥
रथिकास्तृतीयभूमौ कार्या भद्रेषु चातिरमणीयाः।
कोणेष्वथासनान्यर्धवास्तुकेऽपि भ्रमः कार्यः ॥ २०६॥
दोलारथिके चतुरासने भ्रमोऽष्टासनो भवेत् तत्र ।
आसनमिह तत् कथितं युवतेः स्थानं यदेकं स्यात् ॥ २०७॥
निखिलान्यपि भ्रमणसम्मुखं तानि विभ्रति भ्रमणम्(?)।
यत्रासनानि स इह भ्रम इत्युक्तोऽपराधिका (?) ॥ २०८॥
यष्टेरूर्ध्वमधस्ताद् भ्रमस्य चक्रं (नि)योजयेदेकम् ।
लघुचक्राणि च तद्वन्नियोजयेदासनेष्वत्र ॥ २०९॥
लघुचक्रारकवृत्ते संलग्नाः कीलका दृढाः कार्याः।
तुल्यान्तराः समस्ताः प्रलघु(क)चक्रारवृन्तगताः ॥ २१०॥
रथिकाशिखाग्रचक्रं भ्रमचक्रारक(वि?)नियोजितं कार्यम् ।

यष्टिचतुष्टयमस्मिंस्तिर्यक् चक्रद्वयोपेतम् ॥ २११ ॥
ऊर्ध्वं द्वितीयभूमेस्तृतीयभूमेरथान्तरे कुर्यात् ।
नियतं रथिकायष्टिभ्रमसंलग्नानि यन्त्राणि ॥ २१२ ॥
आसनाधारयष्टीनां रथिकाचक्रयोजितान् ।
अधः समान्तरान् कुर्याच्चतुः परिवर्तकान् ॥ २१३ ॥
त(द्व)द् द्वितीयभूमीदोलागर्भे समान्तरे यष्टी ।
लग्ने तथैकचक्रे याम्योत्तरचक्रयोर्न्यस्येत् ॥ २१४ ॥
तद्वदधो भूकोणगरथिकाचूडाग्रचक्रसंसक्ताः ।
यष्टीस्ततश्चतस्रो द्विचक्रका इतरचक्रयोर्न्यस्येत्॥ २१५ ॥
प्रान्तचक्रद्वये कोणरथिकाचक्रयोजिता ।
दोलागर्भगता यष्टिस्तिर्यक् कार्यापरापरा ॥ २१६ ॥
प्रान्तचक्रद्वये कोणरथिकाचक्रयोजिता ।
गर्भात् पश्चिमभागे निवेदयेद् देवतादोलाम् ॥ २१७ ॥
अन्योन्यं चक्रभ्रममिच्छामुक्तिं विधानतः सम्यक् ।
ज्ञात्वा प्रयोजनीयं शीघ्रवहं मन्दवहनं वा ॥ २१८ ॥
एष समासेन यथा भ्रममार्गः कीर्तितः स्फुटोऽस्माभिः ।
अन्येष्वपि कर्त्तव्यः सम्यग् भ्रमहेतवे तद्वत् ॥ २१९॥
स्तम्भादिद्रव्याणां विन्यासैः कल्पितं दृढैः श्लक्ष्णैः ।
सुश्लिष्टसन्धिबन्धं धृतं तथा दीर्घमुख्यधरैः ॥ २२०॥
परिवारितमथ तिलकैः समन्ततः सिंहकर्णसंयुक्तम् ।
त्रिपुरं सम्यक् कुर्याद् विचित्ररूपं (स्व)कैश्चित्रैः ॥ २२१॥

यन्त्राध्यायविधातुरभिधानम्

बुद्ध्या क्लृप्तैः पूर्वयन्त्रैश्च युक्तं
यन्त्राध्यायं वेत्ति यः सम्यगेतम् ।
प्राप्नोत्यर्थान् वाञ्छितान् कीर्त्तियुक्तान्
स क्ष्मापालैरन्वहं पूज्यते च ॥ २२२ ॥

अपनी बुद्धि से बनाए गए पूर्व में कहे गए इस यन्त्राध्याय को जो अभियन्ता (इन्जीनियर) सम्यक् रूप से जानता है वह अपने वाञ्छितार्थ को प्राप्त कर कीर्ति को भी प्राप्त करता है और सदैव राजा से आदर प्राप्त करता है ॥ २२२ ॥

एतद् द्वादशराजचक्रमखिलं क्ष्मापालचूडामणे-
र्दोःस्तम्भप्रतिबद्धवृत्ति परितो यस्येच्छया भ्राम्यति ।
स श्रीमान् भुवनैकरामनृपतिर्देवो व्यधत्त द्रुतं
यन्त्राध्यायमिमं स्वबुद्धिरचितैर्यन्त्रप्रपञ्चैः सह ॥ २२३॥

**॥ इति मन्महाराजाधिराजश्रीभोजदेवविरचिते समरांगणसूत्रधारापरनाम्नि वास्तुशास्त्रे यन्त्रविधानं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥**

...❀...

ये द्वादश राजचक्र राजाओं के चूड़ामणि के बाहुओं से प्रतिबद्ध होकर जिस राजा की इच्छा से भ्रमण करते हैं, उन श्रीमान् राजा रामदेव ने इस यन्त्राध्याय को अनेक यन्त्रों के साथ अपनी बुद्धि से रचा है ॥ २२३ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'यन्त्रविधान' नामक एकतीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ३१ ॥**



## समीक्षात्मक टिप्पणी

(३१.१-२२३)

राजगृह निर्माण के बाद इकतीसवें अध्याय में विभिन्न प्रकार के यन्त्रों का वर्णन राजा रामदेव ने किया है । पन्द्रहवें अध्याय (१५.३०) में 'राजनिवेश' के अन्तर्गत भी नैर्ऋत्य कोण में (जंघा) के पद पर दारुशैल, वापी आदि जल यन्त्र एवं पुष्प वीथिका आदि के निर्माण का विधान किया गया है । इसी प्रकार (१५.३२) में पापयक्ष्मा (= क्षय) के पद पर ऊलूखलशिला यन्त्र (greinding store mill) का गृह बनाने का निर्देश है । दारुशैल अर्थात् कठपुतली आदि बनाने के लिए १५.३३ में राजयक्ष्मा के पद पर लकड़ी की फैक्ट्री का विधान किया गया है । यही कारण है कि विभिन्न यन्त्रों के लिए एक अलग से 'यन्त्राध्याय' (३१.१-२२३) इस वास्तुशास्त्र के ग्रन्थ में परिकल्पित है ।

इस अध्याय के प्रथम श्लोक में कामदेव पर विजय प्राप्त करने वाले भगवान् शङ्कर की स्तुति है । कारण यह है कि मानव के आनन्द के लिए कामदेव

के हाथ में पाँच बाण होते हैं जिनसे मनुष्य के हृदय में ये कामचेष्टाएँ उत्पन्न कर देते हैं । राजगृह में आनन्द हेतु यन्त्रों का होना अत्यावश्यक होता है क्योंकि फौवारा (= भ्रमयन्त्र) एवं पुष्प वाटिका आदि से राजा एवं रानियों का मनोरञ्जन होता है । यही कारण है कि भृशदेव (= काम) के पद पर यन्त्रगृह के निर्माण का विधान है ।

यह यन्त्राध्याय राजा रामदेव के द्वारा निर्मित है । महाराज भोजदेव ने इसे यहाँ राजगृह के वास्तु के विधान के बाद ही इकतीसवें अध्याय में रख दिया है । वस्तुतः विना यन्त्रों (= स्वचालित मशीनों) के राजगृह की शोभा ही नहीं हो सकती । यन्त्र से तात्पर्य है अपने से ही चलना जैसे पारद (= पारा) अपने आप इधर उधर भागता है उसे कोई शक्ति परिचालित नहीं करती ।

**यन्त्र का सिद्धान्त**—पृथ्वी, जल, तेज (= अग्नि) एवं वायु इन भूतों का भी स्वयं परिचालन प्रकृति में परिलक्षित होता है । सूर्य कब समुद्र आदि से जल शोषित कर वायु में मेघों (बादलों) को पैदा कर देते हैं कोई जानता नहीं । इसी प्रकार मशीन (= यन्त्र) में पृथ्वी आदि चार तत्त्वों में से कोई एक या दो तत्त्व प्रत्यक्ष दिखलाई पड़ते हैं और अन्य तत्त्व छिपे रहते हैं किन्तु सभी का अस्तित्व बना रहता है । यही मशीन के स्वयं परिचालन पर आश्चर्यान्वित होना यन्त्र का सिद्धान्त है ।

सभी तत्त्वों में एक प्रकार की शक्ति (energy) रहती है । यह शक्ति बनाई नहीं जा सकती (it can not be created) किन्तु उन तत्त्वों में निहित शक्ति का हम प्रयोग कर सकते हैं । वस्तुतः शक्ति (energy) का बीज प्रकृति में ही निहित है इसी बात को इस अध्याय के चौरासीवें श्लोक में इस प्रकार कहा गया है—

बीजं चतुर्विधमिह प्रवदन्ति यन्त्रे-
ष्वम्भोऽग्निभूमिपवनैर्निहितैर्यथावत् ।
प्रत्येकतो बहुविधं हि विभागतः स्या-
न्मिश्रैर्गुणः पुनरिदं गणनामपास्येत् ॥ ३१.८४ ॥

भोज अट्ठासीवें श्लोक में कुछ गुप्त रहस्य न खोलकर कुछ इस प्रकार कहते हैं—यन्त्रशास्त्राधिकार (= यन्त्र निर्माण विज्ञान) में वर्णित जो विचित्र रूप वाले एवं गुणों में पाँच प्रकार के यन्त्रों को जानता है अथवा सम्पूर्ण तरीके से जो सम्यक्तया इन यन्त्रों को संयोजित कर लेता है उनकी कीर्ति सम्पूर्ण पृथ्वी पर एवं स्वर्ग में भी फैल जाती है ।

यहाँ राघवन इस प्रकार कहते हैं—

Five classes of Yantras are then mentioned as constituting the five sections of the science of yantra (Yantraśāstrā-dhikāraṁ). The lines not being free from corruption, we are not able to make out these five classes of yantras to which reference is made again later but movement such as rotary, material such as wood, purpose such on the exhibition of dexterity and the stisfaction of curiosity, utilitarian value and pleasure as in swings; and form as in the round yantras (cakra) is about the best meaning that I can extract out of the context here.

अर्थात् यहाँ पाँच प्रकार के वैज्ञानिक यन्त्रों का वर्णन यन्त्रशास्त्राधिकार में वर्णित है। इस पंक्ति से यह समझ में नहीं आता है कि कौन से पाँच यन्त्र हैं? लगता है यहाँ पर मूल कुछ भ्रष्ट हो गया है।

यहाँ इस यन्त्राध्याय में सब कुछ बताकर भी कुछ भी नहीं बताया गया है। स्वयं ग्रन्थकार भी ३१.७९ में इस प्रकार कहते हैं—

यन्त्राणां घटना नोक्ता गुप्त्यर्थं नाज्ञतावशात्।
तत्र हेतुरयं ज्ञेयो व्यक्ता नैते फलप्रदाः ॥ ७९-८० ॥

यहाँ सब कुछ गुप्त रखने के लिए यन्त्र बनाने की विधि नहीं दी गई। इसके पीछे अज्ञान कारण नहीं है। अपितु इसका हेतु यह है कि विधि को व्यक्त कर देने से ये यन्त्र फलदायी नहीं होते।

अतः इस अध्याय की हिन्दी करने के लिए बहुत शोध की आवश्यकता है और यह कब तक सम्भव होगा भगवान् काशीपति विश्वनाथ एवं भगवती पराम्बा उमा ही जाने।

इसी प्रकार इस अध्याय का अट्ठासीवाँ श्लोक अस्पष्ट है—

चित्रैर्युक्तं ये गुणैः पञ्चरूपं
जानन्त्येन यन्त्रशास्त्राधिकारम्।
ये वा कृत्स्नं योजयन्तेऽत्र सम्यक्
तेषां कीर्तिद्यां भुवं चावृणोति ॥ ८८ ॥

इसी प्रकार इस अध्याय का ९५-९६ श्लोक भी अस्पष्ट है—

लघुदारुमयं महाविहंगं दृढसुश्लिष्टतनुं विधाय तस्य।
उदरे रसयन्त्रमादधीत ज्वलनाधारमधोऽस्य चाति(ग्नि) पूर्णम् ॥ ९५ ॥

एक बहुत बड़ा सा विहंग (परयुक्त चिड़िया) हल्की लकड़ी से बनाई जाती है और उसके सभी अंग प्रत्यंग एक दूसरे से परस्पर सुश्लिष्ट रहते हैं। फिर उस लकड़ी की चिड़िया के उदर में रस (= पारद) यन्त्र रख देते हैं। उसके आधार में फिर अग्नि नीचे रख देते हैं ॥ ९५ ॥

तारूढः पूरुषस्तस्य पक्षद्वन्द्वोच्चालप्रोज्झितेनानिलेन ।
सुप्तस्वान्तः पारदस्यास्य शक्त्या चित्रं कुर्वन्नम्बरे याति दूरम् ॥ ९६ ॥

उस हल्की लकड़ी की चिड़िया पर एक पुरुष चढ़ जाता है और उसके दोनों पंखों को चालित कर देता है जिससे वायु में वह उड़ने लगता है। वस्तुतः पहले से भीतर रक्खे गए पारद की शक्ति से विचित्र रूप से वह आकाश में दूर तक चला जाता है ॥ ९६ ॥

**विमर्श**—राघवन ने इसे इस प्रकार व्यक्त किया है—

The most curious of the yantras described by Bhoja in the chapter is of course, the one that rises and travels in the air. From the previous notices of the aerial mechanise only the barest details of the make up could be gleaned. The only text that gives us some knowledge of its actual construction is this work of Bhoja. Firstly Bhoja mentions the main material of its body as light wood (laghu dāru); its shape is that of a huge bird (Mahāvihañga) with a wing on each side. The motive force is then explained. In the bowels of the structure below, is to be a fire chamber with mercury placed over a flame. The power generated by the heated mercury helped by the concurrent action of the wings which are flapped by a rider inside, makes the yantra go up and travel for (dire).

A heavier dāru vimāna is then described (verses 97-98). It contains not one as in the previous case, but four pitchers of mercury over iron ovens. The boiling mercury ovens produce a terrific noise which as put to use, in battle to scare away elephants, by strengthening the mercury chambers, the rear could be increased so that by it elephants are thrown completely out of control. This specific military use of aircraft against elephants tempts one to suggest that the hasti yantra advocated by Kautilya (KAŚ IX. 2.26, p. 221, R.P. Kangle ed.) against elephants was something like the heavier dāru vimāna described by Bhoja. In XIII. 4 Kauṭilya pp. 262-265, Kauṭilya advocated the use of Yantras for devastating an

enemy's place which is full of defence erections. YAMCIAI, p. 7 KAŚ II. pp. 564-570.

In Arthaśāstra XII. 44-45, p. 255 and KAŚ II. p. 548 refers to a bed chamber in which part of the flooring has a mechanical contrivance; underneath this part of the floor is a deep cavity or a pit with pikes and over it is placed the bed of the unwanted person; after he goes to sleep the flooring is released and down goes the poor man with his bed. YAMCIAI, p.7

विस्मृते सुरुङ्गया रात्रौ राजावासमनु प्रविश्य सुप्तममित्रं हन्यात् ।
यन्त्रविश्लेषणं वा विश्लेष्याधस्तादवपातयेत् ।

When (things are) forgotten he should enter the king's chamber at night by an underground passage and kill the sleeping enemy or loosening something that can be loosened by a mechanism, he should make it fall down (on heir) R.P. Kangle's English translation XII. 5.44-45, p. 548.

अर्थात् इस यन्त्र की पहली विशेषता यह है कि यह अत्यन्त हल्की लकड़ी से बनाया जाता है और दूसरी विशेषता पारा इसके पेट में रहता है जो अग्नि से प्रज्वलित होकर ऐसी शक्ति उत्पन्न कर देता है कि पंखों से वह विहंग दूर तक उड़ जाता है ।

यन्त्राधिकार का यह पाँचवाँ मुख्य अंग रथदोला पहले कहा गया है उसी का यहाँ विवेचन प्रस्तुत है । भोज इस रथदोला को एक प्रकार का झूला कहते हैं जो चारों ओर (हवा में) घूमता रहता है जिस पर पुरुष आसीन रहते हें और चारों ओर घूमने का आनन्द लेते हैं । वेंकटेश कवि के चित्रबन्धरामायण (तञ्जौर पाण्डुलिपि सं. ३७७२) में भी घूमने वाले झूले का वर्णन हुआ है जिसे वहाँ 'दारुयन्त्र' कहा गया है । कवि ने यहाँ यह दर्शाया है कि महल में ऐसा लगता है मानो मेरु पर्वत के चारों ओर आकाश में तारे घूम रहे हों ।

इस प्रकार इस यन्त्र के बनाने की विधि गुप्त रक्खी गई है । पञ्चतन्त्र आदि ग्रन्थों में भी इस प्रकार के यन्त्रों का उल्लेख प्राप्त होता है । किन्तु बनाने की विधि तो चाहिए । अत: यह यन्त्राध्याय आधा अधूरा है ।

यन्त्रधारागृह में भोज ने अधिक ध्यान दिया है । यहाँ इसके दो प्रकार बताए गए हैं किन्तु फौव्वारे के सम्बन्ध की रहस्यात्मकता को गुप्त रक्खा है ।

## अरघट्ट यन्त्र (३१.१३)

**कौटिल्य के अर्थशास्त्र** में भी यन्त्रों का विधान प्राप्त होता है। अरघट्ट (= रहट) का वर्णन इसी अध्याय में १३ श्लोक में आया है।

मराठा साम्राज्य के कर्णधार महाराज शिवाजी ने तीन सौ मीटर ऊँचाई पर रहट की सहायता से किले में नीचे से ऊपर पानी पहुँचाया था। बिजली का आविष्कार तो उन्नीसवीं शताब्दी की देन है जो मात्र प्रकृति का शोषण है। यह शोषण कब तक चलेगा? कुछ कहा नहीं जा सकता। अभी ही देश की गंगा आदि महानदियों में जलस्तर का रोना रोया जा रहा है। छोटी नदियों का तो अस्तित्व ही समाप्त हो गया है। अन्ततः हमे सौर ऊर्जा पर ही आधारित होना होगा। जिससे प्रकृति का शोषण न हो।

समराङ्गणसूत्रधार के इस यन्त्राध्याय में आयुधों का वर्णन नहीं है किन्तु किले की रक्षा के लिए तीक्ष्ण पुरुषों वाले यन्त्रों का उल्लेख प्राप्त होता है—

**ये चापाद्या ये शतघ्न्यादयोऽस्मिंन्नुष्ट्रग्रीवाद्याश्च दुर्गस्य गुप्त्यै...**

**—(सम. ३१.१०८)**

(१) कौटिल्य अर्थशास्त्र (१०.६.४८) में यन्त्रों का उल्लेख इस प्रकार है—

**यन्त्रैरुपनिषद्योगैस्तीक्ष्णैर्व्यासक्तघातिभिः ।**
**मायाभिर्देवसंयोगैः शकटैर्हस्तिभीषणैः ॥**

यन्त्रों, उपनिषद्योगों व्यासक्तघाती तीक्ष्ण पुरुषों वाले यन्त्र (जो अन्य में आसक्त की हत्या करने वाले), माया कर्मों वाले यन्त्र, देव संयोगों, शकटों (= गाड़ी) और हस्ति भीषण (डरावने) यन्त्रों का उपयोग करना चाहिए।

(२) कौटिल्य अर्थशास्त्र (२.१५.६२) में इस प्रकार पाक शाला के यन्त्रों का उल्लेख भी मिलता है—

**तुलामान भाण्डं रोचनीदृषन्मुसलोलूखल-कुट्टकरोचकयन्त्र-पत्रकशूर्प-चालान-काकण्डोलीपिटकसम्मार्जनश्चोपकरणानि ।**

कूटने की मशीन को रोचक कहते हैं।

(३) कौटिल्य अर्थशास्त्र (१८.१) में इस प्रकार उल्लेख है—'परपुराभिघातिकं यन्त्रम्' दुर्ग की रक्षा करने योग्य शत्रु के नगर को ध्वस्त कर देने वाले सर्वतोभद्र (= मशीनगन), जामदग्न्य आदि यन्त्रों का निर्माण करवाना चाहिए।

**सर्वतोभद्रजादग्न्यबहुमुखविश्वासघातिसंघाटीयानक-पर्जन्यक-बाहूर्ध्वबाह्वर्धबाहूनि स्थितयन्त्राणि ।**

दस प्रकार के स्थायी यन्त्र होते हैं, जिनका विवरण इस प्रकार है—१. सर्वतोभद्र (मशीनगन), २. जामदग्न्य (जिसमें बीच के छेद से बड़े-बड़े गोले निकलें), ३. बहुमुख (किले की दीवारी में ऊँचाई पर बनाये गये वे स्थान, जहाँ से सैनिक गोलीवर्षा कर सकें), ४. विश्वासघाती (नगर के बाहर तिरछी बनावट का एक ऐसा यन्त्र, जिसको छू लेने से ही प्राणान्त हो जाय), ५. संघाटि (लम्बे ऊँचे बाँसों से बना हुआ वह यन्त्र जो महलों के ऊपर रोशनी फेंके), ६. यानक (पहियों पर रखा जाने वाला लम्बा यन्त्र), ७. पर्जन्यक (वरुणास्त्र, फायर बिग्रेड), ८. बाहुयन्त्र (पर्जन्यक की ही भाँति, किन्तु उसका आधा), ९. ऊर्ध्वबाहु (ऊपर स्तम्भ की आकृति का नजदीक की मार करने वाला यन्त्र) और १०. अर्धबाहु (ऊर्ध्वबाहु का आधा) ।

**पञ्चालिकदेवदण्डसूकरिकामुसलयष्टिहस्तिवारकतालवृन्मुद्‍गरद्रुघणगदास्पृक्त-लाकुद्‍दालास्फोटिमोद्घाटिमोत्पाटिमशतघ्नीत्रिशूलचक्राणि चलयन्त्राणि ।**

चलयन्त्र भी अनेक हैं, जिनका ब्यौरा इस प्रकार है—१. पाञ्चलिक (बढ़िया लकड़ी पर तेज धार का बना यन्त्र, जो परकोटे के बाहर जल के बीच में शत्रु को रोकने के काम में आता है), २. देवदण्ड (कील रहित बड़ा भारी स्तम्भ, जो परकोटे के ऊपर रखा रहता है), ३. सूकरिका (सूत और चमड़े की या बाँस और चमड़े की बनी हुई मशकरी, जो परकोटे या अट्टालक के ऊपर ढक कर रखी जाती है), ४. मुसलयष्टि (खैर की मूसल का बना हुआ डण्डा, जिसके आगे शूल लगा हो), ५. हस्तिवारक (त्रिशूल या त्रिशूल डण्डा), ६. तालवृत (चारों ओर घूमने वाला मन्त्र), ७. मुद्‍गर, ८. द्रुघण (मुद्‍गर के ही समान यन्त्र), ९. गदा, १०. स्पृक्तला (काँटेदार गदा), ११. कुद्‍दाल, १२. आस्फोटिम (चमड़े से बना हुआ चार कोना वाला, मिट्टी के ढेले या पत्थर फेंकने वाला यन्त्र), १३. उद्‍घाटिम (मुद्‍गर की आकृति का यन्त्र), १४. उत्पाटिम (खम्भे आदि को उड़ा देने वाला यन्त्र), १५. शतघ्नी (किले की दीवार के ऊपर रखा जाने वाला बड़े स्तम्भ की आकृति का यन्त्र), १६. त्रिशूल और चक्र—ये सोलह प्रकार के चल यन्त्र हैं ।

**शक्तिप्रास-कुन्तहाटक-भिण्डिपाल-शूलतोमरवराहकर्ण-कणप-कर्पण-त्रासिकादीनि च हलमुखानि ।**

हलमुख (भाले की तरह) हथियारों के नाम इस प्रकार हैं—१. शक्ति (कनेर के पत्ते की आकृति का लोहे का बना हथियार), २. प्रास (चौबीस अङ्गुल लम्बा, दुधारा हथियार, जिसकी मूठ बीच में लकड़ी की बनी हो), ३. कुन्त (सात हाथ का उत्तम, छह हाथ का मध्य और पाँच हाथ का निकृष्ट भाला), ४. हाटक (कुन्त के समान तीन काँटों वाला हथियार), ५. भिण्डिपाल (मोटे फल वाला, कुन्त के समान), ६. शूल (तेज मुख वाला हथियार), ७. तोमर (बाण के समान तेज मुख वाला, जो चार हाथ का अधम, साढ़े चार हाथ का मध्यम और पाँच हाथ का उत्तम समझा जाता है), ८. वराहकर्ण (एक प्रकार का प्रास, जिसका मुख सूअर के कान के समान होता है), ९. कणप (लोहे का बना हुआ, दोनों ओर तीन-तीन काँटों से युक्त, चौबीस, बाईस और बीस अङ्गुल का क्रमशः उत्तम, मध्यम एवं अधम हथियार होता है), १०. कर्पण (तोमर के समान, हाथ से फेंका जाने वाला बाण), ११. त्रासिका (= प्रास जितनी, सम्पूर्ण लोहे की बनी), ये सब हथियार 'हलमुख' कहलाते हैं क्योंकि इन सभी का अग्रभाग हल के अग्रभाग की तरह ही तेज होता है।

**ताल चापदारव-शार्ङ्गाणि कार्मुक-कोदण्ड-द्रूणा धनूंषि ।**

धनुष चार प्रकार से बनाये जाते हैं—१. ताल (ताड़ का बना हुआ), २. चाप (अच्छे बाँस का बना हुआ), ३. दारव (मजबूत लकड़ी का बना हुआ) और ४. शार्ङ्ग (सींगों का बना हुआ), आकृति और क्रिया भेद से इनके कार्मुक, कोदण्ड और द्रूण आदि नाम बतलाए गए हैं ।

**मूर्वार्कशण-गवेधुकावेणुस्नायूनि ज्याः ।**

मूर्वा, आख सन, गबेधुकावेण (रामबाँस) और ताँत इनसे मजबूत धनुष की डोरी बनती है ।

**वेणुशरशलाकादण्डासननाराचाश्च इषवः । तेषां मुखानि छेदनभेदनताडना-न्यायसास्थिदारवाणि ।**

बाण के भी अनेक भेद हैं जिनके प्रकार हैं—१. वेणु (बाँस), २. शर (नरसल), ३. शलाका (मजबूत लकड़ी), ४. दण्डासन (आधा लोहा और आधा बाँस) और ५. नाराच (सम्पूर्ण लोहे का)। इन बाणों के अग्रभाग में लोहे, हड्डी तथा मजबूत लकड़ी की बनी नोक होती है जो छेदने, काटने, आघात पहुँचाने और रक्तसहित एवं रक्तरहित घाव करने के लिए लगी रहती है ।

**निस्त्रिंशमण्डलाग्रासियष्टयः खड्गाः । खड्गमहिषवारणविषाणदारुवेणु-मूलानि त्सरवः ।**

खड्ग (तलवार) तीन प्रकार के होते हैं—१. निस्त्रिंश (जिसका अगला भाग काफी टेढ़ा हो), २. मण्डलाग्र (जिसका अगला हिस्सा कुल गोलाकार हो) और ३. असि यष्टि (जिसका आकार पतला एवं लम्बा हो)। खड्ग के लिए गैंडा, भैंस की सींग, हाथी दाँत, मजबूत लकड़ी और बाँस की जड़ की मूठ बनवानी चाहिए।

**परशु-कुठारपट्टस-खनित्र-कुद्दाल-क्रकच-काण्डच्छेदनाः क्षुरकल्पाः।**

फरसा, कुल्हाड़ी, द्विमुखी त्रिशूल, फावड़ा, कुदाल, आरा और गँड़ासा, ये सब धुरे की धार की भाँति तेज होने के कारण 'क्षुरकल्प' या क्षुरवर्ग के हथियार कहलाते हैं।

**यन्त्रगोष्फणमुष्टिपाषाणरोचनीदृषदश्चायुधानि।**

यन्त्रपाषाण, गोष्फणपाषाण, मुष्टिपाषाण, रोचनी और दृषद्—ये सब आयुध कहलाते हैं।

**लोहजाल-जालिकापट्ट-कवच-सूत्रकंकडशिंशुमारकखड्गधेनुकहस्तिगोचर्मखुर-शृंगसंघातं वर्माणि। शिरस्त्राणकण्ठत्राणकूर्पासकञ्चुकवारवाण-पट्ट-नागोदरिकाः। पेटीचर्महस्तिकर्णतालमूलधमनिकाकवाटकिटिकाप्रतिहतबलाहकान्ताश्चावरणानि।**

कवच छह प्रकार से बनाये जाते हैं, जिनकी विधि इस प्रकार हैं—

१. लोहजाल (सिर से पैर तक ढकने वाला), २. लोहजालिका (सिर के अलावा सारे शरीर को ढकने वाला), ३. लोहपट्ट (बाँहों को छोड़ सारे शरीर को ढक देने वाला), ४. लोहकवच (केवल पीठ तथा छाती को ढक देने वाला), ५. सूत्रकंकण (सूत का बना कवच) और ६. मछली, गैंडा, नीलगाय, हाथी तथा बैल, इन पाँचों के चमड़े, खुर एवं सींगों को मिलाकर बनाया हुआ कवच। इनके अतिरिक्त शिरस्त्राण (सिर को ढक देने वाला), कण्ठत्राण (गले को ढक देने वाला), कूर्पास (आधी बाँहों को ढक देने वाला), कञ्चुक (घुटनों तक शरीर को ढक देने वाला), वारवाण (सारी देह को ढक देने वाला), पट्ट (बिना बाहों एवं बिना लोहे का कवच), नागोदरिका (केवल हाथ की अङ्गुलियों की रक्षा करने वाला)—ये सात प्रकार के आवरण (कवच) देह पर धारण किए जाने योग्य हैं। चमड़े की पेटी, मुँह ढकने का आवरण, लकड़ी की पेटी, सूत की पेटी, लकड़ी का पट्टा, चमड़ा एवं बाँस को कूट कर बनाई गई पेटी, पूरे हाथों को ढकने वाला आवरण और किनारों पर लोहे के पत्तों से बँधा हुआ आवरण आदि अनेक प्रकार के आवरण (= कवच) होते हैं।

(४) **वास्तुराजवल्लभ** (४.२१-२४) में यन्त्र विधान इस प्रकार वर्णित है—

यन्त्राः पुराणामथ रक्षणाय संग्रामवह्न्यम्बुसमीरणाख्याः ।
विनिर्मिता सतेज यदा नृपाणां भवन्ति पूज्याः सुरयाऽथ मांसैः ॥

पुर की रक्षा के लिये अग्नि, जल और वायु नाम के यन्त्र राजाओं के जय के लिए बनाने चाहिये और मद्य और मांस से उनकी पूजा भी करना चाहिए ।

हस्ता अष्ट च भैरवे नवकरश्चन्द्रो दशार्का भवेत्
रुद्रैर्भीमगजोऽपि भास्करकरैर्युग्मन्तु विश्वैः शिखी ।
प्रोक्तोऽसौ यमदण्ड एव मनुभिस्तिथ्या महाभैरव-
स्त्वष्टौ शंकरनिर्मिताश्च समरे देवासुरे अभैरवाः ॥

शिवजी ने देवासुर संग्राम में भैरव नामक आठ प्रकार के यन्त्रों (तोपों) को बनाया है, उनके नाम ये हैं—आठ हाथ का भैरव, नौ हाथ का चन्द्र, दस हाथ का सूर्य, ग्यारह हाथ का भीमगज, बारह हाथ का युग्म, तेरह हाथ का शिखी, चौदह हाथ का यमदण्ड और पन्द्रह हाथ का महाभैरव यन्त्र होता है ।

यन्त्रे चाष्टकरेऽष्टहस्तफणिनो सूर्यांगुला विस्तरे
स्तम्भा मर्कटिका च पञ्जरमतः षट्त्रित्रिहस्ता क्रमात् ।
यष्ट्या पृष्ठविभागकोऽपि रदनैस्तुल्योऽष्टमात्राङ्गुलैः
प्रोक्ता कुण्डलवेल्लणी बहिरतो मध्यादशीत्यङ्गुलैः ॥

आठ हाथ के यन्त्र में आठ हाथ की फणिनी (फल लम्बाई) और बारह अङ्गुल विस्तार करना एवं (मुख का व्यास) छह हाथ का करे तथा स्तम्भ तीन हाथ का, मर्कटिका और पञ्जर तीन हाथ का करना चाहिए । यष्टी का पृष्ठभाग बत्तीस अङ्गुल का तथा कुण्डलाकार वेल्लणी आठ अङ्गुल का करना चाहिए और इसके बाद मध्य से बाहर अस्सी अङ्गुल रखना चाहिए ।

यष्ट्यां दृढां मर्कटिकां विदध्यात्
लौहस्य कीलेन च चर्मणा च ।
यन्त्रं प्रकुर्याद्दृढकाष्ठकस्य
तन्या तथा ज्योतिकया समेतम् ॥

यष्टी अर्थात् स्तम्भ में मर्कटिका (कील) को गाड़े और लौहे की कील अथवा चर्म से दृढ़ बाँधना चाहिए । यन्त्र (तोप को ले जाने की गाड़ी) दृढ़ काष्ठ का बनाना चाहिए तथा उसे तनी और ज्योतिका (जोता) के साथ बनाना चाहिए ।



# अथ द्वात्रिंशोऽध्यायः

## * गजशालालक्षणम् *

## (The Equerry for tuskers)

**लक्षणं गजशालानामिदानीमभिदध्महे ।**
**चतुरस्त्रीकृते क्षेत्रे भागैर्भक्ते ततोऽष्टभिः ॥ १ ॥**

**गजशाला के लक्षण**—अब गजशाला (हाथी का अस्तबल) का लक्षण कहते हैं । चौकोर भूमि (चतुरस्त्रीकृते क्षेत्रे) का आठ भाग करना चाहिए ॥ १ ॥

**विमर्श**—कौटिल्य अर्थशास्त्र (२.४.१-५) के अनुसार हस्तिशाला पूर्व-दक्षिण दिक् में बनानी चाहिए ॥ १ ॥

**मध्ये द्विभागविस्तारं स्थानं कुर्वीत् हस्तिनः ।**
**कल्प्याः प्रासादवद् भागा ज्येष्ठमध्याधमाः क्रमात् ॥ २ ॥**

**गजशाला की भूमि**—मध्य भाग में (आठ में से) दो भाग विस्तार वाला हाथी का स्थान बनाना चाहिए । उन भागों को प्रासाद के समान क्रमानुसार ज्येष्ठ, मध्यम एवं अधम स्थान कल्पित करना चाहिए ॥ २ ॥

**तद्बहिर्भागिकोऽलिन्दो बहिस्तस्यापि चापरः ।**
**भागेनैकेन भित्तिः स्याद् द्वितीयालिन्दकाद् बहिः ॥ ३ ॥**

उस (मध्य) भाग के बाहर एक अलिन्द (= बरामदा या बार्जा) बनाना चाहिए । उसके भी बाहर एक अन्य बरामदा बनाना चाहिए । उन दोनों बार्जो के मध्य में एक दीवाल का निर्माण करना चाहिए जो द्वितीय बरामदे (= बार्जे) के बाहर हो ॥ ३ ॥

**तस्या द्वारप्रदेशे तु कर्तव्यौ कूर्परावुभौ ।**
**कर्णप्रासादिका कार्या द्वितीयालिन्दसंश्रिता ॥ ४ ॥**

उन दोनों अलिन्द के द्वार प्रवेश में दो कूर्परों (= जङ्गा फूस का बना छप्पर)

का निर्माण करना चाहिए । द्वितीय अलिन्द (= बरामदे या बार्जे) से लगा हुआ एक कर्ण प्रसादिका (छोटा कमरा) बनाना चाहिए ॥ ४ ॥

### १. सुभद्राशालानिरूपणम्

**द्वे द्वे वातायने कुर्याद् भित्तौ दिक्षु तिसृष्वपि ।**
**प्राग्ग्रीवोऽग्रे भवेच्छाला सुभद्रेयमुदाहृता ॥ ५ ॥**

**१. सुभद्रा गजशाला**—तीनों दिशाओं की दीवालों पर दो-दो वातायनों (खिड़कियों) का निर्माण करना चाहिए । प्रवेश करते ही जो शाला (= बड़ा कमरा) होगा तो उस (गज) शाला को सुभद्रा गजशाला कहते हैं ॥ ५ ॥

### २. नन्दिनीशालानिरूपणम्

**अस्या एव यदा पक्षप्राग्ग्रीवौ भवतो मुखे ।**
**नन्दिनी नामतः शाला तदा स्याद् गजवृद्धये ॥ ६ ॥**

**२. नन्दिनी गजशाला**—इसी (सुभद्रा गजशाला) में यदि प्रविष्ट होते ही (मुख पर) दो बड़े कमरे बने हों तो इस (गज) शाला को 'नन्दिनी' नामक गजशाला कहते हैं जो हाथियों की वृद्धि के लिए उत्कृष्ट फल देने वाली होती है ॥ ६ ॥

### ३. सुभोगदाशालानिरूपणम्

**अस्या एव यदा स्यातां प्राग्ग्रीवौ पार्श्वयोर्द्वयोः ।**
**तदा सुभोगदा नाम तृतीया परिकीर्तिता ॥ ७ ॥**

**३. सुभोगदा गजशाला**—इसी (नन्दिनी गजशाला) में प्रवेश करते ही मुख पर ही दोनों ओर यदि तीन बड़े कमरे हों तो यह 'सुभोगदा' नामक तीसरे प्रकार की गजशाला कही गई है ॥ ७ ॥

### ४. भद्रिकाशालानिरूपणम्

**अस्या एव यदा पृष्ठे प्राग्ग्रीवः क्रियतेऽपरः ।**
**भद्रिका नाम शाला स्यात् तदा द्विरदपुष्टिदा ॥ ८ ॥**

**४. भद्रिका गजशाला**—इसी (सुभोगदा गजशाला) में यदि पीछे की ओर पृथक् रूप से, एक प्रवेश होती ही कमरा यदि बनाया जाता है तो हाथियों को पुष्टि प्रदान करने वाली 'भद्रिका' नामक (चतुर्थ प्रकार की) गजशाला होती है ॥ ८ ॥

### ५. वर्षणीशालानिरूपणम्

**पञ्चमी चतुरस्रा स्याद् वर्षणी नाम पूजिता ।**

**प्राग्ग्रीवालिन्दनिर्यूहहीना षष्ठी तथापरा ॥ ९ ॥**

**५. वर्षणी गजशाला**—पाँचवी गजशाला चौकोर आकार की 'वर्षणी' नामक कही गई है जो अत्यन्त प्रशस्त होती है। प्रवेश द्वार पर बरामदे और निर्यूह (= बार्जा) से रहित एक अलग तरह की छठी प्रकार की गजशाला होती है ॥ ९ ॥

### ६. प्रमारिकाशालानिरूपणम्

**शाला प्रमारिका धान्यधनजीवितहारिणी ।**
**तदेतां वर्जयेत् कुर्यादन्याः सर्वार्थसिद्धये ॥ १० ॥**

**६. प्रमारिका गजशाला**—प्रमारिका नामक (छठी) गजशाला भवन, धान्य (अनाज) और अनन्त जीवन (= आजीविका) का भी अपहरण कर लेती है । अतः सर्वार्थसिद्धि के लिए अन्य प्रकार की गजशाला का निर्माण करे किन्तु 'प्रमारिका' नामक छठी गजशाला का परित्याग करे ॥ १० ॥

**प्रमारिकेति प्रथितेह शाला**
**सा प्राणसस्यद्रविणच्छिदे स्यात् ।**
**कुर्यादतस्तां न यथोदितास्तु**
**कार्याः परा जीवितवित्तवृद्ध्यै ॥ ११ ॥**

**॥ इति मन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे गजशाला नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥**

इस प्रकार 'प्रमारिका' नामक गजशाला प्राण, फसल तथा धन की हानि के लिए प्रसिद्ध होती है । अतः इसे छोड़कर अन्य प्रकार की उपरोक्त कही गई गजशाला का निर्माण जीवन तथा धन की वृद्धि के लिए करना चाहिए ॥ ११ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'गजशाला लक्षण' नामक बत्तीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ३२ ॥**



# समीक्षात्मक टिप्पणी

## गजशाला का प्रमाण (श्लोक ३२.१-११)

**१. वास्तुमण्डन** (श्लोक ५.२८-२९) ग्रन्थ में भी इसी प्रकार वर्णित है—

अश्वशाला तु वामाङ्गे सौम्यास्या द्विगुणोत्तरम् ॥ २८ ॥
सप्ताष्टनवहस्तोच्चा शालास्ते भागाच्च ।
गजानां प्राङ्मुखश्रेणी स्थाप्या वा दक्षिणानना ॥ २९ ॥

अश्वशाला को उत्तरमुखी वामाङ्ग में अन्य शालाओं की अपेक्षा दोगुना मान से बनाना चाहिए । गजशाला की ऊँचाई अन्य शालाओं की अपेक्षा सात, आठ या नौ हाथ रखनी चहिए । राजमहल में हाथियों की पंक्तियों को पूर्वमुखी अथवा दक्षिणमुखी रखना चाहिए ।

**२. अपराजितपृच्छा** में गजशाला के लिए भल्लाट पद को माना गया है—

**बाह्यदेवपंक्तिमध्ये राजवेश्मान्तमार्गतः ।**
**मुख्यभल्लाटसौम्येषु गजशालपंक्तिद्वयम् ॥**
**याम्योत्तरमुखं कार्य प्रशस्तं सर्वकामदम् ।**
**सौम्यान्ते हस्तिनीवेश्म तद्द्वारमपरोन्मुखम् ॥**

(अपराजित. ७६.३०-३१)

**३. वास्तुराजवल्लभ** (९.२९) में कहा गया है कि—

**भागे दक्षिणवामके च करिणां शाला हरेर्द्वारतः**
**कर्तव्या सुदृढोन्नता च कलशैर्घण्टादिभिर्भूषिता ।**
**संकीर्णो रसतो नगैर्निगदितो मन्दो मृगश्चाष्टतः**
**सर्वेषूत्तमभद्रजातिरुदितो नन्दैः करैरुछ्रितः ॥ २९ ॥**

सिंहद्वार के दक्षिण और वाम भाग में गजशाला बनानी चाहिए । गजशाला दृढ़ ऊँची और घण्टा कलश इत्यादि से युक्त रहनी चाहिए । ६ हाथ ऊँचा हाथी संकीर्ण, ७ हाथ का मन्द, ८ हाथ का मृग और सब से उत्तम ९ हाथ ऊँचा भद्रजाति का हाथी होता है ॥ २९ ॥

**४. मयमतम्** (२९.१७१-१८३) के अनुसार—

**त्रिहस्ताद्यर्ध हस्तादिवृद्ध्या पञ्चाकरान्तरका ।**
**पञ्चैव भक्तयस्ताभिर्हस्तिशाला विधीयते ॥ १७१ ॥**
**षण्णवेति चतुस्सप्त त्रिपञ्चैरिति कीर्तिताः ।**

**भक्तयस्त्रिविधा शाला विस्तारायामतः क्रमात् ॥ १७२ ॥**
**अल्पत्वे तु महत्त्वे तु यथा योग्यं तथाचरेत् ।**
**मुखशालैकभक्त्या तु मध्ये विस्तारनिर्गता ॥ १७३ ॥**

राजप्रसाद में गजशाला के लिए परिसर प्रमाण तीन हाथ से शुरू करें और आधा-आधा हाथ बढ़ते हुए पाँच हाथ तक अर्थात् तीन, साढ़े तीन, चार, साढ़े चार और पाँच इस प्रकार पाँच प्रकार के माान हस्तिशाला के लिए बताए गए हैं ।

हस्तिशाला के लिए आयाम को तीन प्रकार से ग्रहण किया जाना चाहिए । पहला अनुपात ९:६, दूसरा ७:४ एवं तृतीय अनुपात ५:३ का होगा । इसी अनुपात से गजशाला की लम्बाई-चौड़ाई रखनी चाहिए ।

हस्तिशाला के लघु-दीर्घ आकार के लिए राजमहल के लघु-महत् आकार को ध्यान में रखते हुए ही प्रमाण का आचरण करना चाहिए । यहाँ मुखशाला के मध्य में विस्तार और निर्गम एक भाग का कल्पित करना उचित है । इसके दक्षिण में एक भाग को शयन के लिए रखा जाना चाहिए ।



# अथ त्रयस्त्रिंशोऽध्यायः

## * अश्वशालालक्षणम् *

## (The Definition of the Stable )

**अथ लक्ष्माश्वशालायाः प्रोच्यते विस्तरादिह ।**
**स्ववेश्मवास्तोः कर्तव्यं पदे गन्धर्वसंज्ञके ॥ १ ॥**
**अथवा पुष्पदन्ताख्ये स्थानं वासाय वाजिनाम् ।**

**अश्वशाला के लिए वास्तुचक्र में गन्धर्व पद**—अब अश्वशाला के लक्षण को यहाँ विस्तार से कहते हैं । यह अश्वशाला वास्तुपद के 'गन्धर्व' पद पर बनानी चाहिए अथवा अश्वशाला का निर्माण वास्तु चक्र के पुष्पदन्त नामक पद पर करना चाहिए ॥ १-२ ॥

**अरत्निशतमात्रं यज्ज्येष्ठं तत् परिकीर्तितम् ॥ २ ॥**

**अश्वशाला का प्रमाण**—सौ अरत्नि विस्तार की 'ज्येष्ठ' अश्वशाला कही गई है ॥ २ ॥

**विमर्श**—दो बित्ता चौबिस अङ्गुल का एक अरत्नि होता है । अथवा कुहनी से कनिष्ठा (कानी) अङ्गुली के छोर तक की माप को 'अरत्नि' कहा जाता है । 'अरत्निस्तु निष्कनिष्ठेन मुष्टिना'—अमरकोश । 'मध्याङ्गुलिकूर्परयोर्मध्ये प्रामाणिकः करः बद्धमुष्टिकरे । रत्निररत्निः सकनिष्ठिकः—हलायुधकोश ।

अश्वशालार्थमुपयुक्तस्थानकथनम्

**अशीत्यरत्निकं मध्यं षष्ठ्यरत्न्यधमं भवेत् ।**
**स्थलप्रदेशे विपुले गुप्ते रम्ये शुचौ तथा ॥ ३ ॥**

अस्सी अरत्नि विस्तार वाली मध्यम अश्वशाला होती है और साठ अरत्नि विस्तार की अधम अश्वशाला कही गई है ।

**अश्वशाल के लिए उचित स्थान**—विस्तृत एवं सुरम्य तथा गुप्त स्थान पर और साफ सफाई वाले स्थान पर अश्वशाला का निर्माण करना चाहिए ॥ ३ ॥

**समे च चतुरस्रे च स्थिते(रे) मंगल्यमेव च ।**
**स्थानं हयानां कर्त्तव्यं प्रदेशे सुपरिक्रमे ॥ ४ ॥**

समतल एवं चौकोर भूमि पर अश्वों के खड़े होने के लिए सुन्दर अश्वशाला बनानी चाहिए । यह अश्वशाला चारों ओर (चहारदिवारी) से घिरी हुई गोल होनी चाहिए ॥ ४ ॥

**अश्वशालानिर्माणार्थं निषिद्धावृक्षाः भूमयश्च**

**निम्नगुल्मद्रुमस्थाणुचैत्यायतनवेश्मभिः ।**
**वल्मीकशर्कराभिश्च वर्जिते तत् समाचरेत् ॥ ५ ॥**

नीची भूमि, लता, वृक्षों, पत्थरों तथा चैत्य (= डीह), भवनों, वल्मीक एवं बालू से युक्त भूमि (= शर्कराभिश्च) को छोड़कर अश्वशाला बनाए ॥ ५ ॥

**निःसंगे शल्यहीने च प्रागुदक्प्रवणे तथा ।**
**प्रदेशे तद् विधातव्यमालोक्य सुसमाहितैः ॥ ६ ॥**

निःसंग (= अन्य शालाओं से रहित) और काँटों से रहित एवं पूर्वोत्तर क्षेत्र में स्थपति सावधान चित्त होकर शान्त प्रदेश का ज्ञान करके अश्वशाला बनाने का उपक्रम करे ॥ ६ ॥

**ब्राह्मणानुमते शस्ते दिने स्थपतिभिः सह ।**
**भूमेर्विभागमालोक्य सुभगानानयेद् द्रुमान् ॥ ७ ॥**

ब्राह्मणों द्वारा प्रशस्त दिन देखकर स्थपतियों के साथ भूमि का विभाग देखकर सुन्दर वृक्षों (की कलम) को लाना चाहिए ॥ ७ ॥

**अश्वशालार्थं शुभवृक्षविधानम्**

**न जाता ये श्मशानेषु देवतायतनेषु वा ।**
**अन्येष्वपि निषिद्धेषु जातान् वृक्षान् विवर्जयेत् ॥ ८ ॥**

**अश्वशाला के लिए शुभ वृक्षों का कथन**—श्मशान में उत्पन्न अथवा देव मन्दिर में लगे हुए वृक्षों को नहीं लाना चाहिए । इसी प्रकार अन्य निषिद्ध स्थान में उद्भूत वृक्षों को नहीं लाना चाहिए (अर्थात् किसी उद्यान अथवा किसी के घर से वृक्षों की कलम लाकर लगावे) ॥ ८ ॥

**वृक्षान् प्रशस्तानानीय समीपे भर्तृवेश्मनः ।**
**ततो भूमिं परीक्षेत प्रशस्तामथ निन्दिताम् ॥ ९ ॥**

उन प्रशस्त वृक्षों को लाकर राजा के भवन के समीप लगा दे फिर भूमि की परीक्षा करके प्रशस्त एवं निन्दित भूमि को समझे ॥ ९ ॥

**निषिद्धदेशजैर्वृक्षैस्तच्छालानिर्माणे फलम्**

**चितायतनवल्मीकग्रामधान्यखलेषु च ।**
**विहारेषु च कर्तव्यमश्वानां न निवेशनम् ॥ १० ॥**

चिता (कब्र) गृह, वल्मीक (चींटी का बाँबी) वाली भूमि, ग्राम की उपजाऊ भूमि तथा मठमन्दिर आदि विहार की भूमि में अश्वशाला का निर्माण न करे ॥ १० ॥

**भवन्ति स्वामिनः पीडा ग्रामधान्यखलेषु च ।**
**श्मशाने वेश्मकरणान्नराणां मृत्युमादिशेत् ॥ ११ ॥**

ग्राम-धान्य एवं खल-खलिहान की (काम लायक) जमीन पर अश्वशाला निर्माण से गृह स्वामी को विभिन्न प्रकार की पीड़ा उत्पन्न होती है । श्मशान भूमि पर अश्वशाला निर्माण से मनुष्यों की मृत्यु होती है ॥ ११ ॥

**स्थानं विहारवल्मीकविहितं स्यादनर्थकम् ।**
**तन्नित्यसन्तापकरं क्षयकृच्च तपस्विनाम् ॥ १२ ॥**

मठ (= विहार) या वल्मीक वाली विहित भूमि भी निष्फल और अनर्थ पीड़ा को उत्पन्न करने वाली होती है । मठ की भूमि वहाँ के तपस्वियों के लिए सन्ताप उत्पन्न करने वाली तथा विभिन्न प्रकार की पीड़ा प्रदान करती है ॥ १२ ॥

**दैवोपघातजननं स्त्रीणां च क्षयकारकम् ।**
**विहितं पादपैश्चैत्यैर्गृहं स्याद् भूतभीतिदम् ॥ १३ ॥**

यह भूमि दुर्भाग्य उत्पन्न करती है तथा स्त्रियों के लिए दुखदायी भी कही गई है। चैत्य (डीह) में उत्पन्न वृक्षों (की लकड़ी) से बनाए गए गृह भूत-पिशाचों का भय प्रदान करते हैं ॥ १३ ॥

**भवेद् रोगकरं भर्तुर्विहितं कण्टकिद्रुमैः ।**
**दीर्णायामुन्नतायां च कृतं भूमौ क्षयावहम् ॥ १४ ॥**

कटीले वृक्षें (की लकड़ी) से बने गृह या काँटेदार वृक्षों वाले गृह भवन स्वामी को रोग प्रदान करते हैं । स्थान-स्थान पर फटी हुई (= दीर्ण) भूमि या उन्नत (ऊपर उठी हुई ऊबड़-खाबड़) भूमि पर बनाई गई अश्वशाला गृहस्वामी का विनाश उत्पन्न करती है ॥ १४ ॥

निषिद्धभूमिषु तन्निवेशने फलम्

**नतायां क्षुद्भयकरं कृतं भवति मन्दिरम् ।**
**तस्मात् कार्यं प्रशस्तायां भूमौ तद् वाजिवृद्धये ॥ १५ ॥**

झुकी हुई (नत) भूमि पर बनी अश्वशाला (मन्दिर) भूख-प्यास की पीड़ा प्रदान करती है । इसलिए प्रशस्त भूमि पर ही अश्वशाला का निर्माण करना चाहिए ॥१५॥

अश्वशालास्थानविधानम्

**मङ्गल्यरमणीये च चतुरस्त्रे मनोनुगे ।**
**शुभे च विहितं सद्म भवेत् कल्याणकारकम् ॥ १६ ॥**

कल्याणकारक, मन को प्रसन्न करने वाले, रमणीय एवं चौकोर भूमि पर अश्वशाला का निर्माण करे । शुभ (= प्रशस्त) या विहित स्थान में बनी हुई अश्वशाला कल्याणकारक होती है ॥ १६ ॥

भर्तुर्गृहपरिसरे तन्निवेशने स्थाननियमाः

**निर्गच्छतो यथा वामे पार्श्वे भर्तृस्तुरंगमाः ।**
**भवन्ति कुर्यात् स्थपतिस्तथावाजिनिवेशनम् ॥ १७ ॥**

अश्वों के रहने का स्थान गृह स्वामी के घर से निकलने के वाम भाग में होना चाहिए । अतः स्थपति घुड़साल का निर्माण गृहस्वामी के घर से बाहर निकलने के बाँयी ओर करे ॥ १७ ॥

**अन्तःपुरप्रदेशस्य कार्यं दक्षिणतश्च तत् ।**
**प्रवेशे दक्षिणं तेषां हेषितं जायते यथा ॥ १८ ॥**

अन्तःपुर (घर की स्त्रियों का निवास स्थान) राजा उसके दक्षिण (प्रवेश द्वार पर) बनाए । दक्षिण प्रवेश द्वार पर बनाने से उन (घोड़ों के खरहा आदि करने पर उन) घोड़ों की हिनहिनाना आदि क्रिया से घोड़ों का रख-रखाव ठीक से सम्पन्न होता है ॥ १८ ॥

**तथा भर्तुर्हितार्थाय कर्त्तव्यं सद्म वाजिनाम् ।**
**प्रागुदग् वा मुखं तस्य विधातव्यं सतोरणम् ॥ १९ ॥**

अतः गृहस्वामी के हित के लिए घोड़ों की शाला तोरण युक्त एवं पूर्वमुख या उत्तर मुख बनानी चाहिए ॥ १९ ॥

**प्राग्ग्रीवकेण संयुक्तं चतुःशालमसंकटम् ।**
**दशारत्निसमुच्छ्रायमष्टरत्निप्रविस्तृतम् ॥ २० ॥**

शाला के प्रवेश स्थान से सटा हुआ एक चार कमरों वाला संकीर्णता रहित बड़ा कमरा (= हाल, सभागार) बनाना चाहिए । यह कमरा दस अरत्नि ऊँचा होना चाहिए तथा आठ अरत्नि विस्तृत होना चाहिए ॥ २० ॥

**शालायामश्वानां स्थानकल्पना**

**नागदन्तकसंशोभि पुरः कुड्यार्धसंयुतम्।**
**पृष्ठे समग्रकुण्ड्यं वा तत्र स्थानानि कल्पयेत्॥ २१ ॥**

यह घुड़साल घोड़ों को बाँधने के लिए खूँटों (नागदन्तक) या खम्भे से युक्त होना चाहिए तथा इसमें अर्द्ध ऊँचाई की दीवार खींची हो । पृष्ठ में चारो ओर दीवार (= कुड्य) खींची गई हो । उसमें घोड़ों के लिए स्थान बनाना चाहिए ॥ २१ ॥

**तानि तु प्राङ्मुखानि स्युस्तथैवोदङ्मुखानि च।**
**आयामे किष्कुमात्राणि त्रिकिष्कूणि च विस्तरात्॥ २२ ॥**

ये दीवालगत पूर्व मुख बने हों अथवा उत्तर मुख बनाना चाहिए । इनकी लम्बाई एक किष्कु अर्थात् एक बित्ता और इसका विस्तार तीन किष्कु होना चाहिए अर्थात् एक बित्ता लम्बा और तीन बित्ता गहरा खूँटा हो ॥ २२ ॥

**प्रांशून्नतोर्ध्वभागानि चतुरस्राणि कारयेत्।**
**अग्रोच्चां सुखसञ्चारां तेषु भूमिं प्रकल्पयेत् ॥ २३ ॥**

इस (खूँटे) का ऊर्ध्वभाग लम्बा (प्रांशू) और चौकोर बनाना चाहिए । यह आगे की ओर ऊँचा हो तथा सुखपूर्वक घूमने वाला हो, इसके लिए भूमि इस प्रकार की देखनी चाहिए ॥ २३ ॥

**स्थानं सूत्रस्य मध्ये तु हस्तमात्रं समन्ततः।**
**आस्तीर्णं च समश्लक्ष्णनीरन्ध्रैः फलकैर्दृढैः ॥ २४ ॥**

मध्य में रस्सी का स्थान मात्र एक हाथ ही होना चाहिए जो चारो ओर फैला हो तथा बराबर भाग के छिद्ररहित मजबूत तख्ते से बँधा हो ॥ २४ ॥

**धातक्यर्जुनपुन्नागककुभादिविनिर्मितैः।**
**अष्टाङ्गुलसमुच्छ्रायैरध्यर्धारत्निविस्तृतैः ॥ २५ ॥**

घातकी (आँवला), अर्जुन, पुन्नाग एवं ककुभ आदि की लकड़ी से यह तख्ता आठ अङ्गुल ऊँचा और उसका आधा ४ अङ्गुल (अर्थात् ८×६ इंच) चौड़ा बनाना चाहिए ॥ २५ ॥

**अच्छिद्रैः संहतैर्बद्धैरयसा पार्श्वयोर्द्वयोः ।**
**अजन्तुसंकुलैः काष्ठै रुचकाभि(?)र्भिषड्मतैः ॥ २६ ॥**

पटरा छिद्र रहित एवं संहत दोनों ओर से बँधा हुआ होना चाहिए । वह लकड़ी का कुन्दा या पटरा घुन आदि से संकुलित नहीं होना चाहिए । यह पटरा रुचक अर्थात् प्रतिभावान् वैद्य के द्वारा सम्मत होना चाहिए ॥ २६ ॥

### यवसस्थानकल्पना

**यवसस्य भवेत् स्थानं निर्यूहैः स्वास्तृतं शुभैः ।**
**किष्कुत्रयोच्छ्रितं तत् स्यादेकान्ते सुसमाहितम् ॥ २७ ॥**

घास का स्थान विस्तृत और शुभ होना चाहिए जो निर्यूह (= चहारदीवारी) से घिरा हो । यह बाड़ा (= किष्कु) तीन हाथ ऊँचाई में होना चाहिए जो एकान्त स्थान में हो और सभी प्रकार के कोलाहल से दूर हो ॥ २७ ॥

### अश्वस्य खादनकोष्ठविधानम्

**हस्तद्वयप्रमाणं च कुर्यात् खादनकोष्ठकम् ।**
**सूपलिप्तमदुर्गन्धि विस्तारोच्छ्राययोः समम् ॥ २८ ॥**

खाने की नाद दो हाथ लम्बी-चौड़ी बनानी चाहिए । इसे ठीक से लीप पोतकर रखना चाहिए । जिससे इसमें से चारा सड़ने की दुर्गन्ध आदि न आए । इस नाद का विस्तार तथा ऊँचाई सभी समान होनी चाहिए ॥ २८ ॥

### पादबन्धनकीलककल्पना

**स्थाने स्थाने त्रयः कीलाः सुदृढाः कपिशीर्षकाः ।**
**पश्चाङ्गीनिग्रहार्थं तौ पुरतः कल्पयेदुभौः ॥ २९ ॥**

स्थान-स्थान पर तीन सुदृढ़ कील घोड़ों को बाँधने के लिए लगाना चाहिए । इन कीलों का ऊपर का शीर्ष भाग एक बन्दर की आकृति का होना चाहिए जिससे बन्धन खिसक कर निकल न जावे । उन दोनों के सामने निग्रह हेतु (रोकने के लिए) एक-एक दीवार होनी चाहिए जिससे लगाम लगाई जा सके ॥ २९ ॥

**पश्चाद् बन्धार्थमेकं च सुगुप्तं परिकल्पयेत् ।**
**चतुर्हस्तायतं त्यक्त्वा शालाकोणचतुष्टयम् ॥ ३० ॥**

उस (अश्वशाला) के पृष्ठ भाग में एक चारो ओर से घिरा हुआ बन्धन स्थान होना चाहिए जिसमें घोड़े को बैठने-उठने के लिए चार हाथ लम्बा चार कोण वाला (चतुरस्र) भवन निर्मित हो ॥ ३० ॥

### शलानिर्माणाङ्गबलिहोमादिकरणकथनम्

**स्थानेष्वेतेषु तुरगान् सर्वेष्वपि निवेशयेत् ।**
**तत्र कुर्याद् बलिं होमं स्वस्तिवाचनकं जपम् ॥ ३१ ॥**

अब अश्वशाला में होमादि शान्तिकर्म के लिए स्थान कहते हैं—

(पूर्वमुख बने हुए अश्वशाला में) उपर्युक्त स्थानों पर सभी अश्वों को रखना चाहिए और वहीं पर पूर्व में बलि एवं होमादिक शान्ति कर्म, स्वस्तिवाचन तथा जपादिक क्रिया सम्पादित करे ॥ ३१ ॥

### प्रत्यृतुशालासंस्करणविशेषाः

**ग्रीष्मे कार्यं सुसंमृष्टं सिक्तं तत्र महीतलम् ।**
**वर्षास्वनम्बुपंकं च शिशिरे संवृतं शुभम् ॥ ३२ ॥**

**प्रत्येक ऋतु में विशेष कृत्य कथन**—गर्मी में मिट्टी की फर्श बनाकर पृथ्वी को ऐसा करे कि सिंचन से ठण्डक हो । वर्षा ऋतु में पानी एवं कीचड़ न रहे । शिशिर ऋतु में सभी ओर से (पर्दे आदि से) संवृत (ढकी हुई) अश्वशाला शुभ होती है ॥ ३२ ॥

### बहूनां तुरंगाणामनवस्थापननियमाः

**तिष्ठेयुस्तत्र तुरगा नातिसङ्कीर्णशङ्किनः ।**
**अस्पृशन्तो मिथः कार्याः सर्वाबाधविवर्जिताः ॥ ३३ ॥**

**बहुत से अश्वों को साथ रखने के नियम**—सभी अश्वों को एक साथ अश्वशाला में संकीर्णता में सटाकर नहीं रखना चाहिए । वे सभी एक दूसरे से अस्पृष्ट रहें और सभी को किसी प्रकार (घुटन वाला) संकुचित स्थान न प्राप्त हो ॥ ३३ ॥

### अश्वरक्षणाद्यर्थानामुपकरणानां संग्रहः

**स्थानं दक्षिणपूर्वस्यां दिशि वह्नेः प्रकल्पयेत् ।**
**निदध्यादुदकुम्भं च किञ्चिदैन्द्रीसमाश्रितम् ॥ ३४ ॥**

**अश्वों की रक्षा हेतु उपकरणों का संग्रह स्थल**—पूर्व एवं दक्षिण दिक् में अग्नि स्थापित करना चाहिए और ऐन्द्री (पूर्व) की दिशा में जल का घड़ा रखना चाहिए ॥ ३४ ॥

**ब्राह्म्यां दिशि प्रकर्त्तव्यं स्थानकं यवसस्य च ।**
**वायव्यां तु प्रकर्तव्यं स्थानमौदूखलं दिशि ॥ ३५ ॥**

भूँसा आदि खाद्य पदार्थ ब्राह्मी दिक् (पूर्व) में होना चाहिए । वायव्य (उत्तर पश्चिम) दिक् में (खली आदि कूटने के लिए) उलूखल रखना चाहिए ॥ ३५ ॥

**निःश्रेणयः कुशाः कूपाः कार्याश्च फलकावृताः ।**
**कुद्दालोद्दालगुडकाः शुक्तयोगाः खुरस्तथा ॥ ३६ ॥**

छुरी (Ladlers); घास एवं पानी के लिए कुएँ को चहारदीवारी (जगत) से घेर कर पत्थर की जगत बनानी चाहिए एवं कुश आदि से छप्पर लगाकर आच्छादित करना चाहिए । कुदाल, उदाल, गुड़, शुक्तयोग (the combinations of sour gruels) और खुर (perfumes or razor) भी वहाँ रखना चाहिए ॥ ३६ ॥

**कचग्रहण्यः शृंगं च तथा परशवोऽपि च ।**
**नाद्याः(?)प्रदीपाश्च भवन्त्यश्वागारोपयोगिनः ॥ ३७ ॥**

कचग्रहणी (बाल काटने हेतु कैंची), शृङ्ग तथा परशु (फरसा) नाद या रस्सी और दीपक आदि अश्वागार के लिए उपयोगी वस्तुओं को संग्रहीत कर रखना चाहिए ॥ ३७ ॥

**संग्रहः सुखसञ्चारवस्तूनां नैर्ऋते भवेत् ।**
**अग्न्युपद्रवरक्षार्थं बन्धच्छेदोपयोगिनः ॥ ३८ ॥**
**पदार्थान् सन्निधौ कुर्याज्जलदीपादिकान् बुधः ।**
**भाण्डानि कुर्याच्च पृथग् ज(न्द्रा)लोपनयनेच्छया ॥ ३९ ॥**

इस प्रकार सुखकारक वस्तुओं का संग्रह घुड़साल में नैर्ऋत्य कोण में करना चाहिए । बुद्धिमान सईस अग्नि के उपद्रव से रक्षा के लिए जल, घोड़ों को बाँधने और छोड़ने के लिए उपयोगी रस्सी आदि पदार्थ जल एवं दीपक के समीप रक्खे। जल लाने के लिए बाल्टी आदि बर्तनों को इनसे अलग रखना चाहिए ॥ ३८-३९ ॥

**हस्तवासीं शिलां दीपं दर्वीं फालमुपानहौ ।**
**पिटकानि विचित्राणि बस्तीन् नानाविधानपि ॥ ४० ॥**

हस्तवासी शिला (दीप रखने के लिए ताखा), दीप और सूप (दर्वी) फाल एवं जूते, बक्सा और नाना प्रकार के बस्ती एवं ढेकी (बाँस का तेल पिलाने का पात्र) को वहाँ रखना चाहिए ॥ ४० ॥

**एवंविधानि चान्यानि संनिदध्यात् प्रयत्नतः ।**
**पुरःस्तम्भाश्रितं भाण्डं सन्नाहादेर्विधीयते ॥ ४१ ॥**

इस प्रकार अपने बुद्धि से प्रयत्नपूर्वक अश्वों के उपयोग के नानाविध पदार्थों का संग्रह करना चाहिए। विभिन्न सन्नाह के बर्तनों को खम्भे के बगल में अपने और घोड़ों के समक्ष ही रखना चाहिए ॥ ४१ ॥

**प्राङ्मुखाभिमुखायां शालायां तुरगबन्धनस्थानकथनम्**

**प्राङ्मुखे तुरगं गेहे वारुण्यां स्थापयेद् दिशि।**
**पूर्वामुखे पदे वापि मित्रस्य वरुणस्य च ॥ ४२ ॥**

**घोड़ों का दिङ्मुख विवेचन**—भूमि के वारुणी अर्थात् पश्चिम दिशा में पूर्वमुख बनाए गए द्वार वाले गृह में घोड़ों को पूर्वमुख करके बाँधे अथवा मित्र (आदित्य) या वरुण के पद पर पूर्वमुख स्थापित गृह में घोड़ों को रक्खे ॥ ४२ ॥

**भवन्ति तेन बहवः पुष्टिं च प्राप्नुवन्ति ते।**
**सा हि दिक् पूजनीया च स्तोतव्या च प्रकीर्तिता ॥ ४३ ॥**

**पूर्व दिशा का प्राशस्त्य कथन**—इससे वे बहुत हो जाते हैं और पुष्टि को भी प्राप्त करते हैं। क्योंकि वह पूर्व दिशा पूजनीय एवं स्तुत्य कही गई है ॥४३॥

**होमशान्तिकदानेषु धर्म्या याश्च पराः क्रियाः।**
**तासु प्रशस्यते पूर्वा शक्रेणाधिष्ठिता स्वयम् ॥ ४४ ॥**

होमादि शान्तिकर्म एवं दान आदि धार्मिक क्रिया का सम्पादन इस दिशा में होता है और इन्द्र द्वारा स्वयं इसे अधिष्ठित (occupied) किया गया है अतः पूर्व दिशा को प्रशस्त समझा जाता है ॥ ४४ ॥

**तस्यामुदेति दिनकृदनुलोमं ततः पुनः।**
**अश्वानां पृष्ठतो याति स प्रतीचीमनुक्रमात् ॥ ४५ ॥**

क्योंकि इस दिशा में (अन्धकार को हटाकर) दिन का सम्पादन करने वाले सूर्य अनुलोम क्रम से उदित होते हैं और पुनः पश्चिम में अश्वों के पृष्ठभाग में अनुक्रम (serial order) से अस्त होकर (फिर उदित होकर अश्वों के) सम्मुख आ जाते हैं ॥ ४५ ॥

**स्नानाधिवासने पूजा मांगल्यानि पराणि च।**
**प्राङ्मुखानां तुरंगाणां कर्त्तव्यानि शुभार्थिभिः ॥ ४६ ॥**

शुभ चाहने वाले स्वामी को घोड़ों का स्नान, अधिवास, पूजा एवं अन्य मङ्गल कार्य प्राङ्मुख होकर करना चाहिए ॥ ४६ ॥

**एवं कृते भूमिबलमित्राणां यशसोऽपि च।**

**वृद्धिर्भवति भूपस्य तस्मात् प्राची प्रशस्यते ॥ ४७ ॥**

ऐसा करने से राजा के भूमिबल (सैन्य बल) तथा मित्रों एवं यश आदि की वृद्धि होती है । अतः पूर्व दिशा प्रशस्त कही गई है ॥ ४७ ॥

**भर्तृवृद्धिप्रदं स्थानमग्रग्रासस्य तद् भवेत् ।**

यह स्थान स्वामी के लिए वृद्धिदायक होता है । अतः उनके सम्मुख ही घास आदि खाद्य पदार्थ वहाँ रखना चाहिए ॥ ४८ ॥

### दक्षिणाभिमुखायामुत्तराभिमुखायां च शालायामश्वबन्धनस्थानादिकम्

**दक्षिणाभिमुखायां तु शालायां वाञ्छितार्थदम् ॥ ४८ ॥**
**स्थानं भवति वाहानां पदे क्लृप्तं विभावसोः ।**
**वह्निनाध्यासिता सा दिग् आत्मा वह्निश्च वाजिनाम् ॥ ४९ ॥**
**अजरो बहुभोक्ता च तत्र बद्धो भवेद्धयः ।**

**दक्षिणाभिमुख का शुभ या अशुभ विचार**—दक्षिणाभिमुख घुड़साल वाञ्छित फल देने वाली कही गई है । अश्वों के लिए बैठने का स्थान अग्निकोण में होना चाहिए । वस्तुतः अग्नि के द्वारा अधिष्ठित इस दिशा में अश्वों की आत्मा (शक्ति) व्याप्त रहती है । अतः रोग रहित रखने के लिए और पर्याप्त भोजन के लिए अश्वों को अग्निकोण की ओर ही बाँधना उचित होता है ॥ ४८-५० ॥

### उदङ्मुखस्य शुभाशुभविवेचनम्

**उदङ्मुखेऽपि भवने प्राप्नुवन्ति शुभं हयाः ॥ ५० ॥**
**तथास्थितानामश्वानां दक्षिणेन दिवाकरः ।**
**उदेत्यनन्तरं याति तान् विधाय प्रदक्षिणम् ॥ ५१ ॥**

**उत्तर दिङ्मुख घोड़ों को बाँधने का शुभाशुभ विचार**—अश्वों को उत्तरमुख बाँधने से भी शुभ फल प्राप्त होते हैं । उस प्रकार से उत्तरमुख बाँधे गए अश्व के दक्षिण से होकर सूर्य पुनः पूर्व में उदित होते हैं और अश्वों के लिए सूर्य प्रदक्षिण गमन करते हैं ॥ ५०-५१ ॥

**प्रयाति वामतोऽश्वं च(श्वानां) स्थाप्यास्तेनोत्तरामुखाः ।**
**चन्द्रार्कौ प्रतिहर्ष(हेष)न्ते तथा बध्नीत वाजिनः ॥ ५२ ॥**
**नृपतिश्च जयं सिद्धिं पुत्रानायुश्च विन्दति ।**
**अरोगाश्च भवन्त्यश्वा वर्धयन्ति च सन्ततिम् ॥ ५३ ॥**

उत्तर दिशा में इस प्रकार अश्वों को बाँधना चाहिए जैसे वे सूर्य और चन्द्र के

वामभाग में अवस्थित रहें। इस प्रकार करने से राजा विजय प्राप्त करता है तथा शासन में उसे सिद्धि मिलती है और पुत्र एवं पौत्र प्राप्त कर दीर्घायुष्य प्राप्त करता है। इससे अश्व भी निरोग रहते हैं और उनकी सन्तति भी वृद्धि को प्राप्त करती है ॥ ५२-५३ ॥

**सान्नाह्यादीनामश्वानां दक्षिणपश्चिमाग्नेयीनैर्ऋत्याभि-**
**मुख्येन बन्धनस्य निषेधः**

**दक्षिणाभिमुखान् कुर्यान्न सन्नाह्यान् न चाग्रगान्।**
**पितृकार्याद्यतोऽन्यत्र दक्षिणा वर्जितैव दिक् ॥ ५४ ॥**

**दक्षिणाभिमुख बाँधने का निषेध**—अश्वों की नाद दक्षिण-पश्चिम अर्थात् आग्नेय और नैर्ऋत्य की ओर करके नहीं रखना चाहिए। यह दिशा पितृ कार्य के लिए उपयुक्त कही गई है अतः दक्षिण दिशा में अश्वों को बाँधने का निषेध किया गया है ॥ ५४ ॥

**अस्यामेव दिशि प्रेता यतः सर्वे प्रतिष्ठिताः।**
**उदेति वामतो याति चास्तं दक्षिणतो रविः ॥ ५५ ॥**

क्योंकि समस्त प्रेत गण इसी दिशा में प्रतिष्ठित होते हैं और सूर्य भी दक्षिण के बाएँ होकर उदित होते हैं तथा दक्षिण की ओर ही अस्त होते हैं। अतः यह दिशा अश्वों के लिए निषिद्ध कही गई है ॥ ५५ ॥

**सोमश्च पृष्ठे भवति तेनाश्वा दैवपीडिताः।**
**ग्रहैर्विकारैर्विविधैः पीड्यन्तेऽरातिविह्वलाः ॥ ५६ ॥**

दक्षिण दिशा में अश्वों को बाँधने पर सोम (चन्द्र) भी घोड़ों के पृष्ठभाग में पड़ जाते हैं। अतः घोड़े दैवी प्रकोप को प्राप्त करते हैं। ग्रह जन्य विविध प्रकार की पीड़ा भी उन्हें उपस्थित होती है और वे अत्यन्त विह्वल हो जाते हैं ॥ ५६ ॥

**भयेन व्याधिभिश्चार्ता ग्रासं नेच्छन्ति खादितुम्।**
**पराजयमतुष्टिं च स्वामिनोऽनर्थसंगतिम् ॥ ५७ ॥**
**कुर्वन्त्यतो न बध्नीयात् कथञ्चिद् दक्षिणामुखान्।**

व्याधि एवं (प्रेत) भय से आर्त हुए वे अश्व खाने की ओर प्रवृत्त भी नहीं होते हैं तथा ग्रास भी नहीं उठाते हैं। इससे स्वामी को भी अनर्थ प्राप्त होता है और पराजय तथा अप्रसन्नता रहती है। अतः दक्षिणाभिमुख अश्वों को नहीं बाँधना चाहिए ॥ ५७-५८ ॥

**पश्चिमाभिमुखस्य शुभाशुभविवेचनम्**

**पश्चिमाभिमुखानां च बद्धानां वाजिनां सदा ॥ ५८ ॥**

**उदेति पृष्ठतो भानुः पुरतोऽस्तं प्रयाति च ।**
**न भवेद् विजयस्तेन भर्तुस्तत्पृष्ठवर्तिनः ॥ ५९ ॥**

**पश्चिमाभिमुख बाँधने का शुभाशुभ विचार**—यदि अश्वों को सदैव पश्चिमाभिमुख बाँधते हैं तो घोड़ों के पृष्ठभाग में सूर्य उदित होते हैं और उनके सामने अस्त होते हैं । स्वामी के पृष्ठवर्ती होने के कारण उनको विजय नहीं प्राप्त होती है ॥ ५८-५९ ॥

**शक्रस्य पृष्ठवर्तित्वात् प्रातिलोम्याच्च भास्वतः ।**
**कुप्यन्ति व्याधयस्तेषां तूर्णं देहविनाशनाः ॥ ६० ॥**

इन्द्र के पृष्ठवर्ती होने से और सूर्य के प्रतिलोम होने के कारण उन घोड़ों में विविध प्रकार के रोग उत्पन्न हो जाते हैं और अश्वों को अस्वस्थता प्राप्त हो जाती है और उनकी मृत्यु शीघ्र ही हो जाती है ॥ ६० ॥

**तैस्ते ध्यायन्ति वेपन्ते जले त्रासं प्रयान्ति च ।**
**यवसं नाभिनन्दन्ति क्षमां मुञ्चन्ति सर्वथा ॥ ६१ ॥**

पश्चिमाभिमुख बाँधने से वे सुस्त (ध्यायन्ति) हो जाते हैं और अस्वस्थता से उनके शरीर में कम्प होता है तथा जल (= स्नान) में भी कष्ट का अनुभव करते हैं । वे भूँसा आदि खाद्य पदार्थ ग्रहण न करके भूमि पर बैठने में भी वैकल्य को प्राप्त करते हैं ॥ ६१ ॥

### आग्नेय्यादिदिक्वर्जनत्वकथनम्

**दिशोऽभिमुखमाग्नेय्या बध्यन्ते यदि वाजिनः ।**
**व्यथन्ते रक्तपित्तोत्थैस्तदा रोगैरनेकधा ॥ ६२ ॥**

आग्नेयी (पूर्व-दक्षिण का कोना) दिक् में यदि घोड़े बाँधे जाते हैं, तो उन्हें रक्त-पित्त का रोग उत्पन्न हो जाता है और वे विभिन्न प्रकार के रोगों से आक्रान्त हो जाते हैं ॥ ६२ ॥

**जायन्ते स्वामिनो बन्धवधहृच्छोषदायिनः ।**
**वाजिनां च भवेत् तत्र वह्निदाहकृतं भयम् ॥ ६३ ॥**
**भर्तुः पराजयो विघ्नः स्याच्च देहस्य संशयः ।**

अश्व के स्वामी को भी बन्धनकारी राजरोग और वध उत्पन्न करने वाला हृत्शूल उत्पन्न हो जाता है । आग्नेय कोण में घोड़ों को अग्नि-दाह का भी भय बना रहता है । स्वामी की पराजय होती है । पग-पग पर विघ्न बाधा उपस्थित होती रहती है ॥ ६३-६४ ॥

### नैर्ऋत्यदिक्वर्जनत्वकथनम्

**नैर्ऋत्याः ककुभो वाहा बध्यन्ते सम्मुखं यदि ॥ ६४ ॥**
**तदा न तेऽभिनन्दन्ति खादनं पानभोजने ।**

यदि नैर्ऋत्य कोण के सम्मुख अश्व बाँधे जाते हैं तो वे भोजन एवं जलादि खाद्य सामग्री नहीं ग्रहण करते हैं ॥ ६४-६५ ॥

**यथा यथा क्षितिं पादैर्दारयन्ति पुनः पुनः ॥ ६५ ॥**
**हेषन्ते वीक्ष्य बहुशो मनुष्यान् पक्षिणः पशून् ।**

किसी-किसी प्रकार पृथ्वी पर अपना पैर पटक कर खुर से पुनः पुनः पृथ्वी उकेरते रहते हैं । इतना ही नहीं पागलों की भाँति मनुष्यों एवं पशु-पक्षियों को देखकर बारम्बार हिनहिनाते रहते हैं ॥ ६५-६६ ॥

**भ्रमयन्ति च गात्राणि नैर्ऋतीं चाभितः स्थिताः ॥ ६६ ॥**
**तथा तथैषां कुपिता नाशं कुर्वन्ति राक्षसाः ।**

वस्तुतः नैर्ऋत्य दिक् में निर्ऋति नामक राक्षसी चारों ओर स्थित होकर अश्वों के अंगों को भ्रमित करती रहती है । अश्व-बन्धन से कुपित होकर नैर्ऋत्य दिग्गत राक्षस भी विभिन्न प्रकार से उन्हें सताते हैं ॥ ६६-६७ ॥

### वायव्यादिदिक्वर्जनत्वकथनम्

**बध्यन्ते यदि वाज्ञानाद् वायव्याभिमुखं हयाः ॥ ६७ ॥**
**तदा ते वातिकै रोगैः पीड्यन्ते प्रतिवासरम् ।**
**चलः कायो भवेद् भर्तुः क्लेशश्चाश्वोपजीविनाम् ॥ ६८ ॥**
**नराणां च भवेन्मृत्युर्दुर्भिक्षप्रभवं भयम् ।**

**वायव्यदिक् के अभिमुख घोड़ों को बाँधने का निषेध**—घोड़ों को गलती से भी असावधानीवश यदि वायव्याभिमुख करके बाँधा जाता है तो वे एक-एक दिन वात रोग से पीड़ित रहते हैं । इन घोड़ों के स्वामी एवं अश्व से आजीविका चलाने वाले सदैव चलायमान रहते हैं । उन्हें दुर्भिक्ष का भय होता है और उनके आश्रित जनों की मृत्यु भी हो जाती है ॥ ६७-६९ ॥

### ऐशान्यभिमुखवर्जनत्वकथनम्

**ऐशान्यभिमुखं बद्धाः प्रणश्यन्ति तुरंगमाः ॥ ६९ ॥**
**सूर्योदयस्याभिमुखं बद्धानां चेदमादिशेत् ।**
**निबध्यन्ते यदा वाहा ब्राह्मीं दिशमुपाश्रिताः ॥ ७० ॥**

**ब्राह्म्यां दिश्यनुवंशस्थाने च तद्बन्धननिषेधः**

**बध्यन्ते ते ग्रहैर्दिव्यैर्व्याधिभिश्च विचिन्तनाः ।**
**कव्यहव्यक्रियास्तत्र भर्तुर्न विजयावहाः ॥ ७१ ॥**
**द्विजानामुपतापाय जायन्ते तत्र वाजिनः ।**

ऐशानी दिशा (ईशान कोण) पर यदि अश्व बाँधे जाते हैं तो अश्व उस दिशा के प्रभाव से नष्ट हो जाते हैं । यदि सूर्योदय के अभिमुख अश्व बाँधे जाते हैं तो ठीक रहता है । ब्राह्मीं दिक् में यदि अश्व बाँधे जाते हैं तो वे ग्रहों से एवं अन्यान्य व्याधियों से ग्रस्त हो जाते हैं । उसके स्वामी की कव्य एवं हव्य क्रिया ठीक नहीं होती है और उसके लिए वह विजयावह भी नहीं होती है । वस्तुतः वहाँ पर घोड़े ब्राह्मणों को उपताप उत्पन्न करते हैं ॥ ६९-७२ ॥

**अनुवंशं च शालायां स्थानमश्वस्य नेष्यते ॥ ७२ ॥**
**स्वामिनस्तदजीर्णाय स्यान्नाशाय च वाजिनाम् ।**
**स्थाने प्रशस्ते तुरगान् सर्वथा वासयेदतः ॥ ७३ ॥**

अश्वशाला के अनुवंश में भी घोड़ों के बाँधने का उचित स्थान नहीं है । उसके स्वामी को अजीर्ण रोग उत्पन्न होता है और घोड़े भी नष्ट हो जाते हैं । अतः प्रशस्त स्थान में ही घोड़ों को बाँधना चाहिए ॥ ७२-७३ ॥

**रुग्णानामितरेषां च बन्धने नियमाः**

**न च धार्याः क्षणमपि रोगिणः कल्यसन्निधौ ।**
**कल्यानामपि रोगाः स्युर्यतो रोगिसमाश्रयात् ॥ ७४ ॥**

निःसन्देह रूप से रोग ग्रस्त घोड़े को स्वस्थ घोड़ों के सथ क्षण भर भी नहीं रखना चाहिए । क्योंकि रोगी घोड़े का रोग स्वस्थ घोड़ों में फैल जाता है ॥७४॥

**अश्वस्यारोग्यार्थं भेषजतदुपकरणारिष्टव्याधिताश्वमन्दिराणां स्थानानि चिकित्सोपकरणानि च**

**हयागारस्य पूर्वेण कार्यं भेषजमन्दिरम् ।**
**तस्यैव वामतः सर्वसम्भारान् परिकल्पयेत् ॥ ७५ ॥**
**वाजिनां भेषजार्थाय भाण्डानि च विनिक्षिपेत् ।**
**अगदानोषधीः स्नेहान् वर्तीश्च लवणानि च ॥ ७६ ॥**

**अश्व के लिए अस्पताल**—घुड़साल के पूर्व भाग में एक अस्वस्थ घोड़ों को दवा आदि देने का अस्पताल होना चाहिए । उस अस्पताल के बाएँ ठीक बगल में ढेकी आदि दवा देने के यन्त्र एवं बर्तन को रखने और खरहरा करने का

स्थान (अरिष्टगृह) होना चाहिए । इस अरिष्टगृह में, जो भेषजागार से सटा रहता है, रोग के निवारण हेतु औषधियाँ, तैल एवं वर्तिका तथा नमक आदि रहना चाहिए ॥ ७५-७६ ॥

### अरिष्टगृहविधानम्

**भेषजागारसविधे कुर्याच्चारिष्टमन्दिरम् ।**
**भवनं व्याधितानां च कार्यं वासाय वाजिनाम् ॥ ७७ ॥**

### उक्तानां चतुर्णां मन्दिराणां सामान्यविधिः

**सुगुप्तं तच्च कर्त्तव्यं पूर्वनिर्दिष्टवेश्मवत् ।**
**संबद्धं च विधातव्यमेतद् वेश्मचतुष्टयम् ॥ ७८ ॥**

**स्वास्थ्य लाभार्थ घुड़साल-भवन**—दवाओं के कमरे से सटा हुआ घोड़ों के स्वास्थ्यलाभ के लिए एक अरिष्ट भवन (क्लीनिक) बनाना चाहिए । यह भवन व्याधिग्रस्त घोड़ों के लिए (आठ दस खूँटों वाला) बनाना चाहिए जिसमें वे बीमार घोड़े आराम से रह सकें । यह भवन पूर्व निर्दिष्ट घुड़साल से एकदम अलग रहना चाहिए । अतः इनके चार गृह एक दूसरे से सम्बद्ध बनाना चाहिए ॥ ७७-७८ ॥

**सुधाबन्धदृढैः कुड्यैः सप्राग्ग्रीवोच्चतोरणम् ।**
**चत्वार्यपि विशालानि सुगमानि च कारयेत् ।**
**वेश्मस्वेवंविधेष्वाश्वान् स्थापितान् परिपालयेत् ॥ ७९ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे अश्वशाला नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥**

...❧❀❧...

ये चारों भवन विशाल होने चाहिए और घोड़ों के आने जाने के लिए सुगम्य, चूना आदि से लीपा-पोता हुआ सुदृढ़ तथा प्राग्ग्रीव (आगे का कमरा) एवं तोरण से युक्त रहना चाहिए । इस प्रकार के गृहों में अश्वों को रखकर उनका भरण-पोषण करना चाहिए ॥ ७९ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'अश्वशाला' नामक तैंतीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ३३ ॥**



# समीक्षात्मक टिप्पणी

## अश्वशाला का प्रमाण (श्लोक ३३.१-११)

१. **वास्तुमण्डन** (श्लोक ५.२८-२९) ग्रन्थ में भी इसी प्रकार वर्णित है—

अश्वशाला तु वामाङ्गे सौम्यास्या द्विगुणोत्तरम् ॥ २८ ॥
सप्ताष्टनवहस्तोच्चा शालास्ते परा भागाच्च ।
गजानां प्राङ्मुखश्रेणी स्थाप्या वा दक्षिणानना ॥ २९ ॥

अश्वशाला को उत्तरमुखी वामाङ्ग में अन्य शालाओं की अपेक्षा दोगुना मान से बनाना चाहिए । गजशाला की ऊँचाई अन्य शालाओं की अपेक्षा सात, आठ या नौ हाथ रखनी चहिए । राजमहल में हाथियों की पंक्तियों को पूर्वमुखी अथवा दक्षिणमुखी रखना चाहिए ।

२. **अपराजितपृच्छा** में अश्वशाला के लिए सुग्रीव, पुष्पदन्त, वरुण एवं असुर पद को भी माना गया है—

सुग्रीवपुष्पदन्तयोर्वरुणासुरयोस्तथा ।
अश्वशाला द्वादशैव कर्त्तव्याश्च शुभोत्तमाः ॥
अर्धे तवङ्गनिष्कास? सैन्यविस्तरविस्तृतम् ।
प्राकारसमुत्सेधानि त्रिमाडानि तदूर्ध्वतः ॥
(अपराजित. ७६.२२-२३)

## अश्वशाला का स्थान (श्लोक ३३.१७-२१)

१. **वास्तुराजवल्लभ** (९.२४-२५) में इस प्रकार कहा गया है —

तुरङ्गमाणां गृहवामभागे शाला चतुष्षष्टिकरा विधेया ।
शतार्द्धतो माध्यमिका च दैर्घ्ये कनीयसी तैर्दशभिर्विहीना ॥
व्यासे च ज्येष्ठा तिथिहस्तमाना त्रयोदशैकादशभिः क्रमेण ।
तद्बाह्यभित्तिश्च करप्रमाणा पंचार्द्धपंचाब्धिकरोदया स्यात् ॥

राजभवन के वामभाग में चौसठ हाथ लम्बी एवं पन्द्रह हाथ चौड़ी अश्वशाला बनानी चाहिए । पचास हाथ लम्बी एवं तेरह हाथ चौड़ी अश्वशाला मध्यम मान की होती है तथा चालीस हाथ लम्बी एवं ग्यारह हाथ चौड़ी अश्वशाला कनिष्ठ मान की कही गई है ।

२. **मयमतम्** (२९.१८४-१९०) के अनुसार—

नवाष्टसप्तषट्पञ्चहस्ते पञ्चविसारिणि ।

त्रयभक्त्याद्यैकविंशद्भक्त्यान्तायाममीरितम् ॥
चतुर्मुखचतुश्शाला सप्रग्रीवाश्च शालकाः ।
दशद्वादशहस्तैर्वा स्तम्भव्यासं प्रकीर्तितम् ॥
त्रिचतुःपञ्चषड्हस्तेः कुड्योत्सेधं विधीयते ।
अभिन्नानां तु भिन्नानां भित्तिबन्धं यथेष्टतः ॥

अश्वशाला के पाँच मान होते है—नौ, आठ, सात, छः और पाँच हाथ विस्तार प्रमाण कहा गया हैं । इसकी लम्बाई तीन से लेकर इक्कीस हाथ तक होती है । अश्वशाला को चतुर्मुख बनाना चाहिए । इसके प्रत्येक मुख पर 'प्रग्रीवा' का विधान है । स्तम्भों की ऊँचाई का प्रमाण दस या बारह हाथ होता है। अश्वशाला की कुड्य या भित्ति की ऊँचाई तीन, चार, पाँच अथवा छः हाथ होनी चाहिए । भवन भिन्न हो या अभिन्न हो उनके अनुसार ही भित्तियों का यथेष्ट संयोजन होना चाहिए ।



# अथ चतुस्त्रिंशोऽध्यायः

## * अप्रयोज्यप्रयोज्यम् *

## (Legible and Illegible Building Material and Wall-Paintings)

**राज्ञां सेनापतीनां च वर्णिनामपि वेश्मसु ।**
**यदि वा वास्तुकक्षासु सभादेवकुलेषु च ॥ १ ॥**

**भवन निर्माण में प्रयुक्त की जाने वाली तथा नहीं प्रयुक्त की जाने वाली वस्तुओं का वर्णन**—राजाओं के एवं सेनापतियों के तथा ब्राह्मण, क्षत्रियादि चारो वर्णों के भवनों में, वास्तुकक्षाओं में तथा सभागृहों में और देवमन्दिरों में प्रयोग में आने वाली और प्रयोग में नहीं आने वाली वस्तुओं का वर्णन करते हैं ॥ १ ॥

**शयनासनयानेषु भाजनाभरणेषु च ।**
**छत्रध्वजपताकासु सर्वोपकरणेषु च ॥ २ ॥**
**अप्रयोज्यानि यानि स्युः प्रयोक्तव्यानि यानि च ।**
**विस्तरात् तानि कथ्यन्ते हितार्थमथ देहिनाम् ॥ ३ ॥**

शय्यागृह, आसन, यान, भोजन एवं अलङ्कार, छत्र, ध्वजा और पताका आदि सभी उपकरणों में जो वस्तुएँ अप्रयोज्य कही गई हैं और जो प्रयोज्य हैं यहाँ प्राणियों के हित के लिये उन सभी का विस्तारपूर्वक वर्णन किया जाता है ॥ २-३ ॥

### राजादीनां वेश्मष्वप्रयोज्यानां परिगणनम्

**पूर्वोक्तानां नृपादीनां यानि वेश्मसु केवलम् ।**
**अप्रयोज्यानि तान्येव पूर्वमत्राभिदध्महे ॥ ४ ॥**

**भवन के सौन्दर्य में अप्रयोज्य वस्तुएँ या उपकरण**—पूर्वोक्त राजा आदि लोगों के वेश्मों में जो वस्तुएँ अप्रयोज्य बताई गई हैं केवल उनको ही पहले यहाँ पर कहते हैं ॥ ४ ॥

**तेषु प्रयोज्यानां प्रदर्शनोपक्रमः**

**तेषु नैव प्रयोक्तव्याः समस्ता अपि देवताः ।**
**दैत्या ग्रहास्तथा तारा यक्षगन्धर्वराक्षसाः ॥ ५ ॥**
**पिशाचाः पितरः प्रेताः सिद्धविद्याधरोरगाः ।**
**चारणा भूतसङ्घाश्च तेषां योषाः सुतास्तथा ॥ ६ ॥**
**प्रतीहाराः प्रतीहार्यस्तेषामधिकृताश्च ये ।**
**आयुधानि तदीयानि सर्वे चाप्सरसां गणाः ॥ ७ ॥**

**अप्रयोज्य चित्रकर्म**—उनमें समस्त देवताओं (के चित्र) को प्रयोज्य नहीं कहा गया है । दैत्य, ग्रह, तारा, यक्ष, गन्धर्व, राक्षस, पिशाच, पितर, प्रेत, सिद्ध, विद्याधर, नाग, चारण और भूतसङ्घ तथा उनकी स्त्रियाँ और पुत्र, पुरुष-प्रतिहार (चौकीदार) तथा स्त्री प्रतिहारिणी एवं उनके अधिकारी वर्ग, उनके शस्त्र और अस्त्र अथवा सब अप्सराओं के गण इत्यादि सब के सब प्रयोज्य नहीं कहे गये हैं ॥ ५-७ ॥

**दीक्षितव्रतिपाषण्डिनास्तिकाः क्षुत्प्रपीडिताः ।**
**व्याधिबन्धनशस्त्राग्नितैलासृक्पङ्कपांसुभिः ॥ ८ ॥**
**शूलज्वरादिभिश्चार्ता येऽन्येऽप्येवंविधा नराः ।**
**मत्तोन्मत्तजडक्लीबनग्नान्धबधिरादयः ॥ ९ ॥**

**राजकर्म में वर्जित जन**—दीक्षित, व्रती, पाखण्डी, नास्तिक, क्षुधा से व्याकुल, व्याधि, बन्धन, शस्त्र, अग्नि, तैल, रुधिर, पङ्क, धूलि धूसरित, शूल (= दर्द) और ज्वरादि से पीड़ित लोग, मत्त, उन्मत्त, जड़, नपुंसक, नङ्गे, अन्धे और बहिरे आदि व्यक्तियों को भी राजकर्म में प्रयुक्त नहीं करना चाहिए ॥ ८-९ ॥

**दोलाक्रीडाश्च नेष्यन्ते ग्रहणानि च दन्तिनाम् ।**
**देवासुराद्याः सङ्ग्रामा विग्रहाश्च महीक्षिताम् ॥ १० ॥**

**गृह चित्र का निषेध**—दोला (झूले आदि झूलने) की क्रीडाएँ, हाथियों का ग्रहण (जाल बिछाकर पकड़ना), देवासुर आदि के संग्राम तथा राजाओं की लड़ाइयों वाले चित्र से विभूषित भवन भी प्रशस्त नहीं कहे गये हैं ॥ १० ॥

**प्राणियुद्धविमर्दाश्च मृगया च न शस्यते ।**
**रौद्रदीनाद्भुतत्रासबीभत्सकरुणा रसाः ॥ ११ ॥**
**न प्राणिषु प्रयोक्तव्या हास्यशृङ्गारवर्जिताः ।**

प्राणियों का युद्ध और उनका विमर्दन तथा मृगया (= शिकार) के चित्र भी प्रशस्त नहीं कहे गये हैं। रौद्र, दीन, अद्भुत, त्रास, बीभत्स और करुण—ये रस भी प्रयोज्य नहीं कहे गये हैं अर्थात् इन रसों के प्रकाशक चित्रों का प्रयोग नहीं करना चाहिए तथा हास्य और शृङ्गार को छोड़कर चित्र के प्राणियों में अन्य रसों का प्रयोग भी नहीं करना चाहिये ॥ ११-१२ ॥

**हस्त्यश्वरथयानानि विमानायतनानि च ॥ १२ ॥**
**चण्डानलप्रदीप्तानि भवनानि वनानि च ।**

हस्तियान, अश्वयान, रथयान, विमान और आयतन, प्रचण्ड अग्नि से जलते हुए भवन और वन के चित्र भी घर में नहीं होने चाहिए ॥ १२-१३ ॥

**वृक्षाः पुष्पफलैर्हीना विहङ्गावासदूषिताः ॥ १३ ॥**
**एकद्विशाखा रूक्षाश्च भग्नाः शुष्काः सकोटराः ।**
**कदम्बशाल्मलीशेलुतारक्षारलुकादयः ॥ १४ ॥**
**भूतालयत्वान्नेष्यन्ते कटुकण्टकिनश्च ये ।**

**वर्जित वृक्षों के चित्र**—पुष्प और फलों से रहित वृक्ष तथा पक्षियों के वास से दूषित वृक्ष, एक शाखा अथवा दो शाखाओं वाले वृक्ष, रुक्ष, भग्न अथवा टूटे हुए शाख वाले, सूखे हुए तथा कोटर वाले ऐसे वृक्षों के साथ-साथ कदम्ब, शाल्मली, शेलु, तार, छार और लुक आदि वृक्ष भी भूतों के घर होने के कारण घर में उन्हें नहीं रखना चाहिए। कडुवे तथा काँटे वाले पेड़ भी घर में प्रशस्त नहीं कहे गये हैं ॥ १३-१५ ॥

**गृध्रोलूका विहङ्गेषु कपोतश्येनवायसाः ॥ १५ ॥**
**कङ्कश्चेति न शस्यन्ते खगा रात्रिचराश्च ये ।**

**वर्जित पक्षियों के चित्र**—पक्षियों में गीध, उल्लू, कबूतर, बाज, कौवा और कङ्क आदि का घर में वास प्रशस्त नहीं कहा गया है। रात्रिचर पक्षी भी घर में विद्वानों द्वारा इष्ट नहीं कहे गये हैं ॥ १५-१६ ॥

**गजाश्वमहिषाश्चोष्ट्रा मार्जारखरवानराः ॥ १६ ॥**
**सिंहो व्याघ्रस्तरक्षुश्च वराहमृगजम्बुकाः ।**
**तथा वनचरा ये च क्रव्यादा मृगपक्षिणः ॥ १७ ॥**
**गृहेष्वेते न कर्तव्याः शैलाटव्याश्रिताश्च ये ।**
**अमीषां करणादर्थैराचार्यो विप्रमुच्यते ॥ १८ ॥**
**व्याधिं घोरमवाप्नोति व्यसनं बन्धमेव च ।**

**गृह में वर्जित पशु**—वनचरों में हाथी, घोड़ा, भैंसा, ऊँट, बिल्ली, गधा, बन्दर, सिंह, व्याघ्र, तरक्षु, सूअर, हिरण और सिआर प्रशस्त नहीं कहे गये हैं और जो कुत्तादि (= क्रव्याद) मांसभक्षी पशु पक्षी हैं इन सभी को घरों में नहीं रखना चाहिये और जो पर्वत एवं जङ्गल में रहने वाले पशु पक्षी हैं उनको भी नहीं रखना चाहिये क्योंकि इनके रखने से आचार्य को अर्थ हानि उपस्थित हो जाती है और साथ ही साथ उसके लिए घोर व्याधि एवं बन्धनकारी कष्ट भी उपस्थित होते हैं ॥ १६-१९ ॥

**यत्र तत्र गृहस्वामी धनहानिं पराजयम् ॥ १९ ॥**
**प्रवासं बन्धनं नाशं मृत्युं वा क्षिप्रमाप्नुयात् ।**
**इत्युक्तान्यप्रशस्तानि गृहेषु गृहमेधिनाम् ॥ २० ॥**

**घर में अप्रशस्त वृक्ष या पशुओं के रहने का फल**—जहाँ पर ऐसे अप्रशस्त वृक्षों या पशु पक्षियों का प्रयोग होता है उस घर के गृहस्वामी को भी धन हानि, पराजय, प्रवास, बन्धन, नाश तथा मृत्यु शीघ्र प्राप्त होती है । इस प्रकार गृहस्थों के घरों में इन अप्रशस्त (= अप्रयोज्य) वस्तुओं का वर्णन किया गया है ॥ १९-२० ॥

### तत्र प्रयोज्या देवता

**तत्र यानि प्रयोज्यानि कथ्यन्ते तान्यतः परम् ।**
**यश्च यत्र भवेद् भक्तिर्या चास्य कुलदेवता ॥ २१ ॥**
**हस्तक्लृप्तप्रमाणेन तान् कुर्वन् स्यान्न दोषभाक् ।**

**भवन के सौन्दर्य में प्रयोज्य वस्तुएँ या उपकरण**—अब जो वहाँ पर प्रयोज्य वस्तुएँ या वृक्ष हैं उनका वर्णन किया जाता है । जिसकी जिसमें भक्ति हो और जो जिसके कुल देवता हों उस देवता की प्रतिमा को एक हाथ के प्रमाण से बना कर पूजा करने वाला गृही दोष को प्राप्त नहीं होता ॥ २१-२२ ॥

### द्वारेषु प्रयोज्याः प्रतीहार्यादिप्रतिकृतयः तत्रैव निधीनां लक्ष्म्याश्च निवेशनप्रकारः

**तद्द्वारपार्श्वयोः कार्यौ प्रतिहारौ स्वलङ्कृतौ ॥ २२ ॥**
**वेत्रदण्डव्यग्रकरौ खड्गकोशपरिच्छदौ ।**
**रूपयौवनसम्पन्नौ विचित्राम्बरभूषणौ ॥ २३ ॥**

**द्वार पर प्रतीहारी के चित्र**—भवन के दरवाजों के दोनों पार्श्वों पर दो अलंकृत प्रतिहारों के चित्र का निवेश करना चाहिये । वे दोनों बेंत की छड़ी को हाथ में लिये हों; तलवार और उसकी म्यान को धारण किये हों; रूप और यौवन

से युक्त तथा चित्र-विचित्र वस्त्रों और आभूषणों से सजे हुए हों। इस प्रकार दोनों प्रतीहारों को द्वार के दोनों ओर योजित करना चाहिये ॥ २२-२३ ॥

**धात्री वामनिका कुब्जा सखीभिः परिवारिता।**
**विदूषकैः कञ्चुकिभिस्तुष्टैरनुगतास्तथा ॥ २४ ॥**
**द्वारस्योभयतः कार्याः प्रतीहार्यो मनोरमाः।**

सखियों से घिरी हुई, हंसाने वाले विदूषकों और कंचुकियों से अनुगत सुन्दर नारी-प्रतिहारियों को दरवाजे के दोनों तरफ निवेशित करना चाहिये ॥ २४-२५ ॥

**निधयश्चानुरूपाश्च शङ्खाब्जोज्ज्वललक्षणाः ॥ २५ ॥**
**रत्नदीनारराशींश्च वहन्तो वदनोद्‌गतान्।**

अपने काम लायक (अनुरूप) शङ्ख और कमल के उज्ज्वल लक्षणों से चित्रित, मुख से निकलते हुए रत्न और अशर्फियों के ढेरों को धारण करते हुए निधि (खजाने) गृह में प्रयोज्य कहे गए हैं ॥ २५-२६ ॥

**पद्मस्था पूर्णकुम्भा वा रत्नवस्त्रविभूषिता ॥ २६ ॥**
**वक्रैरूर्ध्वस्थितैः पुष्पफलपल्लवसम्भृतैः।**
**पूर्णकुम्भाङ्कुशच्छत्रश्रीवृक्षादर्शचामरैः ॥ २७ ॥**
**कार्याष्टमङ्गला द्वारे दामभिः शङ्खमत्स्ययोः।**

**अष्टमङ्गला गौरी के चित्र**—इसी प्रकार पद्म पर बैठी हुई गौरी, पूर्ण कुम्भ वाली, रत्नों और वस्त्रों से विभूषित, टेढ़े एवं ऊँचे उठे हुए पुष्प, फल और पल्लव से भरे हुए पूर्ण-कुम्भ, अङ्कुश, छत्र, श्रीवृक्ष (बेल), आदर्श (शीशा) और चामरों से उपलक्षित शङ्ख और मछलियों की मालाओं से विभूषित अष्टमङ्गला गौरी का गृह के द्वार पर भित्ति चित्र (निवेशन) बनाना चाहिये ॥ २६-२८ ॥

**द्वारमण्डलमध्यस्था स्नाप्यमाना गजोत्तमैः ॥ २८ ॥**
**पद्मासना पद्महस्ता श्रीश्च कार्या स्वलङ्कृता।**

**महालक्ष्मी का चित्र**—द्वारमण्डल के मध्य भाग में स्थित, उत्तम गजों से स्नान कराई जाने वाली, पद्मों पर बैठी हुई और पद्मों को हाथ में लिये हुए खूब सजी हुई महालक्ष्मी का चित्र भी घर में (निवेश करना) बनाना चाहिये ॥ २८-२९ ॥

**गृहबाह्याभ्यन्तरभित्तिष्वालेख्यानां नियमाः**

**वृषः सवत्सा धेनुर्वा सच्छत्रस्त्रग्विभूषणा ॥ २९ ॥**
**फलभक्तैर्बहुविधैराहारथार्थं निवेदितैः।**
**नानापुष्पफलैर्नम्रैः शालैस्तिर्यगवस्थितैः ॥ ३० ॥**

**चित्रा पत्रलता लेख्या बाह्याभ्यन्तरभित्तिषु ।**

**गृह के बाहर या भीतर भित्ति चित्र के आलेख्य के नियम**—बैल को अपने बछड़े के साथ अथवा छत्र और माला से विभूषित धेनु को घर में चित्राङ्कित करने की योजना भी विहित है । बाहरी और भीतरी भूमियों पर चित्र विचित्र पत्र एवं लता का आलेख्य करना चाहिये जिसमें आहारार्थ निवेदित भक्ष्य फल वाले तथा नाना पुष्पों एवं फलों से झुके हुए एवं तिरछे स्थित वृक्ष दिखाई पड़ रहे हों ॥ २९-३१ ॥

**हंसकारण्डचक्राह्वैर्बिसिनीपत्रवर्तिभिः ॥ ३१ ॥**
**कुमारकैश्च क्रीडद्भिर्युक्ता ललितबाहुभिः ।**
**वासधाम्नि निवेश्यन्ते विचित्राभरणाम्बराः ॥ ३२ ॥**
**रतिक्रीडापरा नार्यो नायकस्तु यदृच्छया ।**

**पक्षियों के विहित चित्र**—साथ ही साथ उस पत्र लता में दूसरे चित्रण भी हों जैसे कमलिनियों के पत्तों पर रहने वाले हंस, कारण्डव और चक्रवाक आदि । अपनी सुन्दर बाहुओं से खेलते हुए कुमारों का भी उसमें चित्रण हो । विचित्र आभूषण और वस्त्र धारण किये हुए और रतिक्रीड़ा में संलग्न नारियाँ चित्रित हों । नायक को इच्छानुसार चित्रित करे ॥ ३१-३३ ॥

**आपाण्डुदेहच्छवयः स्वल्पचारुविभूषणाः ॥ ३३ ॥**
**किञ्चित्प्रतनुभिर्गात्रैः कार्याः सुरतलालसाः ।**

**शृङ्गारिक चित्र**—नारियों के चित्रण में उन्हें पीले शरीर की कान्ति वाली, थोड़े लेकिन सुन्दर आभूषणों से सजी हुई, थोड़ी सी लज्जालु नेत्रों से झुकी तथा सुरतालस रूप में चित्रित करना चाहिये ॥ ३३-३४ ॥

**प्रवृद्धशाखाविटपैः प्रचलारुणपल्लवैः ॥ ३४ ॥**
**चम्पकाशोकपुन्नाग-नानाम्रतिलकादिभिः ।**
**छायापुष्पफलोपेतैः वृक्षैरन्यैश्च भूषिताः ॥ ३५ ॥**
**उद्यानभूमयः कार्याः कूजत्पिकमधुव्रताः ।**

**वृक्षों के चित्र**—उन्नत और ऊँची शाखा वाले पेड़ों से चलायमान लाल पत्ते वाले चम्पक, अशोक, पुन्नाग तथा नाना प्रकार के आम और तिलक आदि के वृक्षों से एवं अन्य छायादार वृक्षों, पुष्पों और फलों से युक्त बगीचा चित्रित करना चाहिए । इसी प्रकार अन्य वृक्षों से भी उद्यान की भूमियाँ बनानी चाहिये, जहाँ पर कोयलें और भौंरे कूजन एवं गुञ्जन कर रहे हों ॥ ३४-३६ ॥

वासधाम्नि निवेशनीयानामालेख्यानां विधिः

**ऋतवः फलपुष्पाद्यैः स्वैः स्वैश्चिह्नैरलङ्कृताः ॥ ३६ ॥**
**मनोरमैर्विशेषैश्च खगैश्च समयोचितैः ।**

**निवास स्थान पर आलेख्य चित्रों के निवेश की विधि**—फल और पुष्पादि के अपने-अपने चिह्नों से अलंकृत तथा सुन्दर समयोचित विशेष पक्षियों से युक्त (वसन्तादि) ऋतुओं का आलेख्य (= भित्तिचित्र) करना चाहिये ॥ ३६-३७ ॥

**कादम्बकुरर-क्रौञ्च-हंससारसमेखलाः ॥ ३७ ॥**
**तीरान्तोद्गतवानीर-केतकीषण्डमण्डिताः ।**
**जलान्तलीनमत्स्यैश्च संच्छन्ना नलिनीवनैः ॥ ३८ ॥**
**लेख्याश्च गृहभित्तीनामधोभागेषु दीर्घिकाः ।**

**फूलों के चित्र**—कदम्ब, हिरण, क्रौंच, हंस और सारस की मानों जञ्जीर पहने हुए, किनारे पर उगे हुए वानीर (बेंत) और केतकी (पुष्प) के समूहों से मण्डित, जल के भीतर लीन मछलियों से युक्त और कमलनी वनों से संच्छन्न (ढकी हुई) दीर्घिकाओं (वापियों) का, घर की दीवालों के नीचे के भागों पर, आलेखन करे ॥ ३७-३९ ॥

**फलैः समं सभक्षेक्षुमणिकाञ्चनभाजनाः ॥ ३९ ॥**
**विन्यस्तपद्मनीपत्राः सोत्पलाः पानभूमयः ।**

**पानक एवं फलादि द्रव्यों के चित्र**—गृह की पानक द्रव्यों का ऐसा आलेख्य करे—उत्पल के सहित जहाँ पर पद्मिनी के पत्र बिछे हों और जहाँ पर ईक्षु (गन्ने का) रस तथा फलादि भोग सामग्री मणि अथवा काञ्चन के बर्तनों में रखे हों ॥ ३९-४० ॥

गृहभित्तीनामधोभागेषु प्रेक्षासङ्गीतभूम्यादिषु च प्रयोज्यानां लेख्यानां विधिः

**विचित्रातोद्यहस्ताश्च नृत्यगीतविचक्षणाः ॥ ४० ॥**
**मुदिता ललना लेख्याः प्रेक्षासङ्गीतभूमिषु ।**

**गृह में नृत्य आदि प्रेक्षागृह के चित्र**—विचित्र प्रकार के बाजे बजाने वाली, नृत्य एवं गीत में विचक्षण, प्रसन्न मुख, ललनाओं का प्रेक्षा (नाट्य गृह) की भूमियों पर भित्ति लेखन करना चाहिये ॥ ४०-४१ ॥

**प्रकल्प्याः पञ्जरस्थाश्च चकोरशुकसारिकाः ॥ ४१ ॥**
**प्रहृष्टाः परपुष्टाश्च मयूराश्च सकुक्कुटाः ।**

# अथ पञ्चत्रिंशोऽध्यायः

## * शिलान्यास-विधिः[१] *

## (The Rite Regarding Foundation Stones)

**अथ ब्रूमः शिलान्यासविधिमत्र यथागमम् ।**

अब इस वास्तुशास्त्र में शिलान्यास की शास्त्रानुसार विधि कहता हूँ ॥ १ ॥

**शिलान्यासविधये विहितोऽयनपक्षतिथिनक्षत्रादिः**

**तत्रोदगयने पुण्ये शुक्लपक्षे शुभेऽहनि ॥ १ ॥**
**स्थिरग्रहस्य दिवसे करणे च गुणान्विते ।**
**तिष्येऽश्विनीषु रोहिण्यामुत्तरेष्वपि च त्रिषु ॥ २ ॥**
**रेवत्यां श्रवणे हस्ते शिलाविन्यासमाचरेत् ।**
**स्थिरस्य राशेरुदये सौम्यमित्रावलोकिते ॥ ३ ॥**
**सम्यङ् निमित्तशकुनस्वस्तिपुण्याहवाचिते ।**
**हर्षोदये च मनसः कुर्याद् वास्तोर्निवेशनम् ॥ ४ ॥**

**शिलान्यास में विहित अयन, पक्ष, तिथि एवं नक्षत्रादि का निरूपण—**

पुण्य उत्तरायण काल में, मास के शुक्लपक्ष में, शुभ दिन एवं स्थिर ग्रह वाले गुण से युक्त दिवस और करण में, तिष्य-अश्विनी-रोहिणी में, और तीनों उत्तराओं में भी, रेवती, श्रवण और हस्त नक्षत्र में शिलान्यास का आचरण करे। स्थिर राशि के उदय होने पर और सौम्य ग्रहों एवं मित्र ग्रहों से अवलोकित लग्न में ठीक तरह से निमित्त शकुन होने पर और स्वस्ति तथा मङ्गलपाठ करते हुए, हर्षित मन होकर वास्तु कर्म का प्रारम्भ करे ॥ २-४ ॥

**भद्रः प्रकृत्या शास्त्रज्ञः शुचिः स्नातः समाहितः ।**
**कर्मारभेत स्थपतिः कृतदेवार्चनक्रियः ॥ ५ ॥**

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह बीसवाँ अध्याय है ।

प्रकृति से भद्र (विकलाङ्गरहित) आकृति, शास्त्रज्ञ, पवित्र, स्नात व सुसमाहित स्थपति देवार्चन की क्रिया सम्पादित करके कर्म का आरम्भ करे ॥ ५ ॥

**प्रथमेष्टकालक्षणम्**

**पूर्णां समामविकलां चतुरस्रामनिन्दिताम् ।**
**शिलामाद्यां चये साध्वीं परीक्षेत विचक्षणः ॥ ६ ॥**

पूर्ण, बराबर, अविकल, चौकोर और सीधी पहिली शिला की चय-विधि (= चुनाई) में विचक्षण स्थपति परीक्षा करे ॥ ६ ॥

**प्रशस्तपूजाद्रव्यकथनम्**

**कुम्भाङ्कुशध्वजच्छत्रमत्स्यचामरतोरणैः ।**
**दूर्वानागफलोष्णीष-पुष्पस्वस्तिकवेदिभिः ॥ ७ ॥**
**नन्द्यावर्तैः सचमरैः कूर्मपद्मनिशाकरैः ।**
**वज्रैः प्रशस्तैः प्राकारैर्भूषिताः कर्मणो हिताः॥ ८ ॥**

**शिलाकर्म में प्रशस्त कहे गए पूजा द्रव्य**—कुम्भ, अङ्कुश, ध्वज, छत्र, मत्स्य, चामर, तोरण, दूर्वा, नागफल (नारियल), उष्णीष पुष्प और स्वस्तिक तथा वेदियों से और चामर सहित नन्द्यावर्तों से युक्त, कूर्म (कछुवा) पद्म और चन्द्रमा से, वज्र के समान प्रशस्त प्राकारों से विभूषित शिला (= पत्थर) वास्तु कर्म में हितकारक कही गई हैं ॥ ७-८ ॥

**वर्जनीयाः शिलाः**

**दीर्घा ह्रस्वाल्पविषमाच्छाभाध्मातापरीक्षिता ।**
**दिङ्मूढा चाङ्गहीना च सास्थ्यङ्गारा सशर्करा ॥ ९ ॥**
**खण्डा दुःपक्वनिर्भिन्ना कृष्णा दोषभयावहा ।**

**वर्जनीया शिला**—जो शिला दीर्घ, छोटी, विषम, आघ्मात, अपरीक्षित, दिङ्मुढ टेढ़ी मेढ़ी, अङ्गहीन, हड्डी, अङ्गार अथवा कङ्कड़ों से युक्त होती है या खण्डित, कच्ची पकी हुई, फटी हुई और काली हों वह सभी प्रकार के दोषों एवं रोग भय आदि उत्पन्न करने वाली कही गई हैं ॥ ९-१० ॥

**नृणां पशुतुरङ्गाणां पदाङ्काः स्वस्तिवृद्धये ॥ १० ॥**
**क्रव्यान्मृगविहङ्गानां पादैः स्पृष्टास्तु वर्जयेत् ।**

मनुष्यों के अथवा पशुओं में यदि घोड़ों के पद चिह्नों से चिह्नित शिला हो तो वह मङ्गल की वृद्धि करने वाली होती है । मांसाहारी पशु और बाज

आदि पक्षियों के पङ्खों से स्पर्श की गई शिलाओं का परित्याग कर देना चाहिए ॥ १०-११ ॥

### नन्दादिकाश्चतस्त्रः शिलास्तद्देवताश्च

**नन्दाभद्राजयापूर्णाश्चतस्त्रः स्युरिमाः शिलाः ॥ ११ ॥**
**वासिष्ठी काश्यपी तद्वत् भार्गव्याङ्गिरसीति ताः ।**

**नन्दादि चार शिलाएँ और उनके देवता**—चार प्रकार की शिलाएँ १. नन्दा, २. भद्रा, ३. जया और ४. पूर्णा—कही गई हैं । उन्हीं के समान १. वाशिष्ठी, २. काश्यपी, ३. भार्गवी और ४. आङ्गिरसी क्रमशः उन नन्दा आदि शिलाओं के देवता की संज्ञाएँ कही गई हैं ॥ ११-१२ ॥

### वेदीप्रकल्पनम्

**तत्र प्रागुत्तरे देशे सन्निवेशस्य वास्तुनः ॥ १२ ॥**
**नैर्ऋत्यां वा सकुसुमां समां गोचर्मसम्मिताम् ।**
**वेदीं सगन्धकलशां चतुरस्त्रां प्रकल्पयेत् ॥ १३ ॥**

**वेदीनिर्माण**—वास्तु के ईशान कोण (प्रागुत्तर देश) में अथवा वास्तु (सन्निवेश) की नैर्ऋत्य (दक्षिण-पश्चिम) दिशा में फूल सदृश समतल, गोचर्म के समान गन्ध और कलशों सहित चौकोर वेदी का निर्माण करे ॥ १२-१३ ॥

### नन्दाशिलाप्रतिष्ठापनविधिः

**आग्नेयामादितो नन्दां स्थापयेत् क्रमशः शिलाम् ।**
**अकालमूलैरव्यङ्गैः सपद्मोत्पलपल्लवैः ॥ १४ ॥**
**सर्वौषधिहिरण्याद्यैर्हेमराजत-मृण्मयैः ।**
**कुम्भैस्ताम्रमयैश्चापि मन्त्रैस्तामभिषेचयेत् ॥ १५ ॥**

**नन्दाशिला प्रतिष्ठापन विधि**—पूर्व-दक्षिण के आग्नेय कोण (दिशा) में क्रमशः पहिले नन्दा नामक शिला की स्थापना करे । फिर उस शिला का अकाल-मूल वाले तथा अविकल अङ्ग वाले, पद्म, उत्पल एवं पल्लवों सहित सर्वौषधियों और हिरण्य आदि से एवं सोने चाँदी या ताँबे से बने हुए घड़ों से मन्त्रोच्चारण करते हुए अभिषिञ्चन कर्म करे ॥ १४-१५ ॥

**तीर्थप्रस्त्रवणाम्भोभिः सरत्नाक्षतपङ्कजैः ।**
**सुगन्धिभिः सपुण्याहमभिषेकं प्रयोजयेत् ॥ १६ ॥**

तीर्थ के जल से अथवा झरने के बहते हुए जल से, रत्न, अक्षत और कमलों से सुगन्धित जल से माङ्गलिक अभिषेक कर्म करे ॥ १६ ॥

**शिलाभिषेकविधानम्**

**जाह्नवी-यमुना-रेवा-सरस्वत्यादिसम्भ(वैः?वम्) ।**
**महानदीजलं शस्तं शुभतीर्थभवं तथा ॥ १७ ॥**
**तथाद्रिवनेशान्तदेवायतनजानि च ।**
**अभिषेकार्थमम्भांसि यथालाभमुपाहरेत् ॥ १८ ॥**

**शिलाभिषेक विधि**—गङ्गा, यमुना, रेवा एवं सरस्वती आदि से लाया गया अथवा (शोण एवं ब्रह्मपुत्र आदि) महानदी का जल अथवा शुभ तीर्थों से लाये गए जल से शिला का अभिषिञ्चन कर्म प्रशस्त कहा गया है । इसी प्रकार पर्वत, वन, झरना या कुआँ एवं वापी, मन्दिर के कूप के जल से जैसा जब प्राप्त हो अभिषेक के लिए जल लाना चाहिए ॥ १७-१८ ॥

**मन्त्रेणानेन चैतासामभिषेकं समाचेरत् ।**
**हिरण्यवर्णाः पावन्यः शुचयो दुरितच्छिदः ॥ १९ ॥**
**पुनन्तु शान्ताः श्रमत्यआपो युष्मान्मधुच्युतः ।**

**शिलाभिषेक मन्त्र**—फिर 'हिरण्यवर्णा मधुच्युतः' आदि श्लोक मन्त्र से इनका अभिषेक करे । अर्थ—'हिरण्य-वर्ण स्वर्णिम आभा वाले, पवित्र करने वाले शुचि, और पाप का नाश करने वाले, शान्ति, श्रीसम्पन्न मधु को च्युत करने वाले हे जल! आप हम लोगों की रक्षा करें ॥ १९-२० ॥

**मन्त्रपूतेन पयसा स्नापयित्वा ततः शिलाम् ॥ २० ॥**
**स्थपतिर्गन्धिकल्केन मङ्गल्येनानुलपेयत् ।**
**हिमचन्दनपूर्णेन व्यवकीर्य सुगन्धिना ॥ २१ ॥**

इस मन्त्र के द्वारा पवित्र किये हुए जल से शिला का अभिषिञ्चन कर्म कर स्थपति गन्ध युक्त माङ्गलिक पदार्थों से उस पर लेप करे । फिर शीतल चन्दन से युक्त सुगन्धि द्रव्य को उसमें मिलाकर पुनः अनुलेप करे ॥ २०-२१ ॥

**तरसा छादयेदेनां सलाजैः पुष्पदामभिः ।**
**धूपमाल्योपहारैश्च दधिमांसाक्षतादिभिः ॥ २२ ॥**
**पूजयेदिष्टकां देवीं वस्त्रयुग्मैश्च पुष्कलैः ।**

फिर इस शिला को लावों सहित पुष्प-मालाओं के द्वारा ढक देना चाहिए और

धूप, मालाओं, उपहारों, दधि, मांस और अक्षत आदि से तथा पुष्कल दो वस्त्रों के युग्म से 'इष्टिका देवी' की पूजा करे ॥ २२-२३ ॥

**निवेशनान्ते नैर्ऋत्यां तदा विप्रानवस्थितान् ॥ २३ ॥**
**समसंख्याञ् शुचीन् प्राज्ञानर्चयेद् दक्षिणफलैः ।**
**ओंकारस्वस्तिपुण्याह गीतवादित्रनिस्वनैः ॥ २४ ॥**
**कर्ता जनितरोमाञ्चस्तेभ्यः कुर्यान्नमस्क्रियाम् ।**

उस 'शिलाभिषेक कर्म' के बाद तब नैर्ऋत्य दिशा में चार, आठ, बारह, सोलह आदि सम संख्यक पहले से आसीन पवित्र विद्वान् ब्राह्मणों की दक्षिणा युक्त फलों से पूजा करे । फिर गृहकर्ता ओंकार, स्वस्ति माङ्गलिक गीत (= पुण्याहवाचन) और बाजे गाजे आदि से रोमाञ्चित होकर ब्राह्मणों को प्रणाम कर उनसे आशीर्वाद ग्रहण करे ॥ २३-२५ ॥

### उपशिलान्यसनम्

**निवेद्य वास्तोष्पतये भूतेभ्यश्च ततो बलिम् ॥ २५ ॥**
**तासां चतसृणामन्याः कुर्यादुपशिलाः पृथक् ।**

### नन्दादीनामाङ्काः

**प्राकारस्वस्तिकाङ्के द्वे तथा श्रीवत्सलक्षणा ॥ २६ ॥**
**नन्द्यावर्तस्तु पूर्णायां भवे(देको?दङ्को) यथाक्रमम्।**

ब्राह्मणों की पूजा के बाद वास्तोष्पति तथा भूतों के लिए बलिदान कर्म करे और उन चारों शिलाओं की अन्य चार उपशिलाएँ नींव में चुनाई करे । उनमें प्राकार तथा स्वस्तिक से अंकित दो शिलाओं को और तीसरी श्रीवत्स के चिह्न वाली और चौथी नन्द्यावर्त शिला कही गयी है ॥ २५-२७ ॥

### नन्दादीनां निवेशस्थानानि

**कर्णे प्रागदक्षिणे नन्दां वास्तुनः स्थापयेदधः ॥ २७ ॥**
**अन्याः क्रमेण भद्राद्याः कोणेष्वन्येषु च त्रिषु ।**

वास्तु पूर्व और दक्षिण के नैर्ऋत्य कोण (करण) में, वास्तु के (अधःप्रदेश) नींव में नन्दा नामक शिला को स्थापित करे और 'भद्रा' आदि अन्य शिलाओं को अन्य तीनों कोनों पर स्थापित करे ॥ २७-२८ ॥

### तासां प्रतिष्ठापनमन्त्राः

**प्रतिष्ठापनमन्त्राश्च तासां चतसृणामपि ॥ २८ ॥**

**चत्वार ऋषिभिर्गीताः शाश्वतारम्भदर्शनाः ।**
**वीर्येणादिवराहस्यवेदार्थैस्त्वभिमन्त्रि(ताः?ताम्) ॥ २९ ॥**
**वसिष्ठनन्दिनीं नन्दां प्राक् प्रतिष्ठापयाम्यहम् ।**

**शिलाप्रतिष्ठापन मन्त्र**—उन चारों के प्रतिष्ठा मन्त्र शाश्वत एवं गृहारम्भ में दर्शन कराने वाले 'वीर्येण............मनोरथः' आदि चार मन्त्रों को ऋषियों ने गाया है । 'आदिवराह के वीर्य से तथा वेदार्थी ब्राह्मण से अभिमन्त्रित वसिष्ठनन्दिनी 'नन्दा शिला' को मैं पूर्व में स्थापित करता हूँ ॥ २८-३० ॥

**सुमुहूर्ते सुदिवसे सा त्वं नन्दे! निवेशिता ॥ ३० ॥**
**आयुः कारयितुर्दीर्घं श्रियं चाग्र्यामिहावह ।**

अच्छे शुभ मुहूर्त एवं दिवस में नीव में निवेशित हे नन्दे! आप इन गृहस्वामी को दीर्घ आयु प्रदान करें और इनकी श्रीवृद्धि कीजिए ॥ ३०-३१ ॥

**भद्रासि सर्वतोभद्रा भद्रे! भद्रं विधीयताम् ॥ ३१ ॥**
**कश्यपस्य प्रियसुते! श्रीरस्तु गृहमेधिनः ।**
**जये! विजयतां स्वामीगृहस्यास्य महात्मनः ॥ ३२ ॥**
**आचन्द्रार्कं यशश्चास्य भूम्यामिह विरोहतु ।**
**त्वयि सम्पूर्णचन्द्राभे! न्यस्तायां वास्तुनस्तले ॥ ३३ ॥**
**भवत्येष गृहस्वामी पूर्णे! पूर्णमनोरथः ।**

हे सर्वतोभद्रे! आप कल्याणदायिनी हो, अतः गृहस्वामी का कल्याण करो । हे काश्यप की प्रिय सुते! गृह को बनाने वाले गृहस्वामी के लक्ष्मी की वृद्धि करो। हे जये! इस पुण्यात्मा गृहस्वामी की विजय करो । हे सम्पूर्ण चन्द्रकान्ति वाली! वास्तु के अधःप्रदेश (नीव) में आपके न्यस्त होने पर इस यजमान का भूमि पर चन्द्र और सूर्य पर्यन्त यश बढ़े । हे पूर्णे! यह गृहस्वामी पूर्ण मनोरथ वाला होवे ॥ ३१-३४ ॥

**इति मूलच(यो?यं)मन्त्रैः कुर्यात् स्वस्तिकवाचनैः॥ ३४ ॥**

इस प्रकार से स्वस्तिवाचक श्लोक मन्त्रों से उन हिरण्यवर्ण वाली शिलाओं का विद्वान् स्थपति (मुख्य कारीगर) शिलान्यास करे ॥ ३४ ॥

**ताभिर्हिरण्यवर्णाभिःशिलाभिः सममद्भुतम् ।**
**प्रागुदक्प्लवनाधन्या न प्रत्यग् दक्षिणाप्लवा ॥ ३५ ॥**

**चुनाई का शुभाशुभ फल**—उन हिरण्यवर्ण सम शिलाओं से अद्भुत लगने

वाली पूर्व और उत्तर में चुनाई का ढलान (प्लवन) शुभ माना गया है, पश्चिम से दक्षिण की ओर चुनाई शुभ नहीं होती ॥ ३५ ॥

**इष्टकाश्चैत्यभवनप्राकारपुरकर्मसु ।**
**विताने चितिविन्यासे चतुर्मुखनिकेतने ॥ ३६ ॥**
**पुरोधाः शान्तिवेदीषु प्रतिमास्थापनेषु च ।**
**याज्ञिकेन विधानेन क्रमशः स्थापयेच्छिलाः ॥ ३७ ॥**

चैत्य में, भवन में, प्राकार में और नगर के गृह कर्म में, वितान में, (चिति-विन्यास) यज्ञवेदियों में, ब्रह्मा के मन्दिर में, प्रतिमा के स्थापन में, शान्ति वेदियों में तथा प्रतिमा की स्थापनाओं में याज्ञिक विधान से क्रमशः इन नन्दादि शिलाओं की तथा ईटों (इष्टिकाओं) की पुरोहित स्थापना करे अथवा पुरोहित यजमान से स्थापित कराए ॥ ३६-३७ ॥

**वैदिकाः शिलाचयनमन्त्राः**

**त्रैशोकौर्णासभा(सै?रव्यै)स्ताः सामभिः स महाव्रतैः ।**
**गायत्र्युष्णिगनुष्टुब्भिबृहत्या च यथाक्रमम् ॥ ३८ ॥**
**चयान् समस्तांश्चिनुयाच्चतुरो विरमेत् ततः ।**
**ज्ञात्वा भित्तिप्रमाणं च चितेश्चयचतुष्टयम् ॥ ३९ ॥**

**शिला चयन के वैदिक मन्त्र**—त्रैशोक, और्ण, आसभ नामक महाव्रत साम मन्त्रों से तथा गायत्री, उष्णिक्, अनुष्टुप् एवं बृहती—इन चार छन्दों से क्रमशः चारों शिलाओं का चयन करना चाहिए । फिर विद्वान् स्थपति रुक जाए और भित्ति का प्रमाण नापकर चारों ईटों (= चयों) का चयन करे ॥ ३८-३९ ॥

**विमर्श**—प्रासाद-वास्तु में वितान मण्डप सहचर है । 'संवरण' तथा 'वितान' मण्डप-वास्तु के प्रमुख अलङ्करण हैं । वितान छत के बीच और संवरण ऊपर बनाया जाता है ।

**विधिना स्थापितानां तासां पुनश्चालनादिषु फलम्**

**समाप्यमादिकमैंवं कनिष्ठं च यथोत्तरम् ।**
**प्रतिष्ठितास्ताः प्रथमं भूतले सुस्थिताः समाः ॥ ४० ॥**
**न चालयेच्चालने स्याद् गृहभर्तुर्महद् भयम् ।**
**कम्पने च भयं विद्यादेतासां स्थिरतां पुनः ॥ ४१ ॥**
**स्थपतेर्गृहभर्तुश्च मङ्गलं परमं विदुः ।**

**विधिपूर्वक स्थापित शिलाओं को हिलाने-डुलाने का फल**—गृहारम्भ के आदिकर्म को इस प्रकार से समाप्त करना चाहिए और उसके बाद उन प्रतिष्ठित शिलाओं को भूतल पर सुप्रतिष्ठित करने के बाद बराबर-बराबर प्रतिष्ठित करके बार-बार हिलाना नहीं चाहिए, क्योंकि उन्हें फिर-फिर हिला देने से गृहस्वामी के लिए बड़ा भय उपस्थित होता है और इनके कम्पन में भी बहुत बड़ा भय समझना चाहिए । प्रतिष्ठा के बाद इनके स्थिर रहने पर ही स्थपति और गृहस्वामी दोनों के लिए अत्यन्त मङ्गलकारी कहा गया है ॥ ४०-४२ ॥

**प्राग्दक्षिणायां चलने गृहभर्तुर्महद् भयम् ॥ ४२ ॥**
**भार्याविनाशो नैर्ऋत्यां शून्यं (?)भीतिर्मरुद्दिशि ।**
**गुरोश्च भयमैशान्यामपचारेऽपि तद् भवेत् ॥ ४३ ॥**

पूर्व और दक्षिण में ढलान वाले चालन (= चुनाई) से गृहस्वामी को अत्यन्त भय उपस्थित होता है, नैर्ऋत्य में हिलाने से भार्या का विनाश और वायव्य में भीति उत्पन्न होती है । ईशान कोण में चुनाई हिला देने से गुरु का भय होती है और वारुणी दिशा में चालन से भी वैसा ही फल कहा गया है ॥ ४२-४३ ॥

स्तम्भविन्यासकथनम्

**प्रथमं स्थापि(तेनै?ताने)वं स्तम्भानपि न चालेयत् ।**
**नोद्धरेत् प्रणुद्याच्च विधिस्तुल्यो यतोऽनयोः ॥ ४४ ॥**
**विन्यासं प्रथमं तस्मात् कुर्यात् सम्यक् समाहितः ।**
**शिलानां स्थपतिस्तद्वत् स्तम्भानामपि सर्वथा ॥ ४५ ॥**

**स्तम्भ विन्यास क्रम**—इसी प्रकार प्रथम स्थापित खम्भों को भी हिलाना-डुलाना नहीं चाहिए । न उनको उठावे और न उनका स्थान ही परिवर्तित करे क्योंकि इन खम्भों एवं नींव दोनों की विधि समान कही गई है । इसलिए सावधान चित्त स्थपति शिलाओं के नींव के स्थापन के समान पूजा विधि से स्तम्भों का भी विन्यास करे ॥ ४४-४५ ॥

**द्वारप्राकारशालानां नगराणां च वेश्मनाम् ।**
**तत्प्रमाणो विधिर्यस्मात् तस्मात् तत्रादृतो भवेत् ॥ ४६ ॥**

गृहारम्भ में द्वार, प्राकार, शालाओं, नगरों और घरों की उसी प्रकार की पूजा विधि विहित है। इसलिए उसमें से सावधान होकर कार्य करना चाहिए ॥ ४६ ॥

**एवं शिलान्यासविधानमेतद्**
**यथावदस्माभिरिहोपदिष्टम् ।**

**अस्मिन् कृते वेशमसुरालयादि**
**निष्पत्तिमभ्येति विनैव विघ्नम् ॥ ४७ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे शिलान्यासविधिर्नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥**



इस प्रकार यह शिला विन्यास विधान का यथावत् यहाँ उपदेश किया गया है। इस प्रकार के विधि-विधान से कर्म करने पर भवन और मन्दिर आदि की पूर्णता बिना विघ्न के पूर्ण होती है ॥ ४७ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'शिलान्यासविधि' नामक पैंतीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ३५ ॥**

# अथ षट्त्रिंशोऽध्यायः

## * वास्तुदेवता बलिदान-विधिनिरूपणम्[1] *

## (The Offering (= Bali) to the Gods)

**इदानीमभिधास्यामो बलिरूपविधेः क्रमम् ।**
**येन येनार्चिता देवास्तुष्यन्ति समहेश्वराः ॥ १ ॥**

अब बलिदान विधि का तथा पूजा क्रम का निरूपण करता हूँ । इस पूजाविधि के द्वारा जिस-जिस देवता की अर्चना की जाती है । वे सब देवता विधिपूर्वक दिए गए बलिदान से सन्तुष्ट होते हैं ॥ १ ॥

**मण्डलकरणम्**

**मण्डलं वास्तुनो मध्ये गोमयेन प्रकल्पयेत् ।**

**कलशस्थापनम्**

**कलशं तत्र विन्यस्येत् सप्रसूनं सकाञ्चनम् ॥ २ ॥**

**मण्डलकरण एवं कलशस्थापन**—वास्तु (= निर्मित भवन) के मध्य भाग में गोबर से (सर्वतोभद्रआदि) पूजा मण्डल बनाना चाहिए और वहाँ पुष्प एवं सुवर्ण सहित पूजा कलश स्थापित करना चाहिये ॥ २ ॥

**वास्तुदेवताकल्पनम्**

**वास्तुदेवास्ततः कल्प्या यथास्थाननियोगतः ।**

**पूजाविधानम्**

**सधूपैर्विविधैर्माल्यैरर्घ्यं पश्चान्निवेदयेत् ॥ ३ ॥**

**वास्तुदेवता एवं उनकी पूजाविधि**—उसके बाद यथास्थान पहले से चतुःषष्टिपद में निर्देशित वास्तु देवों की कल्पना करे और फिर धूप और नाना प्रकार की पुष्प मालाओं से उनके लिए अर्घ्य निवेदन करे ॥ ३ ॥

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह अट्ठारहवाँ अध्याय है ।

**विश्वकर्मणो वास्तु देवानां च पूजाविधिः**

**अर्चयेद् विश्वकर्माणं माल्यैर्धूपैर्विलेपनैः ।**
**भक्षैः फलैर्बहुविधैः पूजयेत् सुसमाहितः ॥ ४ ॥**

१. मालाओं, धूपों और चन्दनादि विलेपों से और विविध प्रकार के फलों एवं नैवेद्यों से सावधानचित्त होकर **विश्वकर्मा** का पूजन करे ॥ ४ ॥

**आज्येन पयसा दध्ना पूजयेच्छिखिनं पुनः ।**
**शालिगोधूममुद्गाद्यैर्धान्यैः पर्जन्यमर्चयेत् ॥ ५ ॥**

२. घी, दूध, दही से शिखी भगवान् **स्वामि कार्तिकेय** की आराधना करे ।

३. शालि (चावल), गेहूं, उड़द आदि धान्य से **पर्जन्य** की अर्चना करे ॥५॥

**जयन्तं पूजयेदाम्रद्राक्षाखर्जूरिकादिभिः ।**
**मालतीमल्लिकाभिश्च पूजयेत् त्रिदशाधिपम् ॥ ६ ॥**
**पुष्पै रक्तैस्तथा धूपै रक्तचन्दनलेपनैः ।**
**ततः सूर्यं जगन्नाथं पूजयेल्लोकचक्षुषम् ॥ ७ ॥**

४. आम, अङ्गूर और खजूर आदि से **जयन्त** की पूजा करें ।

५. मालती और मल्लिका पुष्पों से त्रिदशाधिप **इन्द्र** की पूजा करे ।

६. तदनन्तर संसार के नेत्र जगन्नाथ भगवान् **सूर्य** की लाल पुष्पों, लाल चन्दन के विलेपन से और धूप से पूजा करे ॥ ६-७ ॥

**जम्बीरैर्बीजपूरैश्च नारङ्गैः पीतकैः फलैः ।**
**पूजयेत् सत्यनामानं देवं तेन स तुष्यति ॥ ८ ॥**

७. जम्बीरी, निम्बुओं से, नारङ्गी और पीले फलों से **सत्यनारायण** भगवान् की पूजा करे, क्योंकि वे इस प्रकार की पूजा से सन्तुष्ट होते हैं ॥ ८ ॥

**मत्स्यमांसैश्च तुष्यन्ति सर्वे रक्षःपुरोगमाः ।**
**सितैः फलैर्नारिकेलैर्भृशश्च परितुष्यति ॥ ९ ॥**

८. मछली और मांस से सारे प्रधान **राक्षस** संतुष्ट होते हैं ।

९. सफेद फलों से एवं नारियलों की बलि से **भृश** परितुष्ट होते हैं ॥ ९ ॥

**गन्धधूपप्रयोगैश्च नभो नामानमर्चयेत् ।**
**पुष्पैः सुगन्धिभिः शुक्लैर्मारुतः परितुष्यति॥ १० ॥**

१०. गन्ध, धूप के प्रयोग से **नभ** नामक देव की अर्चना करनी चाहिये तथा

११. सुगन्धित पुष्पों से **मारुत देव** परितुष्ट होते हैं ॥ १० ॥

**कृसरं मधुसंयुक्तं पूष्णे भक्त्या निवेदयेत् ।**
**वितथं तु शुभैरन्यैर्मद्यमांसविवर्जितैः ॥ ११ ॥**

१२. मधु (शहद) संयुक्त कृसर (खीर) को **भगवान् पूषा** के लिए भक्तिपूर्वक निवेदन करे और १३. **वितथ** को तो अन्य शुभ मद्य-मांस विवर्जित (= वैकल्पिक) पदार्थों का निवेदन करे ॥ ११ ॥

**पूजितस्तुष्टिमायाति विवस्वांश्च महामुनिः ।**
**पुष्पैः सपुष्पकैस्तुष्टिमवाप्नोति गृहक्षतः ॥ १२ ॥**

१४. महामुनि **विवस्वान्** पूजित होने पर सन्तुष्ट होते हैं और १५. **गृहक्षत** छोटे-छोटे पुष्पों से पूजित होने पर सन्तोष को प्राप्त करते हैं ॥ १२ ॥

**मत्स्यमांसयुतैर्भव्यैर्यमतुष्टिः सदा भवेत् ।**
**पुन्नागागरुधूपेन गन्धर्वानर्चयेद् बुधः ॥ १३ ॥**

१६. **यम** की संतुष्टि सदा मछली-मांस से युक्त भव्य (= स्वादिष्ट) पदार्थों से होती है । १७. विद्वान् स्थपति पुन्नाग, अगरु एवं धूप से **गन्धर्वों** की पूजा करे ॥ १३ ॥

**मृगमांसयुतैर्भक्षैर्भृङ्गराजं च तर्पयेत् ।**
**राजजम्बूफलैर्बिल्वैर्देवमभ्यर्चयेन्मृगम् ॥ १४ ॥**

१८. मृगमांस से युक्त भोजनों से **भृङ्गराज** को तर्पित करे और १९. **मृगदेव** की अभ्यर्चना राजजम्बू फलों एवं बेलों से करे ॥ १४ ॥

**पायसैर्मधुसंयुक्तैर्मांसैर्भक्तैश्च शोभनैः ।**
**कर्पूरसुरभिद्रव्यगर्भैः सम्पूजयेत् पितॄन् ॥ १५ ॥**

२०. शहद मिश्रित पायसों (खीरों), मांसों और सुस्वादु भातों से, जिनमें कर्पूर तथा अन्य सुगन्धित द्रव्य मिले हों, **पितरों** की पूजा करे ॥ १५ ॥

**सपुष्पैर्मोदकैर्लाजैः पललैश्च विमिश्रितैः ।**
**दौवारिकं प्रयत्नेन पूजयेद् विघ्नकारकम् ॥ १६ ॥**

२१. पुष्प सहित लड्डुओं एवं लावों से मिश्रित मांसों से विघ्नकारक **दौवारिक** की सावधानतापूर्वक पूजा करे ॥ १६ ॥

**अपूर्वैः शोभनैर्गन्धैर्धूपैर्माल्यैरनुत्तमैः ।**
**पुष्पैः कण्टकजातीनां सुग्रीवं पूजयेत् सदा ॥ १७ ॥**

२२. अपूर्व शोभा वाले गन्धों, धूपों और अनुत्तम मालाओं से तथा कंटक जाति के पुष्पों से **सुग्रीव** की सदा पूजा करे ॥ १७ ॥

**सपुष्पैर्ला(प?ज)कैर्भक्ष्यैर्दधियुक्तान्नपायसैः।**
**अर्चयेत् पुष्पदन्तं तु यशोवीर्यान्वितं सुरम् ॥ १८ ॥**

२३. यश और वीर्य (= पराक्रम) से युक्त **पुष्पदन्त** नामक देवता की भूने हुए लावों और दधियुक्त अन्न और पायसों से आराधना करे ॥ १८ ॥

**मांसैश्च सूकरादीनां वैनतेयं सदार्चयेत् ।**
**वरुणं च महासत्वं पूजयेद् धूपचन्दनैः ॥ १९ ॥**

२४. **वैनतेय** (गरुड़) की पूजा सूकर आदि के मांसों से करे ।

२५. महासत्व **वरुण** की पूजा धूप और चन्दन से करे ॥ १९ ॥

**राहुं च मांससंयुक्तैस्तर्पयेद् भक्ष्यभोजनैः ।**
**रुधिरेण प्रदत्तेन तुष्टिमेति शनैश्चरः ॥ २० ॥**

२६. **राहु** को मांस युक्त भक्ष्य पदार्थों से सन्तुष्ट करे और २७. खून से **शनैश्चर** को सन्तुष्ट करे ॥ २० ॥

**मांसेन तु क्षयस्तुष्टिं रोगाणामधिपो व्रजेत् ।**
**मेदसा पूजयेद् रोगं सर्वलोकभयङ्करम् ॥ २१ ॥**
**वासुकिं क्षीरदानेन पूजयेत् सततं नरः ।**
**पूर्ववत् पूजयेद् देवं विश्वकर्माणमीश्वरम् ॥ २२ ॥**

२८. मांस से तो रोगों का राजा **क्षय** (= टी.बी.) तुष्टि को प्राप्त होता है तथा २९. सर्वलोक भयङ्कर **रोग** की चर्बी से पूजा करे । ३०. सतत दुग्ध दान से मनुष्य **वासुकि** की पूजा करे और ३१. **विश्वकर्मा देवता** की पूजा जैसी पहले बताई गई है उसी प्रकार सम्पन्न करे ॥ २१-२२ ॥

**सितप्रसूनविन्यासैर्भल्लाटं पूजयेद् बुधः ।**
**दधियुक्तेन चान्नेन सोमं सर्वत्र पूजयेत् ॥ २३ ॥**

३२. बुद्धिमान स्थपति सफेद पुष्पों के विन्यास से **भल्लाट** की पूजा करे तथा ३३. दधियुक्त अन्न से सर्वत्र **चन्द्र** की पूजा करे ॥ २३ ॥

**कुबेरं धूपदानेन पूजयेत् सततं नरः ।**

**अदितिं च सुवर्णेन पद्मैरपि च पूजयेत् ॥ २४ ॥**

३४. मनुष्य सदैव धूप दान से **कुबेर** की पूजा करे और ३५. **अदिति** की सुवर्ण से तथा कमलों से पूजा करे ॥ २४ ॥

**अर्कमन्दारमालाभिर्वृषभं च समर्चयेत् ।**
**अन्येषामपि देवानामर्चनं धूपसाम्प्रतैः(?) ॥ २५ ॥**

३६. अर्क (अकौड़ा) और मन्दार पुष्पों की मालाओं से **वृषभदेव** की पूजा करे तथा अन्य देवताओं की धूप आदि से अर्चना करे ॥ २५ ॥

**सर्वपुष्पफलैश्चैषां कार्यं बुद्धिमता सदा ।**
**इत्येते बलयः सर्वे शान्त्यर्थं परिकल्पिताः ॥ २६ ॥**

बुद्धिमान स्थपति नानाविध पुष्पों और फूलों से इन देवों की पूजा सदैव करे । इस प्रकार सभी तरह से बलि (पूजा) का विधान मुनियों द्वारा शान्ति के लिए बताया गया है ॥ २६ ॥

वास्तुकृत्यविधानम्

**शोधने कर्षणेः भूमेः साधने रूपकल्पने ।**
**गृहे प्रवेशने रम्ये तिथिमभ्युदयेषु च (?) ।**
**स्कन्धावारनिवेशेषु पुरग्रामनिवेशने ॥ २७ ॥**
**देवालयक्षितिपवेश्मनिवेशनेषु**
**प्रोक्तान् बलीन् प्रवितरेत् प्रयतः सुरेभ्यः ।**
**प्रारम्भमन्यमपि वास्तुगतं चिकीर्षुः**
**कुर्वन्निमं विधिमभीप्सितभाजनं स्यात् ॥ २८ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे बलिदानविधिर्नामषट्त्रिंशोऽध्यायः ॥ ३६ ॥**

...~❀~...

**वास्तुकृत्य**—भूमि के शोधन में, कर्षण अर्थात् जोतने में, साधन में, रूप-कल्पन में, गृह के प्रवेश में, आभ्युदयिक में, स्कन्धावारों (= छावनियों) के निवेशों में, पुर एवं ग्राम के निवेश (= निर्माण) में तथा देवालय अर्थात् मन्दिर और राजप्रासाद के निवेशनों (निर्माण) में इन पूर्वोक्त बलियों को प्रयत्नपूर्वक

विभिन्न देवताओं को बुद्धिमान् वितरित करे । इस प्रकार वास्तु कर्म के अन्य प्रारम्भिक कर्म के विधान करने की इच्छा वाले विद्वान् स्थपति इन बलिदान रूप पूजा-विधियों से सफल मनोरथ वाले होते हैं ॥ २७-२८ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार अपरनाम वास्तुशास्त्र के 'बलिदानविधि' नामक छत्तीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ३६ ॥**



## समीक्षात्मक टिप्पणी

### बलिकर्म (३६.१-२८)

अपने-अपने वास्तुपद में स्थित वास्तुदेवों का बलिकर्म (पूजा एवं नैवेद्य) होना चाहिये । इनका बलिकर्म सामान्य आहत्य मार्ग (प्रत्येक देवता के अनुसार पूजा एवं नैवेद्य) से करना चाहिये । बलिकर्म में **ब्रह्मा** आदि देवों की क्रमानुसार पूजा करनी चाहिये । बलिकर्म में देवों को इस प्रकार क्रम देना चाहिये—ब्रह्मस्थान की पूजा गन्ध, माल्य, धूप, दूध, मधु, घी, खीर एवं धान के लावा से करनी चाहिये ।

(इसके पश्चात् ब्रह्मा के चारो ओर स्थित देवों की पूजा होती है ।) **आर्यक** का बलिकर्म फलनिर्मित भोज्य पदार्थ, उड़द एवं तिल से करना चाहिये । विवस्वान् को दधि एवं **मित्र** को दूर्वा प्रदान करना चाहिये । **महीधर** को दूध प्रदान करना चाहिये । इस प्रकार वास्तुमण्डल के भीतर केन्द्रस्थ देवों का बलिकर्म सम्पन्न होता है (इसके पश्चात् बाह्य कोष्ठों के देवों का बलिकर्म होता है) **पर्जन्य** को घी एवं **ऐन्द्र** को पुष्पसहित नवनीत प्रदान करना चाहिये ।

**इन्द्र** को कोष्ठ एवं पुष्प, **सूर्य** को कन्द एवं मधु, **सत्यक** को मधु तथा **भृश** को नवनीत प्रदान करना चाहिये । **आकाश** को उड़द एवं हरताल, **अग्नि** को दूध, घी एवं तगरपुष्प तथा **पूषा** को शिम्बान्न (तरकारी) एवं पायस प्रदान करना चाहिये । **वितथ** को पका हुआ कङ्गु, **राक्षस** को मदिरा, **यम** को तरकारी एवं खिचड़ी तथा **गन्धर्व** को सुगन्धित द्रव्य बलिरूप में प्रदान करना चाहिये । **भृङ्गराज** को समुद्र की मछली, **भृश** को मछली एवं भात, **निर्ऋति** को तेल में पका पिण्याक (पिण्डी या मुठिया) तथा **दौवारिक** को बीज की बलि देनी चाहिये। **सुग्रीव** को लड्डू, **पुष्पदन्त** को पुष्प एवं जल, **वरुण** को दूध एवं धान्य (अन्न) तथा **असुर** को रक्त प्रदान करना चाहिये । **शोष** को तिल युक्त

चावल, **रोग** को सूखी मछली, **वायु** को चर्बी एवं हरिद्रा (हल्दी) तथा **नाग** को मद्य एवं लावा प्रदान करना चाहिये। **मुख्य** को अन्न का चूर्ण (आटा), दधि एवं घृत, **भल्लाट** को गुड़ में पका भात एवं **सोम** को दूध भात प्रदान करना चाहिये। **मृग** को शुष्क मांस, देवमाता **अदिति** को लड्डू, दिति को तिल भोज्य एवं **ईश** को दूध में पका अन्न एवं घृत को बलिरूप में चढ़ाना चाहिये।

लावा एवं धान्य **सविता** को सुगन्धित जल **सावित्र** को, चकरी को मेद एवं मूँग का चूर्ण **इन्द्र** एवं **इन्द्रराज** को प्रदान करना चाहिये। **रुद्र** एवं **रुद्रजय** को मांस तथा चर्बी, **आप** एवं **आपवत्स** को कुमुदपुष्प, मछली का मांस, शङ्कक (शङ्ख के मध्य स्थित मांस) एवं कछुये का मांस प्रदान करना चाहिये।

**चरकी** को मद्य एवं घृत, **विदारी** को लवण, **पूतना** को तिल एवं पिष्ट तथा **पाप राक्षसी** को मूँग का सत्त्व प्रदान करना चाहिये। सामान्य रूप से सभी देवों को प्रदान की जाने वाली बलि इस प्रकार है—साधारण बलि घृत के सहित शुद्ध भोजन एवं दधि है। सभी देवों को क्रमशः गन्ध आदि प्रदान करना चाहिये।

**पूजा-विधि**—कन्या (या वेश्या) को बलिपदार्थ धारण करने योग्य माना गया है। इन्हें अङ्गन्यास एवं करन्यास द्वारा पवित्र मन (एवं शरीर) वाली बनाना चाहिये। वास्तुदेवों का क्रमानुसार नाम लेना चाहिये। उनके नाम से पूर्व 'ॐ' एवं नाम के पश्चात् 'नमः' लगाना चाहिये। उन्हें प्रथमतः जल एवं उसके पश्चात् साधारण बलि देनी चाहिये। इसके पश्चात् उनको विशिष्ट बलि प्रदान कर पश्चात् भी जल प्रदान करना चाहिये। विद्वानों के अनुसार ग्रामादि में मण्डूक (चतुःषष्टि) वास्तुपद एवं परमशायिक वास्तुपद में भी बलि प्रदान करना चाहिये।

इस प्रकार पूर्व में कही गयी विधि से देवों को उनके क्रम के अनुसार तृप्त करके उन्हें विधिपूर्वक विसर्जित करना चाहिये, जिससे वास्तुक्षेत्र का निर्माण करने के लिये विन्यास (भवननिर्माण की योजना) बनाई जा सके। ब्रह्मा का पद एवं बाह्य देवों के पद को उनके-उनके स्थानों पर रखना चाहिये, जिससे देवालय एवं द्वार का विधान उनके ध्यान में रखते हुये किया जा सके।

पद से रहित शेष सभी देवों को वास्तु की रक्षा के लिये स्थान देना चाहिये। इसी विधि से ग्रामादि में भी देवों का विन्यास करना चाहिये। इस प्रकार वास्तु पदविन्यास एवं वास्तुदेवों के पूजन के रहस्य का वर्णन किया गया है। प्रातःकाल से उपवास करते हुये स्थपति विशुद्ध शरीर एवं शान्त मन से वास्तु देवों की विशेष एवं सामान्य बलि को लेकर पूर्ववर्णित विधि से भली-भाँति पूजा करे एवं बलि प्रदान करे।



# अथ सप्तत्रिंशोऽध्यायः

## * गृहनिर्माणार्थं कीलक-सूत्रपातः[1] *

## (The Insertion of Nail and Threads)

**वर्णानां यानि दारूणि कीलकार्थं नियोजयेत् ।**
**इदानीं तानि वक्ष्यामि श्रेयःकीर्त्तिहिताय च ॥ १ ॥**

**कीलक स्थापन एवं सूत्र प्रसारण**—ब्राह्मणादि चारों वर्णों के गृहनिर्माणावसर के समय, सूत्रपात विधि में कीलकों (अर्थात् खूटियों) में जिन लकड़ियों को प्रयोग में लाना चाहिए फलश्रुति के अनुसार अब उनका कल्याणप्रद होने के लिए, उनकी कीर्तिवर्धन के लिए और हित सम्पादन के लिए उनका वर्णन करता हूँ ॥ १ ॥

**प्रशस्ताः कीलकवृक्षाः**

**खदिरोदुम्बराश्वत्थशालशाकधवार्जुनाः ।**
**अञ्जनः कदराशोकतिनिशारुणचन्दनाः ॥ २ ॥**
**शिरीषसर्जन्यग्रोधवेणवः कीलकर्मणि ।**
**पुन्नामानो द्रुमाः शस्ताः स्त्रीनामानो विगर्हिताः ॥ ३ ॥**

**कीलक के लिए प्रशस्त वृक्ष**—खदिर, उदुम्बर, अश्वत्थ, शाल, शाक, धव, अर्जुन, अञ्जन, कदर, अशोक, तिनिश, अरुण, चन्दन, शिरीष, सर्ज, न्यग्रोध और वेणु (= बाँस) के कील वास्तुकर्म में प्रशस्त माने गये हैं । इनमें भी पुरुष नाम वाले वृक्ष के कीलक प्रशस्त कहे गये हैं, तथा स्त्री नाम वाले वृक्ष के कीलक निन्दित कहे गये हैं ॥ २-३ ॥

**विप्रादीनां विहिताः कीलकवृक्षाः**

**अश्वत्थः खदिरश्चैतौ विप्राणां वृद्धिकारकौ ।**
**रक्तचन्दनवेणूत्थकीलौ क्षत्रस्य पूजितौ ॥ ४ ॥**

**ब्राह्मणादि के लिए विहित कीलक वृक्ष**—अश्वत्थ और खदिर ये दोनों

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह अड़तीसवाँ अध्याय है ।

ब्राह्मण के लिए वृद्धिकारक कहे गये हैं । लाल चन्दन और वेणु से निर्मित कील क्षत्रिय के लिए शुभ कहे गये हैं ॥ ४ ॥

**शाकश्च खदिरश्चेति सामन्तानां हिताविमौ ।**
**कीलौ शालशिरीषोत्थौ वैश्यानां कीर्तितौ शुभौ ॥ ५ ॥**

शाक और खदिर ये दोनों सामन्तों के लिए हितकारक कहे गये हैं तथा शाल और शिरीष ये दोनों वैश्यों के लिए शुभ बताए गये हैं ॥ ५ ॥

**शूद्रजातेस्तु तिनिशधवार्जुनसमुद्भवाः ।**

**अशोकादीनां विनियोगे क्वचिद्विशेषः**

**वैश्यवेश्मसु सौभाग्यकार्ये च स्युरशोकजाः ॥ ६ ॥**

शूद्र जाति के लिए तो तिनिश, धव और अर्जुन वृक्षों से निर्मित कीलक शुभ कहे गए हैं । वैश्यों के वेश्मों में और अन्य सौभाग्य कार्यों में अशोक से निर्मित कीलक शुभ कहे गऐ हैं ॥ ६ ॥

**तत्तद्वर्णानधिकृत्यापरो वृक्षविधिः**

**न्यग्रोधो वणिजां धाम्नि भूमिकर्मण्युदुम्बरः ।**
**महामा(त्र?त्रा)श्ववैद्यानां कीलाः सर्जार्जुना गृहे ॥ ७ ॥**

बनियों के घर में न्यग्रोध और भूमि कर्म में उदुम्बर (= गूलर) तथा महामात्र और अश्ववैद्यों (घोड़ा डाक्टरों) के घर में सर्ज और अर्जुन की लकड़ी से निर्मित कील विशेष प्रशस्त बताये गये हैं ॥ ७ ॥

**विप्राणां सर्ववर्णोत्थाः क्षत्रियाणां त्रिवर्णजाः ।**
**वर्णद्वयोक्ता वैश्यानां शूद्राणां स्वानुलोमतः ॥ ८ ॥**

विप्रों के लिए, सर्व वर्णों के लिए प्रतिपादित वृक्षों से निर्मित कील शुभ होती है और क्षत्रियों के लिए, तीन वर्णों के लिये सूचित वृक्षों से निर्मित कील तथा वैश्यों के लिये, दो वर्णों के लिये प्रशस्त वृक्षों से निर्मित कीलक और शूद्रों के स्वयं अपने वर्ण वाले कीलक शुभ कहे गए हैं ॥ ८ ॥

**प्रतिलोमा न कर्त्तव्याः कीलका भूतिमिच्छता ।**

कल्याण की इच्छा रखने वाले गृहस्थ को प्रतिलोम (अपने वर्ण के प्रतिकूल) कीलकों का निर्माण नहीं करना चाहिए ॥ ९ ॥

**वर्णानां कीलकप्रमाणम्**

**प्रमाणान्यथ कीलानां निगद्यन्ते पृथक् पृथक् ॥ ९ ॥**

**द्वात्रिंशदङ्गुलाः कीला विप्राणां स्युः शुभावहाः ।**
**क्षत्रियाणां पुनश्चाष्टाविंशत्यङ्गुलसम्मिताः ॥ १० ॥**
**चतुर्विंशत्यङ्गुलाश्च वैश्यानां शुभदायिनः ।**
**विंशत्याद्यङ्गुलैः कीलाः शूद्रजातेस्तु ते हिताः ॥ ११ ॥**

**ब्राह्मणादि वर्णों के लिए कीलक का प्रमाण**—अब कीलकों का अलग-अलग प्रमाण यहाँ कहा जाता है । ब्राह्मणों की कील बत्तीस अङ्गुल वाले शुभ कहे गए हैं और अट्ठाइस अङ्गुल वाले क्षत्रियों के लिए । चौबीस अङ्गुल वाले कीलक वैश्यों के लिए शुभदायी होते हैं और बीस अङ्गुल वाले कीलक शूद्र जाति के लिए हितकारक कहे गए हैं ॥ ९-११ ॥

**षडङ्गुलपरीणाहाः सर्वेष्वेते शुभावहाः ।**
**ब्राह्मणक्षत्रियविशां वेदाष्टाश्रषडश्रयः ॥ १२ ॥**
**षडश्रयस्तु शूद्रस्य प्रकृतेस्तु यदृच्छया ।**

इन सभी कीलों में छह अंङ्गुल का परीणाह मङ्गलकारक कहा गया है और ब्राह्मण, क्षत्रिय एवं वैश्यों के कील क्रमशः चौकोर, अष्टकोण अथवा षट्कोण वाले कील कहे गये हैं । शूद्र का छह अस्र वाला तथा सामान्य प्रकृति का इच्छानुसार कील होता है ॥ १२-१३ ॥

### तेषां सूत्रविधिः

**दार्भमौञ्जौर्णकार्पासं विप्रादीनां यथाक्रमम् ॥ १३ ॥**
**अर्धपर्वपरीणाहं दृढं सूत्रं तु वर्तितम् ।**
**अलाभे स्वस्य सूत्रस्य प्रोक्तादन्यतमं बुधः ॥ १४ ॥**
**गृह्णीयात् सूत्रमन्ये तु गृह्णीयुः स्वेच्छायैव ते ।**

**सूत्रविधि**—ब्राह्मणों क्षत्रियों, वैश्यों तथा शूद्रों के लिए क्रमशः कुश, मूँज, ऊन एवं कपास निर्मित अर्ध पर्व के परीणाह वाला दृढ़ सूत्र विहित है । कुश आदि अपने वर्ण के लिए विहित सूत्रों की अप्राप्ति में इन सूत्रों में से किसी एक का सूत्र बुद्धिमान स्थपति ग्रहण करे । इन वर्णों के अतिरिक्त अन्य जाति के जन अपनी इच्छा से रस्सी आदि किसी भी सूत्र का ग्रहण कर सकते हैं ॥ १३-१५ ॥

### कीलकस्थापनप्रकारः

**इत्थं सम्भृत्य सम्भारान् गृहभर्ता शुभेऽहनि ॥ १५ ॥**
**शुक्लपक्षे शुचिः स्नातः स्थपतिश्च सिताम्बरः ।**
**गृहस्थाननिमित्तात् तु देवस्थानानि लक्षयेत् ॥ १६ ॥**

**कीलक स्थापन प्रकार**—इस प्रकार से सब सामग्रियों को इकट्ठा करके गृहस्वामी शुभ दिन में एवं शुक्ल पक्ष में शुद्ध होकर और स्नान करके और स्थपति भी शुभ्र वस्त्र धारण कर गृहस्थान के निमित्त से देवस्थानों (की पूजा) का भी अनुष्ठान करें ॥ १५-१६ ॥

**कुसुमाक्षतमय्यश्च कर्तव्या गृहदेवताः ।**
**आदौ स्थानानि शङ्कूनां परीक्षेत समन्ततः ॥ १७ ॥**

तत्र कीलकस्थानपूजा

**तेषु सर्वेषु कर्तव्यमर्चनं तु यथाविधि ।**
**गृहस्य मध्ये सिक्त्वा तु निरूप्य ब्रह्मणः पदे ॥ १८ ॥**

**कीलक स्थान पूजन**—पुष्प और अक्षतमय गृह देवताओं को बनाकर, पहिले चारों तरफ शङ्कुओं के स्थानों की परीक्षा करे । पुनः उन सबकी यथाविधि पूजा करने पर गृह के मध्य भाग में ब्रह्मा का पद (स्थान) निरूपण करके जल छिड़के ॥ १७-१८ ॥

वेदीकल्पनम्

**गोमयेन समालिप्तां कुर्याद् वेदीं सुलक्षणाम् ।**
**चतुरस्रां चतुर्द्वारामक्षतैः सुप्रतिष्ठिताम् ॥ १९ ॥**

**वेदी का निर्माण**—फिर गोबर से लीपकर अक्षतों से सुलक्षण एवं चौकोर चार द्वार वाली सुप्रतिष्ठित वेदी का निर्माण करे ॥ १७-१९ ॥

वेद्यां ब्रह्मकुम्भस्थापनम्

**तस्या मध्ये प्रतिष्ठाप्यः कुम्भो हैमोऽथ राजतः ।**
**ताम्रको मृन्मयो वापि पूर्वालाभे परः परः ॥ २० ॥**

**वेदी पर कलशस्थापन**—उस वेदी के मध्य भाग में सोने का अथवा चाँदी का, ताम्बे का या मिट्टी का एक कलश स्थापित करे । कलशों के इन विकल्पों में पहिले की अप्राप्ति में दूसरा श्रेष्ठ कहा गया है ॥ २० ॥

**अकालमूलः सोऽव्यङ्गो जलपूर्णः स्वलङ्कृतः ।**
**मणिरत्नप्रवालैश्च स्वर्णरूप्येण गर्भितः ॥ २१ ॥**
**प्रतिष्ठा(प्या?प्योऽ)क्षतैः पुष्पफलबीजसमन्वितः ।**
**श्वेतेन चन्दनेनैनं चर्चयित्वा समन्ततः ॥ २२ ॥**
**तस्योपरिष्टाद् विन्यस्येत् क्षीरवृक्षस्य पल्लवम् ।**

**सुगन्धिनाथ धूपेन धूपयित्वा चतुर्दिशम् ॥ २३ ॥**
**वेष्टयेदहतेनैनं शुक्लवस्त्रेण सर्वतः ।**
**वास्तुमध्ये यतो ब्रह्मा कुम्भरू(पं?पः)स तिष्ठति॥ २४ ॥**

कलश को अकालमूल, अविकलाङ्ग, जलपूर्ण, स्वलंकृत और भीतर मणियों, रत्नों, मोतियों और सोने चाँदी से गर्भित पुष्प, फल एवं बीज से युक्त कर उस कलश की, अक्षतों से प्रतिष्ठा करके, फिर इसको चारों तरफ से सफेद चन्दन से लिप्त कर चित्रित करे । फिर इसके ऊपर क्षीरवृक्ष अर्थात् न्यग्रोध, उदुम्बर, अश्वत्थ तथा मधूक इनमें किसी के पत्ते का विन्यास करे और फिर इसको चारों दिशाओं में सुगन्ध एवं धूप से धूपित करे । तदनन्तर नवीन शुक्ल वस्त्र से इसको सब तरफ से वेष्टित करे क्योंकि वास्तु के मध्य में कुम्भरूप में ब्रह्मा ही बैठते हैं ॥ २१-२४ ॥

### कीलकसंस्करणम्

**कुम्भस्योत्तरभागे तु कीलकान् स्थापयेद् बुधः ।**
**कीलानष्टौ परीक्षेत स्थापयेच्च यथाविधि ॥ २५ ॥**

**कीलक का संस्कार एवं स्थापन**—कुम्भ के उत्तर भाग में बुद्धिमान् स्थपति कीलकों की स्थापना करे फिर उनमें से आठ कीलों की परीक्षा करके यथाविधि (अर्थात् आठों दिशाओं में) उनकी स्थापना करे ॥ २५ ॥

**श्वेतचन्दनलिप्तांस्ताञ् श्वेतपुष्पैर्विभूषयेत् ।**
**सालक्तकान् सुरभिणा धूपेन च सुधूपितान् ॥ २६ ॥**
**ऊर्णामयेन सूत्रेण त्रिवर्णेनाभिवेष्टयेत् ।**
**मधूसर्पिर्दधिक्षीरैर्मूलभागेषु लेपयेत् ॥ २७ ॥**

फिर श्वेत चन्दन से उन कीलकों पर लेप करे और श्वेत पुष्पों से उनको विभूषित करे । फिर आलक्तक से रङ्गे हुए एवं सुगन्धित धूप से सुधूपित उन कीलों का तीन वर्ण वाले ऊनी सूत्र से अभिवेष्टन करे । उनके मूल भागों में मधु, घी, दही और दूध से लेपन करे ॥ २६-२७ ॥

### परश्वाद्युपकरणपूजा

**अर्चयेत् परशुं सूत्रमष्ठीलादीनि सर्वतः ।**
**अथोपकरणान्यत्र धूपपुष्पाक्षतादिभिः ॥ २८ ॥**
**ततः पूर्वोत्तरे वास्तोर्भागे सप्तार्चिषः पदे ।**
**गोमयेन समालिप्ते कुशास्तरणमास्थितः ॥ २९ ॥**

## अग्निकार्यम्

**अग्निकार्यं प्रकुर्वीत पुरोधाः शान्तिमेव च ।**

**परशु आदि उपकरणों की पूजा**—चारो ओर से परशु (= फरसा) एवं सूत्र, हथौड़े आदि औजारों की पूजा करे और धूप, दीप, पुष्प एवं अक्षत आदि से उनका उपचार सम्पन्न करे । तब वास्तु के पूर्वोत्तर भाग में गोबर से लिपे हुए सप्तार्चि (= अग्नि) के पद में कुशासन पर बैठे हुए पुरोहित हवन और शान्तिकर्म सम्पादित करें ॥ २८-३० ॥

## सुलग्नपरीक्षणम्

**सांवत्सरः शुचिः स्नातः कृत्स्नानः(?) समाहितः ॥ ३० ॥**
**शङ्कुना साधयेल्लग्नं सम्यक् तद्धटिकाथवा(?)।**
**रात्रिलग्नं तु नक्षत्रैर्मध्यास्तोदयसंश्रितैः ॥ ३१ ॥**

**ज्योतिषी द्वारा लग्न परिशोधन**—फिर ज्योतिषी शुद्ध एवं पवित्र होकर स्नान करके सावधान चित्त से शङ्कु से लग्न की सिद्धि करे । लग्न की तथा घड़ी की साधना शङ्कु से आरम्भ करे, रात्रि की लग्न हो तो अस्त, उदय और मध्य भाग में आश्रित नक्षत्रों से लग्न का साधन करे ॥ ३०-३१ ॥

## पुरोहितसांवत्सरिकस्थपत्यादीनां पूजा

**एवं संसाधयेल्लग्नं यदीच्छेत् सिद्धिमात्मनः ।**
**पूजया तुष्टिकारिण्या पूजयेच्च पुरोहितम् ॥ ३२ ॥**
**अभ्यर्चिते यतस्तस्मिन् ब्रह्मा भवति पूजितः ।**

**पुरोहित (= ब्रह्मा) की पूजा**—इस प्रकार से अपनी सिद्धि की इच्छा रखने वाला गृहस्वामी ज्योतिषी से लग्न सिद्ध करावे तथा तुष्टि करने वाली पूजा से पुरोहित की पूजा करे क्योंकि पुरोहित की पूजा करने से ब्रह्मा की पूजा होती है ॥ ३२-३३ ॥

**सांवत्सरस्य कर्तव्या ततः पूजा यथाविधि ॥ ३३ ॥**
**सांवत्सरेऽर्चिते यस्मात् पूजितः स्याद् बृहस्पतिः ।**

**ज्योतिषी (= बृहस्पति) की पूजा**—तदनन्तर सांवत्सर (= ज्योतिषी) की यथाविधि पूजा करनी चाहिए क्योंकि सांवत्सर की पूजा करने से साक्षात् बृहस्पति की पूजा होती है ॥ ३३-३४ ॥

**स्थपतिं पूजयेत् पश्चात् त्वष्टृतुष्टिचिकीर्षया ॥ ३४ ॥**

तदधीनं यतः कर्म शुभं वा यदि वाशुभम् ।
श्वेतचन्दनदिग्धांस्ताञ् श्वेतपुष्पैश्च पूजितान् ॥ ३५ ॥
सदशैरहतैर्वस्त्रैरङ्गुलीयैः प्रपूजयेत् ।

**स्थपति (= विश्वकर्मा) की पूजा**—त्वष्टा अर्थात् विश्वकर्मा की तुष्टि के लिए स्थपति की पूजा करे, क्योंकि उसी के अधीन शुभ एवं अशुभ सभी कर्म होते हैं। श्वेत चन्दन से लिप्त और श्वेत पुष्पों से पूजित उन लोगों की पूजा कर दशायुक्त (पूरे) अहत वस्त्रों से उन्हें अलंकृत कर अपनी अङ्गुलियों से उनके मस्तक पर टीका लगाकर पूजन करे ॥ ३४-३६ ॥

परिकर्मकरा ये च तान् यथाशक्ति पूजयेत् ॥ ३६ ॥
हेम्ना वस्त्रादिदानैश्च वाग्भिर्वा परितोषयेत् ।
यथा सुमनसस्ते स्युस्तथा कर्तव्यमादरात् ॥ ३७ ॥

**परिकरों की पूजा**—जो मजदूर आदि परिकर हैं उनकी भी यथाशक्ति पूजा करे और सुवर्ण से अथवा वस्त्रादि के दान से या फिर मीठे वचनों से ही उनको सन्तुष्ट करे । जिस प्रकार वे प्रसन्न होवें उसी प्रकार सादर उन सब के अनुकूल कार्य करे ॥ ३६-३७ ॥

### सूत्रपातसम्बद्धं बलिकर्म

ततः स्थपतिराचम्य बलिकर्म समाचरेत् ।
सूत्रपाते बलिं धीमान् सार्वभौतिकमाचरेत् ॥ ३८ ॥

**सूत्रपात सम्बन्धी बलिकर्म**—तदनन्तर स्थपति आचमन करके विभिन्न देवों के लिए बलि कर्म का समाचरण करे । सूत्रपात में बुद्धिमान् स्थपति सार्वभौतिक (= वैकल्पिक) बलि का समाचरण करे ॥ ३८ ॥

### यथोक्तबल्यलाभे कार्यो बलिविशेषः

तस्यालाभे बलिः कार्यो यो भवेत् सोऽभिधीयते ।
विदधीत चरूञ् श्वेतरक्तपीतासितान् पृथक् ॥ ३९ ॥
पायसं कृसरं क्षीरं निष्पावान् श्वेतमोदनम् ।
पाविकादधिरूपांश्च पललोल्लापिकाघृतम् ॥ ४० ॥
दध्योदनं च सम्मिश्रं देवताभ्यो निवेदयेत् ।

**यथोक्त बलि न मिलने पर वैकल्पिक बलि विधान**—अब उसके अलाभ में जो बलि होती है वह कही जाती है । सफेद, लाल, पीले और काले चरुओं का

अलग-अलग विधान करे । पायस, कृसर, क्षीर, निष्पाव (दाल), सफेद भात, पाविक (पूए), दधि, मांस आदि से, घृत तथा दधि से मिश्रित भात से देवताओं के लिए बलि निवेदन करे ॥ ३९-४१ ॥

**तिलैर्घृतेन सहितैर्देवमग्निं च पूजयेत् ॥ ४१ ॥**
**ततश्च पायसं दध्ना ब्रह्मस्थाने निवेदयेत् ।**
**ततश्चानुक्रमेणैव देवताभ्यो बलिं हरेत् ॥ ४२ ॥**

घृत सहित तिलों से अग्निदेव की पूजा करे । तदनन्तर दही और खीर ब्रह्मा के स्थान पर निवेदन करे । तदनन्तर क्रमशः चतुःषष्टि पद के उन-उन देवताओं को बलि प्रदान करे ॥ ४१-४२ ॥

### विप्रपूजनम्

**बलिकर्म यथान्यायं कृत्वा च द्विजवाचनम् ।**
**स्वशाखीयञ् शुचीन् प्राज्ञान् पूजयेद् दक्षिणाफलैः ॥ ४३ ॥**

**ब्राह्मण पूजन**—यथा प्रतिपादित (यथाशास्त्र) बलिकर्म समाप्त कर और ब्राह्मणों से स्वस्तिवाचन कराकर अपने शाखीय या स्वजातीय विद्वान् एवं आचार शुद्ध ब्राह्मणों की दक्षिणा प्रदान कर पुष्पों एवं फलों से पूजा करे ॥ ४३ ॥

**ओंकारस्वस्तिपुण्याहैर्गीतवादित्रनिस्वनैः ।**
**ततो विप्रैः सह स्वामी कुर्यात् तस्य प्रदक्षिणम् ॥ ४४ ॥**

वेदपाठ तथा स्वस्तिवाचन एवं पुण्यश्लोकों के पाठ से तथा गायन एवं वादन और नर्तन करते हुए कीर्तन आदि कर ब्राह्मणों के साथ गृहस्वामी उस 'वास्तुमण्डल' की प्रदक्षिणा करे ॥ ४४ ॥

### स्थापनाय प्रथमशङ्कोरुद्धरणनियमाः

**अक्षतान् प्रथमं कुम्भे दापयित्वा द्विजोत्तमैः ।**
**ततो दक्षिणपूर्वेण गत्वा पुण्याहवाचकैः ॥ ४५ ॥**
**अहताम्बरसंवीतः शुचिः स्थपतिरासने ।**
**निषद्य प्राङ्मुखः शङ्कुं धृत्वा दक्षिणपाणिना ॥ ४६ ॥**
**पश्चादादाय वामेन प्रतिष्ठाप्य च भूतले ।**
**मन्त्रानमूञ् जपन् वीरो हन्यात् परशुना ततः ॥ ४७ ॥**

**कील की स्थापना विधि**—पहले द्विजोत्तमों से घट में अक्षतों को डलवाकर तदनन्तर स्वस्तिवाचन के साथ दक्षिण पूर्व की ओर से जाकर नवीन वस्त्र पहने

हुए पवित्र होकर स्थपति आसन पर बैठ जाए और पूर्वमुख दाएँ हाथ से शङ्कु को धारण करे । तदनन्तर बाएँ हाथ से शङ्कु को लेकर भूतल पर प्रतिष्ठापित करे । निम्न श्लोक मन्त्रों का पाठ करता हुआ, वह वीर स्थपति कील को भूमि पर परशु (फरसे या हथौड़ी) से मारे ॥ ४५-४७ ॥

**भूमौ प्रतिष्ठापितस्य तस्य परशुना हनने मन्त्राः**

**विशन्तु ते तलं नागा लोकपालास्तथैव च ।**
**प्रतिष्ठन्तु गृहं चास्मिन्नायुर्बलकरं भवेत् ॥ ४८ ॥**

**प्रतिष्ठापित कील के हनन का मन्त्र**—वास्तु के तल में नाग और लोकपाल प्रवेश करें और घर में प्रतिष्ठित होकर इसकी आयु और बल को बढ़ावें ॥ ४८ ॥

**शङ्कुमूर्धनि दातव्यानां प्रहाराणां संख्या**

**प्रहारान् सुस्थिरानष्टौ दद्यात् कीलस्य मूर्धनि ।**
**हन्यमाने ततः कीले निमित्तान्युपलक्षयते ॥ ४९ ॥**

**कील पर प्रहार की संख्या**—आठ सुस्थिर (गहरे) प्रहारों कों कील के मस्तक पर प्रदान करे और तदनन्तर कील पर प्रहार के बाद निमित्तों (शकुनों) का उपलक्षण (= शुभाशुभ विचार) करे ॥ ४९ ॥

**हन्यमाने तस्मिन् शुभाशुभनिमित्तोपलक्षणम्**

**गोविप्ररथनागाढ्याः कन्या नृपवरस्त्रियः ।**
**शङ्खदुन्दुभिवंशानां तथा गीतस्य च ध्वनिः ॥ ५० ॥**
**आविर्भवति यद्यस्मिन् हन्यमाने प्रभुस्तदा ।**
**सततं सुखमाप्नोति शान्त्यैश्वर्यैश्च वर्धते ॥ ५१ ॥**

**कील पर प्रहार की ध्वनि से शुभाशुभ का विवेचन**—गो, ब्राह्मण, रथ, उत्तम हाथी, कन्याएँ, रानियाँ तथा शङ्ख, दुन्दुभि, बाँसुरी और गीत की ध्वनि यदि इस कील के मारे जाने पर आविर्भूत हो, तो गृहस्वामी सतत सुख को प्राप्त करता है तथा शान्ति और ऐश्वर्य से वृद्धि को प्राप्त करता है ॥ ५०-५१ ॥

**हतं क्षुतं विपन्नं वा निषेधः सूत्रकीलयोः ।**
**पाषण्डिनां च सर्वेषां दर्शनं न सुखावहम् ॥ ५२ ॥**

कील को चोट मारने पर यदि छींके आ जाएँ अथवा कील विपन्न (फूट) हो जाए तो सूत्र और कील दोनों का निषेध समझना चाहिए । उस पूजन के समय पाखण्डियों का दर्शन भी माङ्गलिक नहीं होता ॥ ५२ ॥

### ताडनसाधननियम:

**दृष्ट्वा शुभनिमित्तानि ततः शङ्कुं निवेशयेत् ।**
**हन्यमानो यदा कीलो विशेद् भूमौ शनैः शनैः ॥ ५३ ॥**
**कर्मसिद्धिर्भवेत् तत्र गृहं रत्नपरिच्छदम् ।**

**कील ताडन का फल**—शुभ निमित्तों को देखकर तदनन्तर शङ्कु का निवेशन करे । यदि शङ्कु के मारने पर वह भूमि में धीरे से प्रवेश करे तो वहाँ पर कर्म की सिद्धि होती है और वह घर रत्नों से भर जाता है ॥ ५३-५४ ॥

**हन्यमानोऽपि न विशेद् धरित्रीं कीलको यदा ॥ ५४ ॥**
**न तत्र कर्मसिद्धिः स्यादनिमित्तं च लक्षयेत् ।**

ताड़ित होने पर (ठोकने पर) भी जब कील पृथ्वी में प्रविष्ट नहीं होता तो वहाँ पर कर्मसिद्धि नहीं होती । इससे अनिमित्त (अपशकुन) की ओर ध्यान जाना चाहिये ॥ ५४-५५॥

**एकेनापि प्रहारेण यत्र कीलो विशेन्महीम् ॥ ५५ ॥**
**न सिद्धिं याति तत्रौकः कृतं वा नोपभुज्यते ।**

एक प्रहार से ही शङ्कु जहाँ पृथ्वी में प्रवेश करता है वहाँ पर वह घर (= ओक) सिद्धि को नहीं प्राप्त होता है और यदि वह बन भी जाता है तो फिर उसका उपभोग नहीं होता है ॥ ५५-५६ ॥

**आयस्याष्ठीलया हन्यान्न काष्ठेन कथञ्चन ॥ ५६ ॥**
**काष्ठेन ताडितः कीलो वह्निदोषकरो भवेत् ।**
**अश्मना यदि ताड्येत तदा व्याधिं प्रयच्छति ॥ ५७ ॥**

लोहे के बनी हुई हथौड़ी (आष्ठीला) से ताड़न करे, लकड़ी के हथौड़े से नहीं, क्योंकि लकड़ी से ताड़ित होने पर कील वह्निदोष उत्पन्न करने वाला होता है और यदि पत्थर से कील ताड़ित किया जाए तो यजमान को व्याधि प्रदान करता है ॥ ५६-५७ ॥

### ताडितस्य कीलकस्य प्राच्यादिषु नमने फलम्

**ऐन्द्रीं प्रति नतः कीलो धनसम्मानकारकः ।**
**आग्नेय्यां प्रणते कीले भवत्यग्निभयं महत् ॥ ५८ ॥**

**ताडित कील के पूर्व आदि दिशाओं में झुकने का फल**—ऐन्द्री (पूर्व) दिशा की ओर झुका हुआ कील धन तथा सम्मान दिलाने वाला होता है तथा

आग्नेयी दिशा (पूर्व-दक्षिण का कोना) में कील के नत होने पर बड़ा भारी अग्निभय होता है ॥ ५८ ॥

**याम्यायां मरणं राज्ञां दिशि राक्षसतो भयम् ।**
**धननाशस्तु वारुण्यां वायव्यां रोगतो भयम् ॥ ५९ ॥**

दक्षिण दिशा में (कील के झुके रहने पर) राजाओं का मरण और राक्षसों से भय उत्पन्न हो जाता है । उत्तर में झुके रहने पर धननाश और वायव्य में झुके रहने पर रोगभय प्राप्त होता है ॥ ५९ ॥

तस्मिन् कूर्चके जाते फलम्

**सौम्यं सौम्यानते राजप्रसादायेशतो गतः ।**
**कीलके कूर्चके जाते पुत्रपौत्रान्वयैर्गृहे ॥ ६० ॥**
**परमामृद्धिमाप्नोति धनधान्यैश्च वर्धते ।**

**ताडन से कूर्च रूप प्राप्त होने का फल**—सौम्य (उत्तर) दिशा में नत होने पर सौम्यत्व प्राप्त होता है तथा ईशानी दिशा में झुके रहने पर राजा को प्रसन्नता होती है । कीलक के कूर्चक अर्थात् कूँची रूप को प्राप्त हो जाने पर पुत्र, पौत्र तथा अन्य कुटुम्बियों के साथ धन, धान्यों से उस घर में सम्मृद्धि होती है और वह घर परम ऋद्धि को प्राप्त होता है ॥ ६०-६१ ॥

तस्य स्फुटनहस्तभ्रंशादिषु फलम्

**हन्यमानो यदा यत्नात् कीलः कश्चिदपि स्फुटेत् ॥ ६१ ॥**
**नाशं विद्यात् तस्य पत्न्या ज्येष्ठस्य तनयस्य वा ।**

**कील के फटने या हाथ से गिर जाने पर फल**—जोर से ताड़ित होने पर जब कोई कील फट जाता है तो बड़ा अपशकुन होता है । गृहस्वामी की पत्नी का अथवा उसके ज्येष्ठ पुत्र को पीड़ा समझना चाहिए ॥ ६१-६२ ॥

**यदि भज्येत कीलः स्वात् स्वामिनो जायते वधः ॥ ६२ ॥**

यदि कील अपने आप फट जाए या टूट जाए तो गृह स्वामी का वध समझना चाहिए ॥ ६२ ॥

**यदा कीलः पतेद्धस्ताद् भ्रंशःस्यात् स्थपतेस्तदा ।**
**हस्तभ्रष्टश्च (?) स भवेदष्ठीले हस्तविच्युते ॥ ६३ ॥**

यदि शङ्कु हाथ से छूटकर गिर पड़े तब स्थपति (गुरु) का नाश समझना चाहिए । हथौड़ी (= आष्ठीला) के हाथ से छूटकर गिरने पर यह कील हस्त के

नस चटक जाने (विच्युति) का कारण बन जाता है ॥ ६३ ॥

**सुखेन हन्यमानश्चेत् कीलः स्वस्थो न जायते ।**
**अष्टौ प्रहारानपरांस्तस्य दद्यात् तदा पुनः ॥ ६४ ॥**

कील यदि आसानी से ताड़ित किया जाता है तो वह स्वस्थ नहीं होता तब फिर स्थपति उसको आठ अन्य प्रहारों से ताड़ित करे ॥ ६४ ॥

### प्रथमप्रहाराष्टकेन कीलकस्य स्वास्थ्याभावे कर्तव्यं कर्म

**स्रग्गन्धधूपोपहारैः कुर्याच्च परिषेचनम् ।**
**इदं साम महापुण्यं परिचिन्त्य समासतः ॥ ६५ ॥**
**त्रैशोकं तु जपेद् विद्वान् यावच्छंक्कभिषेचनम् ।**
**गत्वाथ नैर्ऋतीमाशां ततः शङ्कुं निवेशयेत् ॥ ६६ ॥**

**कीलक के गाड़ने में कर्म**—माला, गन्ध एवं धूप दीप आदि उपचारों से कीलों को पहले पूजन कर परिषेचन करे । इस महापुण्य साम का संक्षेप से परिशीलन कर विद्वान् जब तक शङ्कु का अभिषेचन हो तब तक त्रैशोक (साम) का जाप करे । पुनः इसके बाद नैर्ऋत्य दिशा की ओर जाकर इस शङ्कु का निवेशन करे ॥ ६५-६६ ॥

### शंक्वभिषेकादि

**ऊर्णायिवेन साम्नास्य सम्यक् स्नपनमाचरेत् ।**
**वायोर्दिशं ततो गत्वा तत्र शङ्कुं निवेशयेत् ॥ ६७ ॥**

**शङ्कु का अभिषेकादि विधान**—सामवेद के 'ऊर्णायिव' नामक मन्त्र से इसको ठीक तरह से अभिषिंचित करे । तदनन्तर वायव्य दिशा में जाकर वहाँ पर शङ्कु को गाडने का उपक्रम करे ॥ ६७ ॥

**अभिषेकं महारत्नसाम्ना तस्य समाचरेत् ।**
**अथैशानीं दिशं गत्वा शङ्कुं तस्यां निवेशयेत् ॥ ६८ ॥**
**भाग्रेण साम्ना कुर्वीत प्राग्वत् तस्याभिषेचनम् ।**

उसका वहाँ पर 'महारत्न साम' से अभिषेक करे । इसके बाद ईशान कोण में जाकर वहाँ पर शङ्कु को गाड़े और पहले की ही भाँति 'भाग्र साम' से अभिषेचन सम्पन्न करे ॥ ६८-६९ ॥

### सूत्रबन्धप्रकारः

**ततोऽनुसूत्रं बध्नीयात् सव्यं द्विगुणवेष्टितम् ॥ ६९ ॥**

**प्रदक्षिणं प्रसार्यैतदुक्तः शङ्कुक्रमो यथा ।**

**सूत्र फैलाने की विधि**—इसके बाद सव्य (दक्षिण की ओर) द्विगुणित वेष्टित (दो डोरी से लपेटे हुए) सूत्र को बाँधे और फिर इसको प्रदक्षिण (Clockwise) करके फैलावे । यह यथाविधि शङ्कु का (स्थापन) क्रम कहा गया है ॥ ६९-७० ॥

**विमर्श**—बृहत्संहिता (वास्तुविद्याध्याय १०४) में फल इस प्रकार कहा है—

वैरमपसव्यलिखिता प्रदक्षिणं सम्पदो विनिर्देश्याः ।
वाचः परुषा निष्ठीवितं क्षुतं चाशुभं कथितम् ॥

वामक्रम से लिखी हुई रेखा शत्रुता और प्रदक्षिण क्रम से लिखी हुई रेखा सम्पत्ति प्रदान करती है । गृहारम्भ काल में कठोर वचन बोलना, थूकना और छींकना अशुभ है ।

**बध्यमानं यदा सूत्रं शङ्कुः किमपि मुञ्चति ॥ ७० ॥**
**तदा पुत्रवधं विद्याच्छिन्नं स्वस्वामिमृत्यवे ।**
**तस्माद् यत्नः प्रकर्तव्यो यावत् सूत्रं प्रसार्यते ॥ ७१ ॥**

सूत्र को बाँधने के अनन्तर जब शङ्कु कुछ जमीन छोड़ देता है अर्थात् सूत्र ढीला हो जाये तो पुत्र पीडा समझना चाहिए । सूत्र के छिन्न-भिन्न होने पर वह दोष अपने स्वामी की मृत्यु का कारण बन जाता है । इसीलिए जब तक जमीन पर सूत्र फैलाया जाए तो सूत्र बन्धन में अत्यन्त सावधानी बरतनी चाहिए ॥ ७०-७१ ॥

**चतुर्णामपि बाहूनां पोषं (?) छिन्नं न दुष्यति ।**
**सूत्रं प्रसार्य वितरेच्चरून् पूर्वं प्रकल्पितान् ॥ ७२ ॥**

अब चरुओं का श्रपण कर्म कहते हैं—चारों कोनों पर सूत्र को फैलाकर पूर्व प्रकल्पित चरुओं को अपने-अपने स्थानों पर श्रपण करे ॥ ७२ ॥

**कीलकस्थानेषु बलिदानविधिः**

**स्वेषु स्वेषु ततः स्थानेष्वनेन विधिना बुधः ।**
**शङ्कुस्थानेषु दातव्याः सिताद्याश्चरवः क्रमात् ॥ ७३ ॥**

**कीलकस्थान पर बलिदान विधि**—बुद्धिमान स्थपति अपने-अपने स्थानों पर निम्न विधिपूर्वक कील के स्थानों पर सित आदि चरुओं को दिक्क्रम से बलि प्रदान करे ॥ ७३ ॥

**प्राग्दक्षिणस्या विदिशो मन्त्रं चेमं हृदा जपेत् ।**
**मारुतानां च सर्वेषां मानवानां तथैव च ॥ ७४ ॥**
**बलिं तेषु प्रयच्छामि मन्त्रेण परिमन्त्रितम् ।**

पूर्व-दक्षिण दिशा की तरफ मुख करके इन चार श्लोक मन्त्र को हृदय में जपे—

१. मारुत देवों को और सभी मानवों को मन्त्र से अभिमन्त्रित करके सम्प्रति इस बलि को देता हूँ ॥ ७४-७५ ॥

**रक्तं बलिमुपादाय नैर्ऋत्यभिमुखस्तथा ॥ ७५ ॥**
**नैर्ऋत्यधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः ।**
**बलिं तेषु प्रयच्छामि रक्तमोदनमुत्तमम् ॥ ७६ ॥**

२. लाल बलि लेकर नैर्ऋत्य दिशा की ओर उन्मुख होकर इस श्लोक मन्त्र से बलि दे—'नैर्ऋत्याधिपति और उस दिशा में जो राक्षस हैं उन सभी को मैं लाल चावल की इस अनुत्तम बलि को देता हूँ' ॥ ७५-७६ ॥

**कृष्णं बलिमुपादाय गत्वा च दिशमानिलीम् ।**
**नमस्ते नागराजाय ये चान्ये तं समाश्रिताः ॥ ७७ ॥**
**बलिं तेषु प्रयच्छामि कृष्णमोदनमुत्तमम् ।**

३. अब काले रङ्ग की चावल की बलि को लेकर वायव्य दिशा में जाकर 'नमस्ते...' आदि मन्त्र से बलि दे—

'नागराज के लिए नमस्कार है और जो लोग भी नागराज के आश्रित हैं उनको भी मेरा नमस्कार है । उन्हें मैं काले चावल की इस अनुत्तम बलि को देता हूँ' ॥ ७७-७८ ॥

**बलिमुद्धृत्य हारिद्रमैशानीमाश्रयन् दिशम् ॥ ७८ ॥**
**नमो रुद्रेषु सर्वेषु ये चान्ये तान् समाश्रिताः ।**
**प्रयच्छामि बलिं तेषां हारिद्रोदनमुत्तमम् ॥ ७९ ॥**

४. हल्दी युक्त पीली बलि को उठाकर ईशान दिक् की ओर उन्मुख होकर इस श्लोक मन्त्र से बलि प्रदान करे—'ऐशानी दिशा में रहने वाले समस्त रुद्रों को नमस्कार है और जो उन रुद्रों में समाश्रित हैं उनको भी नमस्कार । उन लोगों के लिए यह हल्दी युक्त पीले अनुत्तम चावलों की बलि देता हूँ' ॥ ७८-७९ ॥

**साम्ना मन्त्रितेन कुम्भोदकेन वास्तुप्रोक्षणम्**

**एवमेतान् बलीन् सर्वान् यथावत् प्रतिपादयेत् ।**

**ततः कुम्भोदकं पुण्यं साम्ना दिव्येन मन्त्रयेत् ।**
**वामदेव्येन कुर्वीत प्रोक्षणं तेन वास्तुनः ॥ ८० ॥**

**साम मन्त्र पढ़ते हुए कुम्भ-जल से वास्तु का प्रोक्षण**—इस प्रकार से इन समग्र बलियों का यथाविधि बलिदान करे । तदनन्तर उस कुम्भ के पुण्य जल को 'दिव्य' साम मन्त्र से अभिमन्त्रित करे और 'वामदेव्य' साम मन्त्र से वास्तु (= गृह) का प्रोक्षण करे ॥ ८० ॥

### उपसंहार

**द्रुमा विप्रादीनामिति निगदिताः शङ्कुघटने**
**फलं यच्छङ्कोश्च स्फुटमिह निमित्तानि बहुशः ।**
**तथा सूत्राताने विधिरनु च मन्त्रैः प्रतिदिशं**
**बलिः कीलेषूक्तस्त्रिदशपरितोषाय विधिवत् ॥ ८१ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे कीलकसूत्रपातो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥**

...✿...

**उपसंहार**—ब्राह्मण आदि वर्णों के योग्य शङ्कु निर्माण में जो शुभ वृक्ष माने गए हैं उनका वर्णन किया गया । शङ्कु का जो फल होता है वह भी स्फुटित किया गया तथा शङ्कु निवेश के निमित्तों का भी यहाँ बार-बार वर्णन किया गया है। साथ ही साथ सूत्र के प्रसारण की मन्त्रपूर्वक विधि भी कही गई और मन्त्रपूर्वक कीलों में स्थापित देवताओं की सन्तुष्टि के लिए विधिवत् प्रत्येक दिशा की बलि का भी वर्णन किया गया है ॥ ८१ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'कीलकसूत्रपात' नामक सैंतीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ३७ ॥**



# अथाष्टात्रिंशोऽध्यायः

## * वास्तु-संस्थान-मातृका[1] *

## (Site Plan of the House)

**इदानीमभिधास्यामो वास्तुसंस्थानमातृकाम् ।**
**निवासहेतवे सम्यक् सर्वकर्मोपजीविनाम् ॥ १ ॥**

अब **वास्तु-संस्थान-मातृका** का सभी प्रकार के कर्मोपजीवियों के निवास हेतु भलीभाँति वर्णन किया जाता है ॥ १ ॥

चत्वारिंशतः क्षेत्रसंस्थानानां संज्ञास्तद्विनियोगश्च

**चतुरस्रं समं साचि दीर्घं वृत्तं च शम्बुकम् ।**
**शकटाक्षभगादर्शवज्रकन्थाकृतीनि च (?) ॥ २ ॥**
**छिन्नकर्णं विकर्णं च शङ्खाभं क्षुरसन्निभम् ।**
**शक्त्याननं कूर्मपृष्ठं सदंशं व्यजनाकृति ॥ ३ ॥**

**वास्तु संस्थान के चालिस प्रकार के क्षेत्र**—१. सम, २. चतुरस्र, ३. साचि (= शय्याकार), ४. दीर्घ, ५. वृत्त, ६. शम्बुक, ७. शकटाक्षाकृति, ८. भगाकृति, ९. आदर्शाकृति (= दर्पणाभ), १०. वज्राकृति, ११. कन्थाकृति (= शंखसंस्थान), १२. छिन्नकर्ण, १३. विकर्ण, १४. शङ्ख-सदृश, १५. क्षुर-सन्निभ, १६. शक्तिमुख, १७. कूर्मपृष्ठ, १८. संदंश, १९. व्यजनाकृति ॥ २-३ ॥

**शरावस्वस्तिकाकारं मृदङ्गपणवोपम् ।**
**विशर्करं कबन्धाभं यवमध्यसमाकृति ॥ ४ ॥**
**उत्सङ्ग (रा?ग)जदन्ताभे तथा परशुसन्निभम् ।**
**विस्रावितं च श्वभ्रं च प्रलम्बं च विवाहिकम् ॥ ५ ॥**

२०. शरावाकृति, २१. स्वस्तिकाकृति, २२. पणवाकार, २३. मृदङ्गाकार, २४. विशर्कर, २५. कबन्धाकृति, २६. यवमध्य-समाकृति, २७. उत्सङ्गाकार, २८. गजदन्ताकार, २९. परशु-सदृश, ३०. श्वभ्र, ३१. प्रलम्ब, ३२. विवाहिक ॥४-५॥

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह उन्नीसवाँ अध्याय है ।

त्रिकुष्टं पञ्चकुष्टं च परिच्छिन्नं तथापरम् ।
दिक्स्वस्तिकाभं श्रीवृक्षं वर्धमानसमाननम् ॥ ६ ॥
एणीपदं नरपदं चत्वारिंशत् समासतः ।
क्षेत्राण्युक्तान्यथामीषां विनियोगो विधीयते ॥ ७ ॥

३३. त्रिकुष्ट, ३४. पञ्चकुष्ट, ३५. परिच्छिन्न, ३६. दिक्स्वस्तिकाभ, ३७. श्रीवृक्ष, ३८. वर्धमान-समानन, ३९. एणीपद, ४०.नरपद—ये चालीस प्रकार के **वास्तु संस्थान के क्षेत्र** संक्षेप में बताये गये । अब इनका विनियोग बताया जाता है ॥ ६-७ ॥

**तत्र राज्ञस्तत्कुमाराणां पुरोहितस्य सेनापतेश्च वासोचितानि क्षेत्रसंस्थानानि**

चतुरस्रे समे राजा शय्याकारे पुरोहिताः ।
दीर्घे कुमारकाः सेनापतिर्वृत्तायते वसेत् ॥ ८ ॥

**राजा, राजकुमार, पुरोहित एवं सेनापति के संस्थान**—(१-५) चौकोर तथा सम में राजा वास करे, शय्याकार में पुरोहित, दीर्घ में छोटे राजकुमार और वृत्तायत में सेनापति निवास करें ॥ ८ ॥

**वाहनानामन्तःपुरस्य वणिजां वैश्यानां सुवर्णकृतां नगरगोष्ठिकानां च क्षेत्रसंस्थानानि**

वसेयुः शम्बुकाकारे सर्वेवाहाः सुखार्थिनः।
अन्तःपुरं सद्म समे वाणिजाः शकटाकृतौ ॥ ९ ॥

**वाहन, अन्तःपुर, वणिक्, वैश्य, स्वर्णकार एवं नगरगोष्ठिक के संस्थान**—(६-७) शम्बुक के आकार में सुख चाहने वाले सभी (गज, अश्व एवं रथादि) वाहन निवास करें । सम में अन्तःपुर होना चाहिए तथा शकटाकृति में नगर के बनिया लोग बसें ॥ ९ ॥

वेश्यास्तु भगसंस्थाने दर्पणाभे सुवर्णकृत् ।
संस्थानतो वज्रसमे जना नगरगोष्ठिकाः ॥ १० ॥

(८-१०) वेश्याएँ भग-संस्थान में निवास करें, दर्पणाभ संस्थान में सुनार तथा वज्र-सदृश संस्थान में नगर-गोष्ठिक लोग रहें ॥ १० ॥

**पुत्राभिलाषिणां महामात्राणां मृगलुब्धकानामेकदृश्वानां गणाचार्याणां व्रजाध्यक्षाणां मालिकानां च तत्संस्थानानि**

वसेयुः शङ्खसंस्थाने क्षेत्रे पुत्राभिलाषिणः ।

**छिन्नकर्णे महामात्रा विकर्णे मृगलुब्धकाः ॥ ११ ॥**

**पुत्राभिलाषी, महापात्र, बहेलिया, एकाक्षजन, गणाचार्य, व्रजाध्यक्ष एवं माली-जन के संस्थान**—(११-१३) शङ्ख-संस्थान नामक क्षेत्र में पुत्राभिलाषी गृहस्थ को निवास करना चाहिए। छिन्नकर्ण में महामात्र लोग एवं विकर्ण में बहेलिए को बसना चाहिए ॥ १०-११ ॥

**शङ्खाभे चैकदृश्वानो गणाचार्याः क्षुरोपमे।**
**व्र(ता?जा)ध्यक्षः शक्तिमुखे कूर्मपृष्ठे तु मालिकाः ॥ १२ ॥**

(१४-१७) शङ्खाभ में काने और क्षुरोपम संस्थान में गणाचार्य, शक्तिमुख में व्रजाध्यक्ष और कूर्मपृष्ठ-संस्थान में माली लोग निवास करें ॥ १२ ॥

**सौचिकवाजिपोषकतक्षकवन्दिमागधवेण्वादिवादकानां तत्संस्थानानि**

**सदंशे सौचिका वाजिपोषका व्यजनोपमे।**
**तक्षणाश्च शरावाभेस्वस्तिके वन्दिमागधाः ॥ १३ ॥**
**पणवाभे मृदङ्गाभे वेणुतूर्यादिवादकाः।**

**दर्जी, सईस, बढ़ई, बन्दीजन एवं मागध-जन के संस्थान**—(१८-२३) सदंश में दर्जी और व्यजनोपम-संस्थान में साईस (वाजिपोषक) लोग, शरावाकृति में बढ़ई बसें और स्वस्तिकाकृति में बन्दीजन (प्रातः स्तुतिवाचक) और मागध लोगों का निवास विहित है। पणवसदृश एवं मृदङ्गसदृश संस्थान में वेणुवादकों तथा तूर्य आदि बाजा बजाने वालों का भवन होता है ॥ १३-१४ ॥

**रथिनां नीचानां श्वपाकानां धान्यजीविनां श्रमणानां हस्त्यारोहिणां च तत्संस्थानानि**

**विशर्करे तु रथिनः कबन्धप्रतिमे पुनः ॥ १४ ॥**
**नीचाः श्वपाकाश्च यवप्रतिमे धान्यजीविनः।**
**उत्सङ्गे श्रमणाहस्त्यारोहिणो (रा?ग)जदन्तके॥ १५ ॥**

**सारथीजन, चाण्डाल (= श्वपाक), खेतिहर, श्रमण (बौद्ध या जैन) एवं पीलवानों के संस्थान**—(२४-२८) विशर्कर में रथ को हाँकने वालों और कबन्धप्रतिम संस्थान में नीचों और चाण्डालों, यव-प्रतिम-संस्थान में खेतिहरों, उत्संग में श्रमण लोगों तथा गजदन्तक में पीलवानों (हाथी के वाहकों) के निवास विकल्प विहित हैं ॥ १४-१५ ॥

**बन्धनागारिणां सुराकाराणां कर्मकारिणां नापितानां कोशरक्षिणां वह्निजीविमानोपजीविनोश्च तत्संस्थानानि**

**परशुप्रतिमे क्षेत्रे बन्धनागारिणो जनाः ।**
**विस्राविणि सुराकाराःश्वभ्राभे कर्मकारिणः॥ १६ ॥**
**युगले नापिताः स्वाविहाव्ये(?)कोशरक्षिणः ।**
**त्रिकुष्टे पञ्चकुष्टे च वसेयुर्वह्निजीविनः ॥ १७ ॥**

**बन्धनागारिक, सुराकार, कर्मकार, नाई, कोषरक्षक एवं लोहार तथा मानोपजीवियों के संस्थान**—(२९-३४) परशु के समान आकृति वाले क्षेत्र में बन्धनागारिक लोग, विश्रावित में शराब बनाने वाले, श्वभ्राभ्र में मजदूर, प्रलम्ब (= युगल) में नाई लोग और वैवाहिक में खजाने की रक्षा करने वाले, त्रिकुष्ट और पञ्चकुष्ट में वह्निजीवी लोग रहें ॥ १६-१७ ॥

चैत्यवृक्षवाटयज्ञवाटादीनां क्षेत्रसंस्थानानि

**समन्ततः परिच्छन्ने सर्वे मनोपजीविनः ।**
**दिक्स्वस्तिके तु चैत्यानि कुर्याद् वासांश्च सर्वशः ॥ १८ ॥**

**चैत्य संस्थान**—(३५-३६) सब मानोपजीवी लोग सब तरफ से घेरे हुए (परिच्छिन्न) संस्थान में बसें और दिक्स्वस्तिक में सब तरफ चैत्य (= डीह, ग्रामदेवता) और घरों का निर्माण करें ॥ १८ ॥

**श्रीवृक्षप्रतिमे वृक्षान् यज्ञवाटांश्च कारयेत् ।**
**वर्धमानाकृतिमुखेऽप्येतानेव प्रकल्पयेत् ॥ १९ ॥**

**वृक्षवाटों एवं यज्ञवाटों का संस्थान**—(३७-३८) श्री-वृक्ष (= बेल) प्रतिम-संस्थान में यज्ञवाटों तथा वृक्षों को लगावें तथा वर्धमानाकृति संस्थान में भी इन्हीं का प्रकल्पन करें ॥ १९ ॥

**एणीपदे तु गणिकाश्चौरान् नरपदोपमे ।**
**इत्युक्ताः शुभदा वासाः सर्वकर्मोपजीविनाम् ॥ २० ॥**

**वेश्याओं एवं चोरों का संस्थान**—(३९-४०) **एणीपद** में गणिकाएँ तथा **नरपद** में चोर निवास करें। इस तरह से सब प्रकार के कर्म की जीविकावृत्ति वाले अर्थात् हर प्रकार के लोगों के शुभकारी निवासों का वर्णन किया गया ॥ २० ॥

**कर्मोपजीविजनवासनिमित्तमेताः**
**क्षेत्राकृतीरभिहिताः प्रविमृश्य तेषाम् ।**

**वेश्मानि कारयति यः स्थपतिर्यथाव-**
**न्मान्यः स कस्य न भवेदिह भूमिपृष्ठे ॥ २१ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे वास्तुसंस्थानमातृकानामनमाष्टात्रिंशोऽध्यायः ॥ ३८ ॥**



इस प्रकार विभिन्न कर्म के उपजीवियों के निवास के निमित्त इन क्षेत्रों का यहाँ विचारपूर्वक वर्णन किया गया । यथा प्रतिपादित उनके वेश्मों अर्थात् निवास स्थानों का जो बुद्धिमान् स्थपति निर्माण करता है, वह स्थपति इस संसार में किसका सम्माननीय नहीं होता? ॥ २१ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'वास्तुसंस्थानमातृका' नामक अड़तीसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ३८ ॥**

# अथैकोनचत्वारिंशोऽध्यायः

## * द्वारगुणदोषः[1] *

## (Merits and Demerits of Doors)

**गृहाण्युक्तानि सर्वेषामेवं कर्मोपजीविनाम् ।**
**वर्णिनां च गृहस्थानां कथ्यन्तेऽतः परं यथा ॥ १ ॥**

इस प्रकार समस्त कर्मोपजीवियों के निवास के लिए उनके उपयुक्त गृहों का वर्णन करने के बाद अब विशेष रूप से ब्राह्मण, क्षत्रिय एवं वैश्य तथा शूद्र जाति के गृहस्थों के घरों के वास्तु का वर्णन करते हैं ॥ १ ॥

विप्रादिविषये गृहाणां द्वाराणां च स्थानानि तेषु
वास्तुद्वारगृहद्वाराणां निवेशननियमाः

**भल्लाटे धनदे यद्वा चरके पृथिवीधरे ।**
**ब्राह्मणस्य भवेद् वेश्म माहेन्द्रद्वारमुत्तमम् ॥ २ ॥**

**१. ब्राह्मण के लिए उत्तम गृहद्वार**—भल्लाट, धनद, चरक अथवा पृथिवीधर—इन पदों पर माहेन्द्र-द्वार युक्त उत्तम भवन ब्राह्मण के लिये बनाना चाहिये ॥ २ ॥

**माहेन्द्रेऽर्केऽथ सत्ये वा आर्यके वा निकेतनम् ।**
**कार्यं गृहक्षतद्वारं क्षत्रियस्य शुभावहम् ॥ ३ ॥**

**२. क्षत्रिय के लिए उत्तम गृहद्वार**—माहेन्द्र, अर्क (सूर्य) अथवा सत्य या आर्यक—इन पदों पर गृहक्षत-द्वार युक्त शुभ निकेतन क्षत्रिय के लिये बनाना चाहिये ॥ ३ ॥

**याम्ये वैवस्वते वापि गान्धर्वेऽथ गृहक्षते ।**
**वैश्यस्य भवनं कार्यं द्वारं पुष्पाह्वये शुभम् ॥ ४ ॥**

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह पैतीसवाँ अध्याय है ।

**३. वैश्य के लिए उत्तम गृहद्वार**—याम्य, वैवस्वत अथवा गान्धर्व या गृहक्षत—इन पदों पर पुष्प-द्वार युक्त शुभ भवन वैश्य के लिये बनाना चाहिये ॥ ४॥

**वारुणे पौष्पदन्ते वा यद्वा मैत्रेऽथवासुरे ।**
**शूद्रस्य सदनं कार्यं भल्लाटद्वारमुत्तमम् ॥ ५ ॥**

**४. शूद्रों के लिए उत्तम गृहद्वार**—वारुण, पौष्पदन्त अथवा मैत्र अथवा असुर पदों पर भल्लाट-द्वार युक्त उत्तम सदन शूद्र के लिये बनाना चाहिये ॥ ५ ॥

**विप्राणां प्राङ्मुखं वास्तु गृहं स्याद् दक्षिणामुखम् ।**
**वर्धते धनधान्येन पुत्रपौत्रैश्च नित्यशः ॥ ६ ॥**

**चारों वर्णों के वास्तु का फल**—ब्राह्मणों का वास्तु प्राङ्मुख और घर दक्षिणाभिमुख होना चाहिए तो धन और धान्य से तथा पुत्र और पौत्रों से उनकी अभिवृद्धि होती है ॥ ६ ॥

**दक्षिणाभिमुखं वास्तु भवनं पश्चिमामुखम् ।**
**क्षत्रियस्य धनं धान्यं विक्रमश्चेह वर्धते ॥ ७ ॥**

क्षत्रियों का वास्तु दक्षिणाभिमुख तथा भवन पश्चिमाभिमुख यदि हो तो उनका धन, धान्य और पराक्रम बढ़ता है ॥ ७ ॥

**वास्तुनः पश्चिमं द्वारं भवनस्योत्तरामुखम् ।**
**तत्रैधते धनैर्धान्यैः पुत्रपश्वादिभिश्च विट् ॥ ८ ॥**

वैश्यों के वास्तु का द्वार पश्चिम में होना चाहिए और उनके भवन का द्वार यदि उत्तर में हो तो वहाँ पर निवास करने वाले वैश्य धन, धान्य तथा पुत्र और पशुओं आदि से अभिवृद्धि को प्राप्त होते हैं ॥ ८ ॥

**वास्तु स्यादुत्तरद्वारं गृहं पूर्वामुखं तथा ।**
**शूद्रस्य कर्मवृत्तिस्तु धनधान्यैर्विवर्धते ॥ ९ ॥**

यदि वास्तु उत्तर-द्वार वाला हो और गृह पूर्वाभिमुख हो तो शूद्र के लिये उसकी कर्मवृत्ति धन-धान्य के साथ बढ़ती है ॥ ९ ॥

### उत्सङ्गादयश्चत्वारो निवेशाः

**एकस्यामपि शालायां चत्वारः सम्प्रकीर्तिताः ।**
**निवेश्यद्वारभागाश्च कथ्यन्ते च शुभाशुभाः ॥ १० ॥**
**उत्सङ्गो हीनबाहुश्च पूर्णबाहुस्तथापरः ।**
**प्रत्यक्षायश्चतुर्थश्च निवेशः परिकीर्तितः ॥ ११ ॥**

**उत्सङ्गादि चार निवेश्य वास्तु**—एक ही शाला में वास्तुविदों के द्वारा शुभ तथा अशुभ चार निवेश्य द्वार और उनके विभाग बताये गये हैं । वे हैं—उत्सङ्ग, हीनबाहु, पूर्णबाहु और प्रत्यक्षाय ॥ १०-११ ॥

**तत्रोत्सङ्गलक्षणम्**

**उत्सङ्ग एकदिक्काभ्यां द्वाराभ्यां वास्तुवेश्मनोः ।**
**स सौभाग्यप्रजावृद्धिधनधान्यजयप्रदः ॥ १२ ॥**

**१. उत्सङ्ग का लक्षण एवं फल**—उत्सङ्ग नामक द्वार निवेश वह कहलाता है जहाँ पर एक ही दिशा वाले वास्तु और भवन के दरवाजे हों । यह उत्सङ्ग नामक द्वार वाला घर सौभाग्य एवं सन्तान की अभिवृद्धि करने वाला कहा गया है तथा धन, धान्य और व्यापार आदि में जय प्रदान करने वाला होता है ॥ १२ ॥

**हीनबाहुकादीनां लक्षणम्**

**यत्र प्रवेशतो वास्तु (?) गृहं भवति वामतः ।**
**तद्धीनबाहुकं वास्तु निन्दितं वास्तुचिन्तकैः ॥ १३ ॥**
**तस्मिन् वसन्नल्पवित्तः स्वल्पमित्रोऽल्पबान्धवः ।**
**स्त्रीजितश्च भवेन्नित्यं विविधव्याधिपीडितः ॥ १४ ॥**

**२. हीनबाहुक का लक्षण एवं फल**—जिस घर में प्रवेश करने पर वास्तु का मुख बायें होता है, उस वास्तु को हीन-बाहुक नाम से अभिहित किया गया है जिसे वास्तु-विद्या- विशारदों ने निन्दित कहा है । उसमें रहने वाला गृहस्वामी अल्प वित्त (थोड़े धन वाला), स्वल्प मित्र और अल्प बान्धव तथा स्त्री जित (स्त्री के द्वारा जीता गया) कहा गया है । वह वहाँ रहकर नित्य विविध व्याधियों से पीड़ित रहता है ॥ १३-१४ ॥

**वास्तुप्रवेशतो यत्तु गृहं दक्षिणतो भवेत् ।**
**प्रदक्षिणप्रवेशत्वात् तद् विद्यात् पूर्णबाहुकम् ॥ १५ ॥**
**तत्र पुत्रांश्च पौत्रांश्च धनधान्यसुखानि च ।**
**प्राप्नुवन्ति नरा नित्यं वसन्तो वास्तुनि ध्रुवम् ॥ १६ ॥**

**३. पूर्णबाहुक का लक्षण एवं फल**—वास्तु में प्रवेश करने पर यदि घर दायें होता है तो उसका प्रदक्षिण प्रवेश होने के कारण उसे पूर्ण बाहुक कोटि का जानना चाहिये। उस वास्तु में रहने वाले गृहस्वामी पुत्र, पौत्र, धन, धान्य और सुख को अवश्य प्राप्त करते हैं॥ १५-१६ ॥

**गृहपृष्ठं समाश्रित्य वास्तुद्वारं यदा भवेत् ।**
**प्रत्यक्षायस्त्वसौ निन्द्यो वामावर्तप्रवेशवत् ॥ १७ ॥**

**४. प्रत्यक्षाय का लक्षण एवं फल**—घर के पीछे के भाग का आश्रय लेकर यदि वास्तु द्वार होता है तो बायें भाग से इसका प्रवेश होने के कारण यह प्रत्यक्षाय नामक भवन अत्यन्त निन्दित वास्तु कहा गया है ॥ १७ ॥

**ब्राह्मणाद्यावासस्थानकल्पनेषु विशेषविधिः**

**ब्राह्मणो निवसेन्मुख्ये द्विनाम्नि क्षत्रियो वसेत् ।**
**वितथे निवसेद् वैश्यःशूद्रः सुग्रीवनामनि ॥ १८ ॥**

ब्राह्मण (नगर के चतुःषष्टि पद के) मुख्य नामक पद वास्तु (= पुरुष की वाम भुजा) में निवास करे और द्वि नामक वास्तु (= पुरुष की दक्षिण भुजा) में क्षत्रिय निवास करें । वितथ (= दक्षिण कुक्षि) में वैश्य और सुग्रीव (= जंघा) में शूद्र जाति के लोग निवास करे ॥ १८ ॥

**एते वैशेषिकाः सर्वे वर्णानामनुपूर्वशः ।**
**वास्तुद्वारनिवेशाश्च वासैः सह निरूपिताः ॥ १९ ॥**

ये सब वर्णों के अनुरूप क्रमशः विशेष भेद हैं । इस प्रकार वास्तुद्वारों एवं ब्राह्मणादि वर्णों के अनुरूप भवनों का वर्णन किया गया ॥ १९ ॥

**वर्णानामुत्तमा भूमिकासंख्या**

**अथोत्तरमथोच्यन्ते वर्णानां गृहकल्पनाः ।**
**शूद्रविट्क्षत्रविप्राणां राज्ञां च जयकाङ्क्षिणाम् ॥ २० ॥**

**वर्णों की उत्तम भवन भूमि कल्पना**—अब इसके बाद शूद्र, वैश्य, क्षत्रिय एवं विप्र वर्णों तथा विजयाभिलाषी राजाओं के भवनों की भूमि कल्पना का वर्णन किया जाता है ॥२०॥

**सार्धत्रिभूमि शूद्राणां वेश्म कुर्याद् विभूतये ।**
**अतोऽधिकतरं यत् स्यात् तत् करोति कुलक्षयम् ॥ २१ ॥**

शूद्रों का साढ़े तीन भूमि वाला भवन कल्याणकारक होता है । इससे बढ़कर यदि होता है तो वह कुल का क्षय करने वाला कहा गया है ॥ २१ ॥

**वैश्यस्य वर्धयेद् गेहमर्धपञ्चमभूमिकम् ।**
**अतिप्रमाणे तत्रास्य धनबन्धुपरिक्षयः ॥ २२ ॥**

वैश्यों का साढ़े पाँच भूमि वाला भवन वृद्धि करने वाला होता है और इस प्रमाण का अतिक्रमण कर (अधिक माप का) घर बनवाने पर उसमें रहने वाले गृहस्वामी के धन और बन्धु का वह नाशक कहा गया है ॥ २२ ॥

**क्षत्रियस्य गृहं कुर्यादर्धषष्ठतलं परम् ।**
**सम्पद्बलसमृद्ध्यै तदतिरिक्तं तु तच्छिदे ॥ २३ ॥**

क्षत्रियों का साढ़े छह तल वाला श्रेष्ठ घर सम्पत्ति, बल और समृद्धि को प्रदान करने वाला होता है और इस प्रमाण के अतिरिक्त बनाया गया भवन उस गृहस्वामी की सम्पत्ति और बल का नाश करता है । २३ ॥

**परं विप्रस्य भवनमर्धसप्तमभूमिकम् ।**
**स्वाध्यायाचारभोगार्थमत्युच्चं तु भयावहम् ॥ २४ ॥**

विप्र (ब्राह्मण) का साढ़े सात खण्ड वाला श्रेष्ठ भवन कहा गया है । वह भवन स्वाध्याय, आचार और समस्त भाग के लिये अच्छा माना गया है किन्तु अधिक ऊँचा घर भयावह माना गया है ॥ २४ ॥

**यजन्ते राजसूयाद्यैः क्रतुभिर्येऽवनीश्वराः ।**
**तलैरर्धाष्टमैस्तेषां कारयेद् भवनोत्तमम् ॥ २५ ॥**

राजसूय आदि यज्ञों से जो राजा यज्ञ करते हैं अर्थात् राजसूय आदि यज्ञ करने वाले राजाओं के उत्तम भवन साढ़े आठ तलों के बनवाये जाने चाहिये ॥ २५ ॥

**आहर्तनिकेयज्ञानां राजा राजधिपश्च यः ।**
**तस्याप्यर्धाष्टमतलं भवनं सन्निवेशयेत् ॥ २६ ॥**

जो राजा अथवा राज्य का अधिपति अनेक यज्ञों का करने वाला होता है उसका भवन भी साढ़े आठ खण्ड का ही उत्तम वास्तु वाला बनवाना चाहिये ॥ २६ ॥

**वाजपेयेन वा यष्टा यो द्विजः स्यात् समाहितः ।**
**गवां कोटिप्रदो यो वा सोऽपि तस्मिन् भवे(द्यु?द)भीः॥ २७ ॥**

जो द्विज (ब्राह्मण, क्षत्रिय और वैश्य) समाहित चित्त होकर वाजपेय यज्ञ को करने वाला है अथवा जो द्विज एक कोटि गौवों का दान करने वाला होता है वह भी उस साढ़े आठ तल वाले भवन में निर्भय होकर निवास करे ॥ २७ ॥

**यथाप्रमाणनिर्दिष्टे वसन्तस्ते नृपादयः ।**
**प्राप्नुवन्ति परामृद्धिमवृद्धिं तु विपर्यये ॥ २८ ॥**

इस प्रकार से घर बनाने का जैसा प्रमाण ऊपर बताया गया है उसी

प्रमाणानुकूल भवनों में राजा आदि गृहस्थजन अभिवृद्धि को प्राप्त होते हैं । इसके प्रतिकूल प्रमाण वाले घर में वे अवृद्धि के भागी बनते हैं ॥ २८ ॥

**तेषां गृहोर्ध्वप्रमाणम्**

**सपीठतलकं वेश्म मानतः सम्प्रकीर्तितम् ।**
**साधारणेन हस्तेन परं शूद्रस्य विंशतिः ॥ २९ ॥**
**चत्वारिंशद् विशः षष्टिः क्षत्रियस्य प्रशस्यते ।**
**अशीतिर्द्विजमुख्यस्य शतं हस्ता महीपतेः ॥ ३० ॥**
**नातः परं नृणामूर्ध्वप्रमाणं शस्तमुच्यते ।**

**वर्णों के क्रम से भवनों की ऊँचाई की माप**—इस प्रकार पीठ (= कुर्सी) और तल सहित घर का साधारण मान सम्प्रकीर्तित किया गया है । अब इन भवनों की ऊँचाई के प्रमाण के सम्बन्ध में कहते हैं । साधारण हस्त के प्रमाण से शूद्र का भवन २० हाथ ऊँचा बनवाना विहित है । वैश्य के भवन की ऊँचाई ४० हाथ, क्षत्रिय के भवन की ऊँचाई ६० हाथ ब्राह्मण के भवन की ऊँचाई ८० हाथ और राजा के भवन की ऊँचाई १०० हाथ के प्रमाण की प्रशस्त मानी गयी है । छत का इससे अधिक ऊँचा प्रमाण मनुष्यों के लिए प्रशस्त नहीं कहा गया है ॥ २९-३१ ॥

**वर्णों के क्रम से भवनों की ऊँचाई**





एकशाल भवन



द्विशाल भवन



त्रिशाल भवन



चतुःशाल भवन

### देवादिविषये विशेषविधिः

देवदानवदैत्यानां पिशाचोरगराक्षसाम् ॥ ३१ ॥
सिद्धगन्धर्वयक्षाणां विधातव्यमतोऽधिकम् ।

**देवादि के आयतन**—देवों, दानवों, दैत्यों, पिशाचों, नागों, राक्षसों, सिद्धों, गन्धर्वों और यक्षों के भवन इस प्रमाण से अधिक प्रमाण वाले बनाने चाहिए ॥ ३१-३२ ॥

### तत्तद्वर्णानामवरा भूमिकासंख्या

एकभौमादधो नैव गृहं शूद्रस्य विद्यते ॥ ३२ ॥
वैश्यस्य भवनं कार्यमधो ना(न्य?ध्य)र्धभूमिकात् ।
द्विभूमिकादधः कार्यं क्षत्रियस्य न मन्दिरम् ॥ ३३ ॥
सार्धद्विभौमाद् विप्रस्य त्रितलादपि भूपतेः ॥ ३४ ॥

**वर्णानुसार भवन की मञ्जिलें**—शूद्र का मकान एक खण्ड से कम नहीं होना चाहिए और दो खण्ड से कम क्षत्रिय का घर नहीं होना चाहिए । ढाई खण्ड से कम विप्र का मकान और तीन खण्ड से कम राजा का भवन नहीं होना चाहिए ॥ ३२-३४ ॥

हीनं प्रमाणादमुतो गृहं यत्
कुशिल्पिना स्याद् विहितं कथञ्चित् ।
भर्तुर्भिये सिद्धिविनाशनं तत्
प्रशस्तशीलादिविपर्ययाय ॥ ३५ ॥

इस प्रकार प्रतिपादित नियमों से हीन प्रमाण से यदि किसी अनभिज्ञ स्थपति (प्रधान कारीगर) के द्वारा यथाकथंचित भवन बन भी जाता है तो वह घर गृहस्वामी के लिए भयावह एवं सिद्धि में विनाशकारी तथा उत्तमशील आदि गुणों के उल्टा फल देने वाला होता है ॥ ३५ ॥

### उत्कृष्टस्य वास्तुद्वारस्य गुणाः

गुणदोषान् प्रवक्ष्यामि द्वारणां सर्ववास्तुषु ।
सुस्थितं चतुरस्त्रं च कान्तं स्वद्रव्ययोजितम् ॥ ३६ ॥
ऋजु स्वकीयदिग्भागे न ह्रस्वं न तथोच्चकैः ।
नाल्पं न कुब्जं नाप्यनि(?) पिण्डितं न बहिर्गतम्॥ ३७ ॥
नाध्मातं न कृशं मध्ये गतं नान्तरकुक्षिषु ।

**न विद्रुतं न संक्षिप्तं यत् तत् स्याद् द्वारमृद्धिदम् ॥ ३८ ॥**

**उत्कृष्ट वास्तुद्वार के गुण**—सब प्रकार के वास्तुओं में द्वारों के गुणों एवं दोषों का अब वर्णन करते हैं । वह द्वार ऋद्धिदायक कहलाता है जो सुस्थित, चौकोन, सुन्दर, अपने (विहित) द्रव्य से योजित, ऋजु (= सीधा) अपने दिग्भाग में न छोटा, न ऊँचा, न कम, न टेढ़ा और न पिण्डित और न बहिर्गत, न आध्मात (फुलाव वाला) और न कृश, न मध्य भाग में और न अन्तर कुक्षियों में गत (घुसा हुआ) और न वह विस्तृत हो एवं न ही संक्षिप्त हो ॥ ३४-३७ ॥

**पदस्य द्वादशे भागे पदमध्यात् प्रदक्षिणम् ।**
**स्थापितं वृद्धिमायाति द्वारं पुष्टिं करोति च ॥ ३९ ॥**

पद के मध्य भाग में प्रदक्षिण क्रम से रचित और पद के बारहवें भाग में संस्थापित द्वार वृद्धि को प्राप्त होता है और पुष्टि प्रदान करता है ॥ ३८ ॥

**रथ्याचत्वरशृङ्गाटवापीकूपाह (?)कुम्भकैः ।**
**कुड्यकोणतरुस्तम्भैर्भवनस्यन्दनादिभिः ॥ ४० ॥**

**द्वार वेध**—गली, चबूतरे, शृङ्गाट, वापी, कूप, कुम्भकों, कोणों, वृक्षों एवं भवन तथा स्यन्दन (रथ) आदिकों से जो दरवाजा वेध को प्राप्त होता है वह शुभ नहीं होता ॥ ४० ॥

### द्वारकल्पनसम्बद्धा नियमाः

**यद् विद्धं भवनद्वारं तच्छुभाय न जायते ।**
**द्वारं द्वारे प्रविष्टं च कर्तव्यं वितनेतन? ॥ ४१ ॥**
**पेद्यां प्रवेशयेन्नैकामन्यद्वारे कदाचन ।**

**द्वार निर्माण के नियम**—भवन के एक द्वार के भीतर दूसरे द्वार का प्रवेश नहीं होना चाहिए । दूसरे दरवाजे पर एक पेद्या (= बगली दरवाजा) का प्रवेश भी कभी न करे ॥ ४१-४२ ॥

**द्वारं प्रवेशयेत् पेद्यां नारोहणगवाक्षयोः ॥ ४२ ॥**
**पक्षद्वारस्य वा नैकां कथञ्चिदपि बुद्धिमान् ।**
**न बाह्यगान्तरे द्वारे प्रविष्टं कारयेत् क्वचित् ॥ ४३ ॥**
**विहितं हि तथा तत् स्यात् बहुदोषकरं सदा ।**

सीढ़ी और खिड़की इन दोनों की पेद्या में द्वार का प्रवेश न करे । बुद्धिमान स्थपति पक्ष द्वार की एक पेद्या में तथा दरवाजे के भीतर या बाहर कहीं पर

किसी प्रकार भी प्रवेश न करावे। यदि ऐसा किया जाता है तो अत्यन्त दोषावह होता है ॥ ४२-४४ ॥

**तोरणं गोपुरद्वारमट्टो येषां गृहे भवेत् ॥ ४४ ॥**
**गृहाणां मौलिकद्वारं श्रोत्रे चैतान् प्रवेशयेत् ।**

लोगों के घर में तोरण, गोपुर द्वार और अट्ट अटारी होना चाहिए और उन घरों में मौलिक द्वार तथा इन सभी को श्रोत्र में अर्थात् एक किनारे से प्रवेश करावे ॥ ४४-४५ ॥

**द्वारं द्वारस्य कर्तव्यमुपर्युपरि भूमिषु ॥ ४५ ॥**
**प्रदक्षिणेन वा कार्यं कार्य नापरथा पुनः ।**

ऊपर-ऊपर खण्डों में द्वार के ऊपर द्वार बनाना चाहिए। अन्य विधि से निर्मित नहीं करना चाहिए। अथवा प्रदक्षिण क्रम से ही द्वार बनाना चाहिए। इसके अतिरिक्त पुनः और किसी अन्य प्रकार से द्वार बनाना विहित नहीं है ॥ ४४-४५ ॥

**विमर्श**—गृह में द्वार इस प्रकार का होना चाहिए कि जब उसमें प्रवेश करें तो अपने से दाहिने होकर प्रवेश करें। यदि बाएँ होकर प्रवेश करते हैं तो यह अशुभ होता है ॥ ४५ ॥

**उपर्युपरिभूमीनां मुखं कुर्यात् प्रदक्षिणम् ॥ ४६ ॥**
**नापसव्येन कुर्वीत द्वारमारोहणानि च ।**

खण्डों के ऊपर-ऊपर उनका मुख भी दाहिने (clockwise) करना चाहिए अर्थात् अपने बायें से द्वार और सीढ़ियाँ नहीं बनानी चाहिए ॥ ४६-४७ ॥

**यस्यां भित्तौ कृतं पूर्वं तस्यामुपरि कारयेत् ॥ ४७ ॥**
**तथान्यभित्तौ तद्द्वारं विधातव्यं प्रदक्षिणम् ।**

जिस दीवाल पर पहले दरवाजा बनाया गया हो उसी दीवाल पर ऊपर वाले तल में द्वार बनाना चाहिए तथा दूसरी दीवाल पर वह दरवाजा दायीं ओर से (प्रदक्षिण क्रम से) बनाना चाहिए ॥ ४७-४८ ॥

**न मध्ये सद्मनो द्वारं कुर्यादिव पदस्य च ॥ ४८ ॥**
**न स्थूले (?) न पदे नापि सिरापाते तदिष्यते ।**

घर के (बीचोबीच) मध्य भाग में और पद के मध्य भाग में भी द्वार नहीं बनाना चाहिए। न स्थूल में, न पद में, न सिरापात (मर्म या नाडी) में प्रवेश द्वार इष्ट है ॥ ४८ ॥

**निरंशावस्थितैर्द्रव्यैस्तिर्यक् (का?क्रा)न्तैश्च मन्दिरे ॥ ४९ ॥**
**मर्मवेधो न दोषाय द्वारवेधोऽथवा क्वचित् ।**

बिना अंश स्थित, कुछ टेढ़े और क्रान्त (मिश्रित) द्रव्यों से बने प्रवेश द्वार में मर्मवेध दोषावह नहीं होता और कहीं पर ऐसी अवस्था में द्वारवेध दोषावह माना जाता है ॥ ४९ ॥

**यवनाट्टालकच्छाया पुरदैवकुलस्य च ॥ ५० ॥**
**न प्रवेश्या गृहद्वारे रश्मयः सोमसूर्ययोः ।**

यवन की अटारी की छाया और पुर के देवकुल मन्दिर की छाया, सोम और सूर्य की रश्मियाँ गृहद्वार पर प्रवेश नहीं करनी चाहिए अर्थात् उसे ऊपर से आच्छादित न कर दे ॥ ५०-५१ ॥

**न प्राकारेण कुड्येन न विटङ्केन वा पुनः ॥ ५१ ॥**
**अन्तर्हितानि दुष्यन्ति द्वारमर्माणि कुत्रचित् ।**

प्राकार (चहारदिवारी) से और कुड्य फिर विटङ्क (पक्षियों के बैठने का छत्ता) से द्वार मर्मों को अन्तर्हित नहीं करना चाहिए क्योंकि ऐसा करने से कहीं-कहीं (रोगादि भय) दोष उत्पन्न हो जाता है ॥ ५१-५२ ॥

**रथ्यादिभिर्द्वारवेधे फलम्**

**अत्युच्चे स्याद् भयं राज्ञो निम्ने तस्करतो भयम्॥ ५२ ॥**
**कुलपीडा भवेत् कुब्जे बहिर्याते पराभवः ।**

**रथ्यादि से द्वार दोष एवं वेधादि दोष**—द्वार के बहुत उच्च होने पर राजा से भय उत्पन्न होता है और नीचा होने पर चोर से भय होता है तथा टेढ़े होने पर कुल को (घुसने में) पीड़ा होती है । फिर द्वार के बाहर निकल जाने पर शत्रु से पराभव प्राप्त होता है ॥ ५२-५३ ॥

**आध्मातेऽत्यन्तदारिद्र्यं कृशमध्ये क्षयो नृणाम् ॥ ५३ ॥**
**रथ्याविद्धे भवेद् रोगो मरणं चत्वरेण च ।**

आध्मात होने पर अत्यन्त दारिद्र्य और मध्य भाग में कृश होने पर रोग उत्पन्न होते है । गृह द्वार में रथ्या (गली) से वेध होने पर रोग, चबूतरे से वेध (रुकावट) होने पर मरण होता है ॥ ५३-५४ ॥

**शृङ्गाटकेन वैधव्यं दुहितॄणां प्रजायते ॥ ५४ ॥**
**वाप्या कूपेन वा विद्धे स्यादतीसारतो भयम् ।**

शृङ्गाटक से विद्ध होने पर पुत्रियों को वैधव्य प्राप्त होता है। वापी अथवा कूप से विद्ध होने पर अतिसार (पेट झरना) रोग से भय होता है ॥ ५४-५५ ॥

**कोणान्मृत्युभयं विद्याद् वृक्षे रोगभयं भवेत् ॥ ५५ ॥**
**स्तम्भेन म्रियते स्वामी भ्रमेणार्थो न तिष्ठति ।**

कोने से विद्ध होने पर मृत्यु भय उपस्थित होता है। वृक्षों से वेध होने पर रोग भय होता है। खम्भे से वेध होने पर स्वामी का मरण और भ्रम से विद्ध होने पर धन हानि उपस्थित होती है ॥ ५५-५६ ॥

**प्रणालेन महद् दुःखं महाभीतिर्महाकलिः ॥ ५६ ॥**
**तस्मात् सर्वप्रयत्नेन द्वारवेधं विवर्जयेत् ।**

पनाले (नालियों) से विद्ध होने पर बड़ा दुःख, भयानक भय, और महान् कलिदोष—ये सब वेध दोष उपस्थित होते हैं। इसलिए सभी प्रकार के प्रयत्न करके द्वार वेध नहीं होने देना चाहिए ॥ ५६-५७ ॥

### भिन्नदेहाख्यस्य वास्तुनो लक्षणं पूर्वादिद्वाराणाम्

**यस्याग्रतः पृष्ठतश्च द्वारे भित्योर्द्वयोरपि ॥ ५७ ॥**
**अन्योऽन्यं भिद्यते यस्मिन्नैकगत्याश्रिते उभे ।**
**वास्तु तद् भिन्नदेहाख्यं भिन्नस्वामिविधायकम् ॥ ५८ ॥**
**न तत्र जायते वृद्धिः स्थापितस्य न कस्यचित् ।**

**'भिन्नदेह' वास्तु का लक्षण**—जिस घर के आगे और पीछे से दोनों दीवालों के दरवाजे दोनों आपस में विद्ध होते हैं उस वास्तु को 'भिन्न देह' के नाम से अभिहित किया जाता है और वह गृहस्वामी के लिए अशुभ करने वाला होता है। वहाँ पर स्थापित किसी भी (कमरे या दरवाजे) वस्तु की वृद्धि नहीं होती ॥५७-५९॥

### निवेशनस्थानानि द्वारेष्वविहितस्थाने निवेशितेषु फलम्

**गृहकुक्षौ कृतं द्वारं सर्वरोगभयङ्करम् ॥ ५९ ॥**

**विहित एवं अविहित द्वारों के फल**—गृह की कुक्षि (= कोने) में निर्मित द्वार सर्वरोग उत्पन्न करने से भयङ्कर कहा गया है ॥ ५९ ॥

**पूर्वद्वारं तु माहेन्द्रं प्रशस्तं सर्वकामदम् ।**
**गृहक्षतं तु विहितं दक्षिणेन शुभावहम् ॥ ६० ॥**
**गन्धर्वमथवा तत्र कर्तव्यं श्रेयसे (त?स)दा।**
**पश्चिमेन प्रशस्तं स्यात् पुष्पदन्तं जयावहम् ॥ ६१ ॥**

**भल्लाटमुत्तरे द्वारं प्रशस्तं स्याद् गृहेशितुः ।**

(१) वास्तुपद पर प्रतिष्ठित माहेन्द्र संज्ञक द्वार, सब मनोरथों को देने वाला होता है, पूर्वाभिमुख द्वार प्रशस्त कहा गया है । (२) दक्षिण द्वार 'गृहक्षत' (पद पर प्रतिष्ठित) शुभ कहा गया है । (३) गन्धर्व नामक द्वार दक्षिण में कल्याण के लिए सदा बनाना चाहिए । (४) पुष्पदन्त नामक जयावह द्वार पश्चिम में प्रशस्त कहा गया है और (५) उत्तराभिमुख भल्लाट नामक द्वार प्रशस्त कहा गया है ॥ ५९-६२ ॥

**एकाशीतिपदे तस्मिंश्चतुरस्रपदेऽपि वा ॥ ६२ ॥**
**द्वारोऽप्य(प) दगास्तासां ब्रूमो वह्न्यादितः फलम् ।**
**हुताशभीतिः स्त्रीजन्म भूत्यर्थः प्रियता नृपे ॥ ६३ ॥**
**क्रोधे चानृतता(?)पुंसः क्रौर्यं स्यात् पूर्ववत् क्रमात् ।**

एकाशीति पद वाले उस चौकोर वास्तु में जो (विहित पद पर न होकर) अपदक द्वार होते हैं उनके अग्निकोण से लेकर अन्त तक सभी फलों का अब वर्णन करते हैं—यदि पूर्व से विपरीत दिशा में द्वार हो तथा दक्षिण से विपरीत दिशा में द्वार सन्निवेश बना हो तो सुत और पराक्रम का नाश करता है । आनुकूल्य में सुत की प्राप्ति एवं प्रेष्य आदि लाभ, अग्निभय, स्त्रीजय, ऐश्वर्य, राजा से प्रियता, क्रोध में असत्यता और मनुष्य की क्रूरता क्रमशः पूर्ववत् कही गई है ॥ ६२-६४ ॥

**सुता(पि?प्ति) प्रैष्यनीचत्वे भक्षयानसुतर्द्धिकृत् ।**

इसी प्रकार पुत्र की प्राप्ति एवं नौकरों की नीचता भी प्राप्त होती है । अतः गृह का वास्तु भोजन, वाहन व पुत्र आदि की प्राप्ति कराने वाला होना चाहिए ॥ ६४ ॥

**रौद्रं कृतघ्नमवसं याम्यतः सुतवीर्यहृत्(?) ॥ ६४ ॥**
**सुतोपपीडा रिपुवृद्धिरर्थ-**
**सुतानवाप्तिस्तनयार्थसम्पत् ।**
**स्वाप्तिर्नृशंसाद् भयमर्थनाश**
**उक्तः क्रमादित्यपरोन्मुखेषु ॥ ६५ ॥**

ईशान में द्वार स्वामी के लिए कृतघ्न होता है और वशीभूत न होने वाला कहा गया है और दक्षिण में द्वार पुत्र एवं बल की हानि करने वाला होता है । एक दूसरे की तरफ उन्मुख द्वार सुत की पीड़ा, रिपु की वृद्धि, अर्थ और सुत का अलाभ तथा अर्थनाश करने वाला होता है ॥ ६४-६५ ॥

**बन्धव्यसत्वे (?) रिपुवृद्धिरर्थ-**
**सुताप्तिरग्र्या गुणसम्पदश्च ।**
**सुतार्थलब्धिर्द्विषयात्मजेन**
**दोषास्त्रिया नैर्ऋतदिङ्मुखेषु ॥ ६७ ॥**

इसी प्रकार नैर्ऋत्य दिशा के प्रातिकूल्य (पद) में निर्मित द्वार बन्धु का कारण, व्यसन, रिपु वृद्धि एवं स्त्री क्लेशादि उत्पन्न करते हैं ॥ ६७ ॥

**गुणाश्च दोषाश्च यथावदेते**
**निरूपिता द्वारसमाश्रिता ये ।**
**ताञ् शिल्पविच्छास्त्रविदां वरिष्ठो**
**विज्ञाय पूज्यत्वमुपैति लोके ॥ ६८ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे द्वारगुणदोषो नाम एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥**

इस प्रकार द्वार से सम्बन्धित जो गुण और दोष हैं उनका यहाँ उचित रूप से निरूपण कर दिया गया । अतः उन गुण दोषों को शास्त्रज्ञ तथा शिल्पकर्म का ज्ञाता स्थपति जानकर वास्तुकर्म करें क्योंकि ऐसा करने से वे संसार में पूजा को प्राप्त करते हैं ॥ ६८ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'द्वारगुणदोष' नामक उन्तालिसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ३९ ॥**



# अथ चत्वारिंशोऽध्यायः

## * पीठमानम् *

## (The Measurement of a pedestal of Basement)

**देवानां मनुजानां च पीठमानमथोच्यते ।**
**पीठं कनीयो भागं च सार्धभागं तु मध्यमम् ॥ १ ॥**

**तीन प्रकार के पीठ**—अब देवताओं के और मनुष्यों की पीठ (Seat-pedestal) का मान (= प्रमाण) कहते हैं । एक पीठ का आधार कनीय (= छोटा) होता है और कनीय भाग से आधा अधिक 'मध्यम' पीठ होता है ॥ १ ॥

**द्विभागमुत्तमं तत् स्यादेषा पीठसमुच्छ्रितिः ।**
**महेश्वरस्य विष्णोश्च ब्रह्मणश्चोत्तमं भवेत् ॥ २ ॥**

दो भागों वाला पीठ 'उत्तम' पीठ होता है । इस पीठ की ऊँचाई महेश्वर, विष्णु एवं ब्रह्मा के लिए उत्तम कही गई है ॥ २ ॥

**इतरेषां च देवानां कर्त्तव्यं तत्र धीमता ।**
**ईश्वरस्य यथाकामं पीठं कार्यं विचक्षणैः ॥ ३ ॥**

बुद्धिमान स्थपति को अन्य देवताओं के लिए पीठ (= कुर्सी) का मान बढ़ाना नहीं चाहिए । विद्वान् शिल्पी को ईश्वर के वाञ्छित मान को अपने बुद्धि से घटाना बढ़ाना चाहिए ॥ ३ ॥

**यस्मिन् स्थाने विधातव्यो ब्रह्माविष्णुस्तथैव च ।**
**ईश्वरः सर्वतः कार्यो न दोषस्तत्र विद्यते ॥ ४ ॥**

जिस मन्दिर में ब्रह्मा एवं विष्णु की मूर्ति स्थापित करे वहाँ पर शिव की मूर्ति भी स्थापित करनी चाहिए । इसमें (तीनों मूर्तियों के साथ रहने में) कोई भी दोष नहीं है ॥ ४ ॥

**इतरेषां तु देवानां पीठं भागं समुच्छ्रितम् ।**
**यस्य येन विभागेन वास्तुमानं विधीयते ॥ ५ ॥**

अन्य देवों के पीठ-भाग तथा उसकी ऊँचाई उसी के अनुसार होनी चाहिए जिसका जो मान अर्थात् जैसा वास्तु मान में विहित है उतना प्रमाण (= मान) पीठ का होना चाहिए ॥ ५ ॥

**तस्य तेनैव भागेन पीठोच्छ्रायो विधीयते ।**
**मनुजानां च पीठानि वेश्मनां देवपीठकैः ॥ ६ ॥**
**तुल्यानि कुर्यादुपरि कृता वृद्धिकराः सुराः ।**
**पुरमध्ये तु कर्तव्यं ब्रह्मणे गृहमुत्तमम् ॥ ७ ॥**

मनुष्यों के घर का पीठ भाग उनके गृह के अनुसार ही होता है और देवताओं के पीठ की ऊँचाई उसी योग्यता के अनुसार होती है । देवताओं की पीठ भाग की ऊँचाई यदि मनुष्यों के पीठ भाग से अधिक होती है तो यह मनुष्यों को वृद्धिंगत करती है । अतः पुर (नगर) के मध्य में ब्रह्मा का एक उत्तम मन्दिर बनाना चाहिए ॥ ६-७ ॥

**चतुर्मुखं च तत् कार्यं तथा पश्यति तत् पुरम् ।**
**अधिकं सर्ववेश्मभ्यस्तथा राजगृहादपि ॥ ८ ॥**

ब्रह्मा की चतुर्मुख मूर्ति इस प्रकार स्थापित करनी चाहिए कि वह पुर की समस्त प्रजा का अवलोकन कर रहे हों । उन ब्रह्मा का पीठ सभी गृहों के पीठ (= नींव) से भी ऊँचा होना चाहिए । यह ऊँचाई राजगृह की ऊँचाई से भी अधिक होनी चाहिए ॥ ८ ॥

**राजवेश्माधिकमपि शस्यतेऽन्यसुरालयात् ।**
**पञ्चमो लोकपालानां राजा श्रेष्ठतमो यतः ॥ ९ ॥**

वस्तुतः अन्य देवमन्दिरों के पीठ भाग की ऊँचाई यदि राजगृह की ऊँचाई से भी अधिक है तो वह प्रशस्त मानी जाती है । क्योंकि लोकपालों में राजा पञ्चम लोकपाल है जो कि श्रेष्ठतम होता है ॥ ९ ॥

**एवमेतानि देवानां पीठान्युक्तान्यशेषतः ।**
**चातुवर्ण्यस्य पीठानि ब्रूमो विप्राद्यनुक्रमात् ॥ १० ॥**

इस प्रकार देवताओं के पीठों का मान पूर्ण रूप से प्रतिपादित किया गया है। अब ब्राह्मण एवं क्षत्रियादि वर्णों के क्रमानुसार चारों वर्णों के गृह के पीठ के मान का निरूपण करते हैं ॥ १० ॥

**षट्त्रिंशदङ्गुलोत्सेधं पीठं विप्रस्य शस्यते ।**
**इतरेषां तु वर्णानां ह्रस्वं स्याच्चतुरङ्गुलम् ॥ ११ ॥**

ब्राह्मण के गृह के पीठ (नींव के ऊपर कुर्सी) का मान छत्तीस अङ्गुल ऊँचा कहा गया है । अन्य क्षत्रियादि वर्णों के गृह के पीठ (= कुर्सी) की ऊँचाई छत्तीस से क्रमशः चार-चार अङ्गुल कम करके होती है ॥ ११ ॥

**चातुर्वर्ण्यस्य पीठानि भुङ्क्ते विप्रो गृहाणि च ।**
**त्रयाणां क्षत्रियो वैश्यो द्वयोः शूद्रः क्रमात् स्वकम् ॥ १२ ॥**

चारो वर्णों के पीठों में ब्राह्मण के गृह का पीठ चार भाग का भोग करता है । क्षत्रिय के गृह का पीठ तीन भाग का भोग करता है और वैश्य के घर का पीठ दो भाग का तथा इसी क्रम से शूद्र के गृह का पीठ अपने एक भाग का भोग करता है ।

**विमर्श**—वास्तुशास्त्र के अनुसार गृह निर्माण करने से कितनी सरलता हो जाती है कि किस वर्ण के मनुष्य का यह गृह है? प्रथम दृष्ट्या देखते ही ज्ञात हो जाता है । यह प्राचीन भारत के वास्तुविदों की देन है ॥ १२ ॥

**एवं विभागं पीठानां स्थपतिः परिकल्पयेत् ।**
**हितं कारयितुर्वाञ्छन् नृपतेश्च समृद्धये ।**

इस प्रकार देवताओं और मनुष्यों के गृहों के पीठ (= कुर्सी) का मान स्थपति उनके विभाग के अनुसार ही सम्पन्न करे । इस विभाग से गृह निर्माण करने पर बनवाने वाले गृहस्वामी को तथा राजा को भी समृद्धि एवं धन सम्पन्नता प्राप्त होती है ।

**प्रमाणे स्थापिता देवाः पूजार्हाश्च भवन्ति हि ॥ १३ ॥**

देवों के पीठों को प्रमाणानुसार निर्मित करने से वे पूजन अर्चन के लिए बिल्कुल उचित सम्मान सम्पन्न हो जाते हैं ॥ १३ ॥

**प्रमाणं पीठानामिदमभिहितं ब्रह्ममुरजि-**
**त्पुरारीणामत्रापरदिविषदां यच्च नियतम् ।**
**ततो विप्रादीनामपि निगदितं यत् तदखिलं**
**यथौचित्यायोज्यं श्रियमभिलषद्भिः स्थपतिभिः ॥ १४ ॥**

**॥ इति मन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे पीठमानं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥**



इस प्रकार ब्रह्मा, विष्णु तथा महेश (त्रिपुरारि) आदि के और अन्य देवों के पीठों का जो प्रमाण था उसका निरूपण किया गया है । अत: समृद्धि एवं श्री सम्पन्नता के अभिलाषी स्थपति को चाहिए कि वह ब्राह्मणादिक वर्णों के पीठ के कहे गए उचित मान को प्रयुक्त करे ॥ १४ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'पीठमान' नामक चालिसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ४० ॥**



## समीक्षात्मक टिप्पणी

### पीठ का मान (श्लोक ४०.११-१२)

भवन की नीव के ऊपर पीठ (= कुर्सी) का उतना अच्छा विवेचन कहीं भी प्राप्त नहीं होता है । ब्राह्मण के गृह के पीठ का मान छत्तीस अङ्गुल कहा गया है और अन्य वर्णों के भवन के पीठ (= कुर्सी) को चार-चार अङ्गुल कम करके बनाना चाहिए । इस प्रकार क्षत्रिय के गृह का पीठ उसके कर्माङ्गुल से बत्तीस अङ्गुल का होना चाहिए । वैश्य के गृह का पीठ अट्ठाइस कर्माङ्गुल तथा शूद्र के गृह का पीठ चौबीस कर्माङ्गुल का प्रशस्त होता है ।

इसी पीठमान के प्रसङ्ग में यह भी विशेष बात कही गई है कि एक मन्दिर में तीन देव की मूर्तियाँ रहें अथवा न रहें ? इस प्रश्न पर यह विधान किया गया है कि जहाँ ब्रह्मा एवं विष्णु की मूर्ति स्थापित करनी हो तो वहाँ भगवान् शङ्कर की मूर्ति अवश्य स्थापित करे ।

**मत्स्यपुराण** २६२ अध्याय में पीठ के मान का विवेचन मिलता है ।



# अथैकचत्वारिंशोऽध्यायः

## * चयविधिः[1] *

## (The Edifice Laying)

**इदानीमभिधीयन्ते चयस्येह गुणागुणाः ।**
**सुविभक्तः समश्चारुश्चतुरस्रश्चयः शुभः ॥ १ ॥**

**ईटों की चुनाई**—अब चय अर्थात् ईटों की चुनाई के गुणों और दोषों का इस अध्याय में वर्णन किया जाता है । १. सुविभक्त, २. बराबर, ३. सुन्दर और ४. चौकोर चुनाई शुभ कही गई है ॥ १ ॥

**विंशतिश्चयगुणाः**

**असम्भ्रान्तमसन्दिग्धमविनाश्यन्यबर्हितम् ।**
**अनुत्तममनुद्वृत्तमकुब्जं न च पीडितम् ॥ २ ॥**
**समानखण्डमृज्वन्तमन्तरङ्गं तथैव च ।**
**सुपार्श्वं सन्धिसुश्लिष्टं सुप्रतिष्ठं सुसन्धि च ॥ ३ ॥**
**अजिह्मं चेति चेयस्य गुणा विंशतिरित्यमी ।**

**तद्विपरीताश्चयदोषा अपि विंशतिरिति कथनम्**

**एतेषां वैपरीत्येन दोषाणामपि विंशतिः ॥ ४ ॥**

**ईंटों की चुनाई के बीस गुण**—५. असम्भ्रान्त, ६. असंदिग्ध, ७. अविनाशि, ८. अन्यवर्हित, ९. अनुत्तम, १०. अनुद्वृत्त, ११. अकुब्ज, १२. अपीडित, १३. समान खण्ड, १४. ऋजु-अन्त, १५. अन्तरङ्ग, १६. सुपार्श्व, १७. सन्धिसुश्लिष्ट, १८. सुप्रतिष्ठ, १९. सुसन्धि तथा २०. अजिह्म ये बीस गुण (चार प्रथम श्लोक प्रतिपादित और ये सोलह) चय (= चुनाई) के कहे गये हैं । वैपरीत्य से अर्थात् इनके उलटे दोष भी बीस कहे गये हैं ॥ २-४ ॥

**दक्षिणं तु यदा कुड्यं विचिनोति बहिर्मुखम् ।**
**तदा व्याधिभयं विद्यान् मृत्युदण्डं च निर्दिशेत् ॥ ५ ॥**

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह तैंतीसवाँ अध्याय है ।

### दक्षिणपश्चिमादिकुड्यानां बहिर्मुखत्वेन विचयने फलम्

**पश्चिमं तु यदा कुड्यं विचिन्वन्ति बहिर्मुखम् ।**
**धनहानिं तदा विद्याद् दस्युभ्यश्च भयं भवेत् ॥ ६ ॥**

दक्षिण की तरफ जब दीवाल बहिर्मुख चुनी जाती है तो वह व्याधिभय की उत्पादक या मृत्युदण्ड की निर्देशक होती है । पश्चिमी दिवाल जब बहिर्मुख चुनी जाती है तब धन हानि तथा दस्युओं से भय प्राप्त होता है ॥ ६ ॥

**उत्तरं तु यदा कुड्यं विचिनोति बहिर्मुखम् ।**
**कर्तारं स्वामिनं वापि व्यसनं प्रापयेत् तदा ॥ ७ ॥**

जब स्थपति उत्तर दिशा में दीवाल का बहिर्मुख चयन करता है तो बनाने वाले कारीगर तथा गृहस्वामी दोनों को व्यसन प्राप्त होता है ॥ ७ ॥

### कुड्येषु दलितादिषु फलम्

**प्राच्यं बहिर्मुखं कुड्यं चिनोति स्थपितिर्यदा ।**
**राजदण्डभयं तत्र निर्देष्टव्यं विचक्षणैः ॥ ८ ॥**
**एतदेव फलं ब्रूयात् पतिते दलिते तथा ।**

**कुड्य के गिरने का फल**—जब स्थपति प्राची दिशा में कुड्य का बहिर्मुख निवेशन करता है तो विशेषज्ञों ने राजदण्ड के भय का निर्देश किया है । यही फल कुड्य के गिर जाने पर या दलित हो जाने पर कहा गया है ॥ ८-९ ॥

### प्राग्दक्षिणादिकर्णानां बहिर्मुखत्वेन प्रवर्तने फलम्

**यस्य प्राग्दक्षिणः कर्णः प्रवर्तेत बहिर्मुखः ॥ ९ ॥**
**स्यात् तत्राग्निभयं घोरं गृहभर्तुश्च संशयः ।**

**चारों दिशाओं में कर्णो के बहिर्मुख चुनने का फल**—जिस दीवाल का प्रागृदक्षिण कर्ण (= कोना) बहिर्मुख होता है वहाँ पर घोर अग्नि भय और गृहस्वामी का संशय (जीवन संशय) आपतित होता है ॥ ९-१० ॥

**गच्छेद् बहिर्मुखः कर्णो यदा दक्षिणपश्चिमः ॥ १० ॥**
**कलहोपद्रवस्तत्र स्याद् भार्यायाश्च संशयः ।**

दक्षिण पश्चिमाभिमुख कर्ण जब बहिर्मुख होता है तो वहाँ पर लड़ाई के उपद्रव और भार्या का (जीवन) संशय उपस्थित होते हैं ॥ १०-११ ॥

**पश्चिमोत्तरकर्णे तु सम्प्रयाते बहिर्मुखे ॥ ११ ॥**
**पशुवाहनपुत्राणां संशयस्तत्र जायते ।**

पश्चिमोत्तर कर्ण जब बहिर्मुख हो जाते हैं तो वहाँ पर पशु, वाहन और कुत्तों का (जीवन) संशय प्राप्त होता है ॥ ११-१२ ॥

**प्रागुत्तरो यदा कर्णः प्रचीयेत बहिर्मुखः ॥ १२ ॥**
**गुरूणां संशयस्तत्र गोवृषादेश्च जायते ।**

जब प्रागुत्तर कर्ण (पूर्व तथा उत्तराभिमुख) बहिर्मुख जाता है तो वहाँ पर गुरुओं का संशय और गाय बैलों का (जीवन) संशय पैदा होता है ॥ १२-१३ ॥

**सर्वबाहुषु चयनेन विशालीकरणे तत्सन्निवेशः अत्र आय-व्ययव्यवस्था**

**विशालं यदि जायेत सर्वबाहुषु चिन्वतः ॥ १३ ॥**
**कर्णिकासमसंस्थानं तद् भवेन्मल्लिकाकृति ।**
**न तादृशो भवेदायस्तत्र यादृग् व्ययो भवेत् ॥ १४ ॥**
**चयस्य तस्य दोषेण गृ(ह?)ही क्षीणः पलायते ।**

**चुनाई के कुछ पारिभाषिक शब्द—मल्लिकाकृति**—जब सब बाहुओं (पूर्वोक्त चारों दीवालों के कोनों) में चुनाई करते हुए यदि विशाल हो जायें तो वह कर्णिका के समान संस्थान मल्लिकाकृति नामक चुनाई कही गयी है । वहाँ पर जितना व्यय होता है, उतनी आय नहीं होती । चय के उस दोष से गृहस्वामी क्षीण द्रव्य वाला होकर घर से भाग जाता है ॥ १३-१५ ॥

**चिन्वतो यदि संक्षिप्तमत्यर्थं तत्र जायते ॥ १५ ॥**
**ब्रह्मसंज्ञं तदुद्दिष्टं तत्र राजभयं भवेत् ।**

**ब्रह्मसंज्ञक चुनाई**—यदि चुनाई करते हुए दीवाल बहुत ही संक्षिप्त हो जावे तो उस चय की ब्रह्म संज्ञा कही गई है और वहाँ पर राजभय अवश्यम्भावी होती है ॥ १५-१६ ॥

**विस्तृतं यदि बाह्येषु संक्षिप्तं चैव मध्यतः ॥ १६ ॥**
**तनुमध्यं तदुद्दिष्टं तत्र विद्यात् क्षुधो भयम् ।**

**तनुमध्य चुनाई**—यदि चुनाई करते हुए बाहर से विस्तार और बीच में संक्षेप आपतित हो जाता है तो उसका नाम तनुमध्य उद्दिष्ट किया गया है और वहाँ क्षुधा का भय समझना चाहिये ॥ १६-१७ ॥

**उच्छ्रितं यदि कर्णेषु परिहीणं च मध्यतः ॥ १७ ॥**
**निर्णतं नाम तद् विद्यात् तत्र चौरभयं भवेत् ।**

**निर्णत चुनाई**—जो दीवाल चुनने से कर्णों में यदि उच्छ्रित और मध्य से

परिहीन बनती है तो उसे निर्णत नाम दिया गया है और वहाँ उस निर्णत पर चोर का भय कहा गया है ॥ १७-१८ ॥

**कर्णेषु परिहीणं चेदुच्छ्रितं चापि मध्यतः ॥ १८ ॥**
**कूर्मोन्नतमिति ज्ञेयं सर्वदोषभयावहम् ।**

**कूर्मोन्नत**—इसके विपरीत कर्णों में परिहीन और मध्य से उच्छ्रित (उठी हुई) यदि भित्ति की चुनाई होती है तो उसे कूर्मोन्नत (अर्थात् कछुवे की पीठ के समान उठी हुई) नाम की चुनाई समझना चाहिये और उसको सर्वदोषमयी एवं गृहस्वामी के लिए भयावह कहा गया है ॥ १८-१९ ॥

**विषमोन्नतकर्णेषु निर्दिशेत् द्रविणक्षयम् ॥ १९ ॥**
**प्राज्यान्नपानं तद् विद्यात् समेषु विहितेषु च।**
**इत्येते चीयमानस्य गुणदोषाः प्रकीर्तिताः ॥ २० ॥**
**तस्मात् सर्वप्रयत्नेन चयकर्म प्रयोजयेत् ।**

**विषमोन्नत**—कर्णों में द्रविणक्षय (धननाश) का निर्देश किया गया है और सम चुनाई जहाँ पर कर्ण बराबर-बराबर चुने जाते हैं वहाँ पर खूब भक्ष्य और पान (आदि भोग) उपस्थित होते हैं । इस प्रकार से ये चीयमान के गुण एवं दोष बताये गये हैं । इसलिये पूर्ण प्रयत्न करके चय कर्म अर्थात् चुनाई का निर्वाह विधिपूर्वक करना चाहिये ॥ १९-२१ ॥

**चीयमानस्यातिसंक्षिप्तविस्तृततत्वादिषु संज्ञान्तरं फलं च,**

**उदकेन समं नीत्वा सम्यङ् निश्चयकारणम् ॥ २१ ॥**
**त(त्रा?स्मा)दृतेन चान्यत् स्यान्निश्चयार्थं चयस्य च ।**

**चुनाई के प्रकार और उनके फल**—दिवालों की चुनाई कैसे करनी चाहिये। अब इसका प्रकार कहते हैं । पानी के साथ ही गारा से बराबर चुनाई का सम्यक् निश्चय कारण हो सकता है क्योंकि पानी बराबर मिलाकर की गई चुनाई के निश्चयार्थ और कोई साधन नहीं है ॥ २१-२२ ॥

**तस्माज्जलेन वलयं गृह्णीयात् पूर्वमातृतः ॥ २२ ॥**
**ततः सुताडिते सूत्रे चयं कुर्याद् विचक्षणः ।**

इसीलिये जल के साथ वलय को आदरपूर्वक ग्रहण करना चाहिये । फिर सुताड़ित सूत्र में विचक्षण राजमिस्त्री को चुनाई प्रारम्भ करनी चाहिये ॥ २२-२३ ॥

**द्विगुणां क्षेत्रमानस्य रज्जुं कृत्वा तदन्तयोः ॥ २३ ॥**
**योऽसौ(?) कार्यौ ततस्तस्यां पादोनक्षेत्रमानतः ।**

फिर क्षेत्रमान से दुगने प्रमाण से डोरी बनाकर दोनों अन्त के भागों पर क्षेत्रमान से कुछ पहले दो खूँटियाँ गाड़ देनी चाहिये ॥ २३-२४ ॥

**दद्यान्निरञ्छनं कीलौ क्षेत्रगर्भान्तगामिनौ ॥ २४ ॥**
**निधाया(यः?य)सकौ तस्याः प्रान्तस्थौ योजयेत् तयोः।**

फिर क्षेत्रगर्भान्तगामी उन दोनों प्रान्त-स्थित खूँटियों पर सूत्र को बाँध देना चाहिये ॥ २४-२५ ॥

**निरञ्छनाभिकृष्टायां पादोनक्षेत्रसम्मितम् ॥ २५ ॥**
**भुजगत्या भवेद् रज्जुस्तस्यामिष्टानुमानतः ।**
**चिह्नं दद्यात् स कर्णः स्यादेवं दोषान् प्रसाधयेत् ॥ २६ ॥**

पुनः उस चुनाई पर इष्टानुमान से दोनों अन्त के भागों पर चिह्न देना चाहिये; इससे दीवाल का कर्ण ठीक-ठीक चुना जा सकेगा और इस प्रकार से कारीगर दोषों का प्रसाधन कर्म करे ॥ २५-२६ ॥

**भित्तिचयनप्रकारः**

**भूरि नाच्छादनं दद्यान्न भिन्द्यात् तत्र चेष्टकाः ।**
**विषमस्थाः कुठारेण च्छित्वा ताः कल्पयेत् समाः ॥ २७ ॥**

**भित्ति की चुनाई की विधि**—चुनाई की दूसरी विशेषता होनी चाहिए कि गारा बहुत नहीं देना चाहिये और न ईंटों का ही अधिक छेदन भेदन करना चाहिये। विषम ईंटों को बँसुलि से काट कर सम कर देना चाहिये ॥ २७ ॥

**यथा न च स्पृशेत् सूत्रं विचिन्वीत तथा बुधः ।**
**कुड्ये च सादिमध्यान्ते दृष्टिमेकां निपातयेत् ॥ २८ ॥**

इस प्रकार से बुद्धिमान कारीगर को दीवाल की सम चुनाई करनी चाहिये कि दीवाल की चुनाई (बाँधी हुई) डोरी का स्पर्श न करे । पुनः समतल दीवाल पर आदि, मध्य और अन्त के कोने तक एक दृष्टि डालनी चाहिये ॥ २८ ॥

**यदा सर्वपरिक्रान्तं तलं चोद्घाटितं भवेत् ।**
**तदा नैकत्र कुर्वीत पर्यायेण विचक्षणः ॥ २९ ॥**

जब चारों ओर का तल उद्घाटित हो गया हो अर्थात् कुछ ऊँचा हो गया हो तो फिर बारी-बारी से चारों ओर चुनाई करनी चाहिये ॥ २९ ॥

**उद्घाटनं स्तराणां तु यदीच्छेत् सिद्धिमात्मनः ।**
**तत्र तत्र चयं कुर्याद् यदि संविद्धकं हितम् ॥ ३० ॥**

**दुर्वहं हि भवेत् तेन तस्मात् तत् परिवर्जयेत् ।**

यदि कार्य की कुशलता चाहे तो एक ही स्थान पर पूरी चुनाई नहीं करनी चाहिये, क्योंकि ऐसा करने से स्तरों का उद्घाटन नहीं होगा । इसलिये चुनाई सब ओर थोड़ी-थोड़ी करके उठानी चाहिये, क्योंकि चारों ओर पाढ़ या मचान बाँध कर चुनाई करना कठिन होगा ॥ ३०-३१ ॥

**उपरिष्टात् समं पार्श्वे भुजं कुर्याद् विचक्षणः ॥ ३१ ॥**
**समन्ताद् रुचकच्छिन्नश्चयो भित्तिषु पूजितः ।**
**तस्मात् प्रयत्नः कर्तव्यश्चयकर्मणि नित्यशः ॥ ३२ ॥**

विचक्षण स्थपति ऊपर से बगल पर बराबर कर चुनाई करता है और चारों ओर दीवालों का दाढ़ा छोड़ देता है । इसीलिये यत्न से चय कर्म में प्रयत्नशील होना चाहिये ॥ ३१-३२ ॥

**इति भाषितरूपितमाचरत-**
**श्चयकर्म यथाविधि शिल्पिकृतम् ।**
**भवतीह यशो भुवने विततं**
**गृहभर्तुरपि प्रचुरो विभवः ॥ ३३ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे चयविधिर्नाम एकचत्वारिंशोऽध्यायः ॥ ४१ ॥**

...❧❀❧...

इस प्रकार से वर्णित एवं निरूपित चयकर्म विधि इस भूतल पर यशकारक होती है और गृहस्वामी के लिये प्रचुर विभव भी प्रदान करती है ॥ ३३ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'चयविधि' नामक इकतालिसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ४१ ॥**



# अथ द्विचत्वारिंशोऽध्यायः

## * शान्तिकर्मविधिः[1] *

## (The Ritual of Propitiatory Rites)

इदानीमभिधास्यामो विधानं शान्तिकर्मणः ।
यथावदिष्ट्वा दिक्पालान् कृत्वा शान्तीर्यथाक्रमम्॥ १ ॥

कर्णिकास्थापनम्

स्नपयेत् कर्णिकां कुम्भैः सहिरण्यैर्विचक्षणः ।
सर्वगन्धानुलिप्तां च माल्यदामविभूषिताम् ॥ २ ॥
कृतमाल्यानिवसितां(?) मूले च मधुलेपिताम् ।
दोषप्रशमनार्थाय तां मूलेषु निखातयेत् ॥ ३ ॥

**कर्णिका स्थापन**—अब शान्ति-कर्म का विधि-विधान कहते हैं । शास्त्रानुमोदित उचित विधि से दिक्पालों की पूजा करके और क्रमशः शान्ति कर्म के मन्त्रों के द्वारा आहुति सम्पन्न करके विद्वान् पुरोहित सुवर्ण के घटों से गृह की चारों दिशाओं की कर्णिका (बुर्जी) को स्नान करावे । विविध गन्धों से उसे अनुलिप्त कर, माला आदि से विभूषित करे तथा पूजा स्थान को सुवासित करे और मूल में शहद से लिप्त करे । फिर दोषप्रशमनार्थ शान्ति कर्म के लिए उस कर्णिका के मूल में ही निखातन (= खोदाई का) कर्म करे ॥ १-३ ॥

मधुकुम्भमरिष्टं च शैवालं च विधानवित् ।
वाचयित्वा तु विप्रेन्द्रान् कृतपुण्याहमङ्गलान् ॥ ४ ॥
स्थापयेत् कर्णिकाः सर्वाः स्थपतिः प्रयतः शुचिः ।
एतेन विधिना कर्म चातुर्वर्ण्यस्य कारयेत् ॥ ५ ॥

मधु, कुम्भ और अरिष्ट तथा शैवाल के साथ-साथ शान्तिकर्म की विधि का ज्ञाता स्थपति श्रेष्ठ ब्राह्मणों से स्वस्तिवाचन कराए और स्वयं पवित्र एवं प्रयतात्मा

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह ऊनतालिसवाँ अध्याय है ।

होकर गृह की कर्णिकाओं की स्थापना करे। ब्राह्मण, क्षत्रिय, वैश्य एवं शूद्र चारों वर्णों को इस विधि से शान्ति कर्म करना चाहिए ॥ ४-५ ॥

**कर्णिका रोपिता यत्र पुनरुत्पाट्य रोप्यते ।**
**न तन्निष्पद्यते वेश्म स्वामी चात्र विनश्यति ॥ ६ ॥**

यदि कर्णिका (बुर्जी) को आरोपित कर उसे फिर उखाड़ कर यदि भवन में उसका आरोपण किया जाता है तब वह भवन सुख शान्ति रूप पूर्णता को प्राप्त नहीं होता है और उस घर में गृहस्वामी अन्तत: विनाश को प्राप्त हो जाता है ॥ ६ ॥

**निखातं तु यदा दारुच्छिद्यते ताड्यते पुनः ।**
**तन्नाशो धनधान्यस्य स्वामिनश्चात्र सर्वथा ॥ ७ ॥**

इस प्रकार जिस भवन में एक स्थान से उखाड़ कर दूसरे स्थान पर जो लकड़ी काटी जाती है अथवा लकड़ी पुन: ताडित (= काटी-छाँटी) की जाती है, तब ऐसे गृह में गृह-स्वामी का नाना प्रकार के धन-धान्य की हानि होती है ॥ ७ ॥

**वल्लीनिपीडितं दारु प्रवेशे चेन्निखन्यते ।**
**आशीविषभयं घोरं तस्मिन्नुत्पातलक्षणम् ॥ ८ ॥**

वल्ली से निपीडित कर लकड़ी यदि गाड़कर समय से पूर्व उखाड़ी जाती है तो भयङ्कर सर्प भय का उत्पात उत्पन्न हो जाता है ॥ ८ ॥

**उत्थाने कर्णिका रक्ष्या सर्वसत्त्वाभिधर्षणात् ।**
**नवे कर्मण्यशकुना मृगव्यालसरीसृपाः ॥ ९ ॥**

आरोपित करने के बाद कर्णिका की पशु पक्षी आदि सब प्राणियों के अभिधर्षण से रक्षा करनी चाहिए क्योंकि नवीन कर्म में मृग (= पशु) तथा सर्प अपशकुन कहे गए हैं ॥ ९ ॥

### कर्णिकासु वायसादिरोहणे दोषकथनम्

**कर्णिकामधिरोहन्ति दोषांस्तत्र वदेदमून् ।**
**कृतापीडां परिहृतां यद्यारोहन्ति वायसाः ॥ १० ॥**

**कर्णिका पर कौवे के बैठने का दोष**—यदि कर्णिका पर कौवे आदि पक्षी चढ़ जाते है तो वहाँ पर उसमें निम्न दोष कहे गए हैं ॥ १० ॥

### कर्णिकासु वायसादीनामधिरोहणे फलम्

**गृहिणस्तत् प्रवासः स्यादन्नं पानं च हीयते ।**
**मयूरे तद्गृहं राजा हरेत् पञ्चाब्दतः परम् ॥ ११ ॥**

**कर्णिका पर पक्षियों के बैठने का फल**—(१) कर्णिका के आरोपण (गाड़े जाने पर) अथवा उसके लाये जाने के अवसर पर यदि कौवे उस पर बैठते हैं तो गृह-स्वामी का प्रवास में जाना कहा गया है अर्थात् घर से उसका दाना पानी बन्द हो जाता है । (२) कर्णिका पर यदि मयूर अधिरोहण करे तो राजा (या बदमाश) उस घर को पाँच वर्ष के बाद छीन लेते हैं ॥ ११ ॥

**वराङ्गे जायते व्याधिः कोकिलैर्द्व्यब्दतः परम् ।**
**काकोलैस्त्रीणि वर्षाणि जायते सुमहद् भयम् ॥ १२ ॥**
**शुके स्युः कलहाद्यानि न च निष्पद्यते गृहम् ।**
**कुक्कुटेऽग्निभयं विद्यात् राजतो वा महद् भयम् ॥ १३ ॥**

(३) कोकिलों के चढ़ने पर वराङ्गों (गुप्ताङ्ग) में दो वर्षों के बाद रोग आदि भय उपस्थित हो जाता है । (४) काकोलों के अधिरोहण में तीन वर्ष तक भय कहा गया है । (५) तोते के अधिरोहण से कलह आदि होते हैं और वह घर सुखी नहीं होता । (६) मुर्गे के अधिरोहण से अग्निभय होता है अथवा राजा से भय उपस्थित होता है ॥ १२-१३ ॥

**सारिकायां तु दौःशील्यं स्त्रीणां गृहपतेस्तथा ।**
**सर्परूपे (त?तु) विघ्नेन गृहं निष्ठां न गच्छति ॥ १४ ॥**

(७) सारिका के अधिरोहण से गृह-स्वामी की स्त्रियों में व्यभिचरित आचरण होता है और सर्प के आरोहण में घर विश्वास को प्राप्त नहीं होता है ॥ १४ ॥

**स्त्रीपुंसयोः कुलिङ्गे तु जायते पापकारिता ।**
**पारावते तु जायेते स्त्रीपुंसौ गुरुतल्पगौ ॥ १५ ॥**

(८) कुलिङ्ग के अधिरोहण में घर के स्त्री-पुरुषों में पापाचरण की प्रवृत्ति उत्पन्न होती है । (९) घर में कपोत के अधिरोहण से स्त्री-पुरुष अपने से बुजुर्गों के साथ शय्यागमन करते हैं ॥ १५ ॥

**विडाले तु कुलं दासैः सह रोगैर्निपीड्यते ।**
**ज्वलनो वा जलं वापि हस्ती वा हन्ति तद्गृहम् ॥ १६ ॥**

(१०) विडाल के अधिरोहण से दासों का समुदाय पीड़ित होता है और इस भवन को अग्नि अथवा जल या फिर हाथी ही नष्ट कर देता है ॥ १६ ॥

**आरण्यैः शकुनैरेतत् स्याद् वर्षाद् धर्षणे फलम् ।**
**यूनां च जायते मृत्युर्मध्वासङ्गे धनक्षयः ॥ १७ ॥**

**दुःस्वप्नदर्शनं घूके बालानां मरणं तथा ।**
**त्रस्तभीते निलीने तु राजा शून्यं हरेद् गृहम् ॥ १८ ॥**

(११) वन्य पक्षियों के द्वारा गृह का धर्षण होने पर एक वर्ष के अन्तराल में ही युवकों की मृत्यु हो जाती है ।

(१२) मधुमक्खियों द्वारा गृह में मधु के सञ्चय से धनक्षय और उल्लू के द्वारा घोंसला आदि बनाकर रहने से अथवा उसके दर्शन से दुःस्वप्न दर्शन होता है तथा बालकों को मरण तुल्य पीड़ा प्राप्त होती है । डरे हुए एवं बिल्ली आदि से त्रस्त तथा किसी पशु-पक्षी के मर जाने पर उस घर को राजा गृहस्वामी से छीन लेता है ॥ १७-१८ ॥

**यदा त्वग्रे प्रदृश्येत धूम्रः कर्णगतोऽपि वा ।**
**अग्निर्दहति तत् क्षिप्रं विद्युद् वा हन्ति मन्दिरम् ॥ १९ ॥**

जब अग्रभाग में कर्णगत धूम्र दिखाई पड़े तो उस घर को शीघ्र या तो अग्नि जला डालती है अथवा बिजली नष्ट कर देती है ॥ १९ ॥

**तासां गृध्रादिभिर्घर्षणे शान्तिकविधिः**

**यत्रारोहति गृध्रस्तद् द्विजाङ्घ्रिस्पृष्टमाचरेत् ।**
**कृत्वा हलशतैः कृष्टं ततो बीजानि वापयेत् ॥ २० ॥**

**गीध आने पर शान्ति**—जिस गृह पर या जिस स्थान पर गीध आरोहण करता है उस स्थान का ब्राह्मण के चरण से स्पर्श करावे और उस स्थान को पूर्णरूप से हलों से जुतवा कर तब बीज बुआवे ॥ २० ॥

**गावश्चात्र प्रदुह्येरञ् शान्तिकानि च कारयेत् ।**
**मेघेऽभिवृष्टे भूयोऽपि तत्र कुर्वीत मन्दिरम् ॥ २१ ॥**

पहले वहाँ पर गौओं को दुहावे, फिर शान्ति-कर्म करावे । तब वर्षा होने के बाद वहाँ पर गृह-निर्माण करवाना चाहिए ॥ २१ ॥

**गृहाङ्गानां मधुसञ्चयादिभ्यो रक्षणीयत्वकथनम्**

**येषु येषु गृहाङ्गेषु मधुनः सञ्चयो भवेत् ।**
**तस्याङ्गस्य वधं ब्रूयात् प्रेषिण्यां चाप्युपद्रवम् ॥ २२ ॥**
**तस्माद्धेतोः शिखाग्रेषु मुकुटान् प्रणिधापयेत् ।**
**यावन्न रोपयेत् सौम्यं तावद् रक्षेत् समन्ततः ॥ २३ ॥**

**मधुमक्खियों की शान्ति**—भवनों के जिन-जिन अङ्गों में मधुमक्खियों द्वारा

मधु का सञ्चय किया जाता है, तदनुरूप उस गृह के अङ्ग का वेध (शान्तिकर्म) कहा जाता है। प्रेषणी में मधुसञ्चय से उपद्रव समझना चाहिए। इसलिए भवन के शिखा के अग्रभाग में (मुकुटों) गुम्बदों का रोपण करना चाहिए और जब तक वह अग्रभाग देखने में अच्छा दिखलाई न लगने लगे तब तक चारों तरफ से उसकी रक्षा करनी चाहिए ॥ २२-२३ ॥

**अभिलीनं तु शकुनैर्नहि किञ्चित् प्रशस्यते ।**
**तस्मात् प्रयत्नतो रक्षेदुत्पातात् प्रागुदीरितात् ॥ २४ ॥**

**घर में पक्षियों के घोसलों का फल**—पक्षियों के घोसले बना लेने पर कोई भी घर प्रशस्त नहीं कहा जाता है। इसलिए पूर्व प्रतिपादित उत्पात से प्रयत्नपूर्वक गृह की रक्षा करनी चाहिए ॥ २४ ॥

**गृहाणां दारूणां भङ्गे शान्तिविधानम्**

**भङ्गे गृहाणां दारूणां शान्तिहोमोऽथ कथ्यते ।**

**गृहदारूणामिन्द्रकीलादीनां भङ्गादिषु फलम्**

**इन्द्रकीलो ‌ महाकूटः पृष्ठवंशोत्तरौ धरौ ॥ २५ ॥**
**प्रग्रहो(?)ऽलिन्दपादौ वा स्वामिनं घ्नन्त्युपद्रवाः ।**

**गृह दारु भङ्ग में शान्ति विधान**—घरों की लकड़ियों से निर्मिति के भङ्ग होने पर शान्ति कर्म एवं हवन का विधान कहा गया है। इन्द्रकील, महाकूट, पृष्ठवंशोत्तर दोनों धरन (डड़हरा), रस्सी, दोनों अलिन्दपाद—इनके भङ्ग होने पर ये उपद्रव गृह-स्वामी को मार डालते हैं ॥२५-२६॥

**तुलास्थपत्यः(?) कूटं वा वेदिका कर्णपालिका॥ २६ ॥**
**नेत्रं कपोतपालिश्च हनप्रविष्टं कुटुम्बिनी (?) ।**

इसी प्रकार तुलास्थपत्य कूट अथवा वेदिका, कर्णपालिका, नेत्र, कपोतपाली आदि—इनके उपद्रव कुटुम्बिनी को सताते हैं ॥ २६-२७ ॥

**अन्वग्राः प(क्षि?क्ष)वंशाश्च मल्लकाः सकुमारकाः ॥ २७ ॥**
**गोपानस्यो मृगाल्यश्च स्थपिताः स्वकुमारिकाः(?) ।**
**परिघा द्वारपक्षाश्च भ्रातरं घ्नन्त्युपद्रवाः ॥ २८ ॥**

अन्वग्र, पक्षवंश, मल्लक, कुमारक, छज्जे, मृगालियाँ, परिघा और द्वार-पक्ष—इनके उपद्रव भाई को मार डालते हैं ॥ २७-२८ ॥

**संयुक्तं संग्रहो हन्ति निकृष्टांश्चाधरो धरः ।**

**स्थौण्यानि प्रतिमोको वाहन्युरिष्टान् परिच्छदान् ॥ २९ ॥**

संग्रह संयुक्त को मारता है तथा नीचे का खम्भा नीचों को मारता है । खूँटे (स्थौण्य) अथवा प्रतिमोक—इनके उपद्रव इष्ट परिच्छदों (सेवक वर्ग) का नाश करते हैं ॥ २९ ॥

**उ(द?प)धिर्भगिनीं हन्यादथवा परिचारकान् ।**
**पुंसा पुंन्नामभिर्द्रव्यैः स्त्रीणां स्त्रीनामभिर्भवेत् ॥ ३० ॥**
**उपघातो हतैर्नित्यं द्रव्याणां तु नपुंसकैः ।**

उपधी भङ्ग भगिनी को मारती है या परिचारकों को खत्म करती है अर्थात् भगा देती है । मनुष्यों का मनुष्य नाम वाले द्रव्यों से, स्त्रियों का स्त्री नाम वाले द्रव्यों से भङ्ग होने पर उपघात होता है और नपुंसक द्रव्यों का उपघात नपुंसक लिङ्ग वाले द्रव्यों से विहित होता है ॥ ३०-३१ ॥

**भूलिका स्त्रीविनाशाय गृहनाशाय वेधनम् ॥ ३१ ॥**
**कीला वा सन्धिपालिर्वा मित्रनाशाय दुष्यति ।**

'भूलिका' के भङ्ग होने से स्त्री को पीड़ा होती है तथा उसका वेध गृह को नष्ट कर देता है । कीलें और सन्धिपालियों के भङ्ग होने से मित्र-नाश करके गृह को दोष युक्त करती है ॥ ३१-३२ ॥

### नवदारुभङ्गादिषु प्रतिविधानम्

**नवे गृहे नवं दारु क्रियमाणमथो कृतम् ॥ ३२ ॥**
**आयोज्यमानं युक्तं वा न्यूनसंवत्सरं स्थितम् ।**
**भज्यते देहनाशाय स्फुटत्यथ विभज्यते ॥ ३३ ॥**

**नव दारुभङ्ग से दोष**—नवीन गृह में नई लकड़ी से निर्माण को प्राप्त हुई वस्तु अथवा निर्माणावस्था में होती है अथवा आयोज्यमान या युक्त की गई हो या वह एक साल में यदि टूट फूट जाती है तो गृहस्वामी को शारीरिक पीड़ा उपस्थित होती है ॥ ३२-३३ ॥

**गृहं ब्राह्मणसात् कृत्वा रत्नैरालिख्य चापरम् ।**
**नवैर्वस्त्रैः परिच्छाद्य पुनर्भिद्यानि (?) कारयेत् ॥ ३४ ॥**

ऐसी अवस्था में उस गृह को ब्राह्मण के आधीन करके और धन देकर (रत्नों से) दूसरा नक्शा खींचकर पुनः नवीन वस्त्रों के उसे आच्छादित कर फिर उसका छेदन एवं भेदन प्रारम्भ करे ॥ ३३-३४ ॥

**दग्धे भिन्ने प्रचलिते विनते विद्युता हते ।**

**विरूढे दलिते सन्ने सर्वत्रौषधिभिः स्मृताः ॥ ३५ ॥**
**शान्तयो विविधं हुत्वा ब्राह्मणान् स्वस्ति वाच्य वा ।**

दग्ध, भिन्न, प्रचलित, विनत, विद्युत् हत, विरूढ, दलित तथा सन्न (?) आदि में सब जगह की औषधियों को लाकर शान्ति कर्म कराना चाहिए और विधिवत् हवन कर्म करके ब्राह्मणों से स्वस्तिवाचन कराना चाहिए ॥ ३५-३६ ॥

**स्थूणामल्लकपृष्ठवंशानां भङ्गे शान्तिविधिः**

**१. स्थूणिकाभङ्गफलकथनम्**

**स्थूणिका भज्यते यस्य कीर्तिस्तस्योपहन्यते ॥ ३६ ॥**
**चन्द्रसूर्यौ यजेत् तत्र ततः शाम्यति पातकम् ।**
**तद्विधं वृक्षमानीय पुनस्तां प्रति कारयेत् ॥ ३७ ॥**
**एवं कृते सुखी स स्यात्कीर्तिश्चायुर्ध्रुवा भवेत् ।**

**१. स्थूणिका भङ्ग का फल**—जिस गृह की स्थूणिका टूट जाती है उस गृह के स्वामी की कीर्ति नष्ट हो जाती है । इस दोष से निवृत्यर्थ चन्द्रमा तथा सूर्य इन दोनों की पूजा अर्चना करनी चाहिए, तब वह दोष समाप्त हो जाता है और उसी प्रकार का वृक्ष पुनः लाकर उस स्थूणिका की प्रतिकृति बनवानी चाहिए । ऐसा करने पर गृहस्वामी सुख प्राप्त करता है और उसकी कीर्ति एवं आयु ध्रुव हो जाती है ॥ ३७-३८ ॥

**२. मल्लकभङ्गफलकथनम्**

**मल्लको भज्यते यस्य पौरुषं तस्य हन्यते ॥ ३८ ॥**
**इष्टानभसनक्षत्रं (?) प्रायिश्चत्तं समाचरेत् ।**
**तद्विधं वृक्षमानीय प्रतिकुर्वीत मल्लकम् ॥ ३९ ॥**
**एवं कृत्वा सुखी स स्याद् बलं चास्याभिवर्धते।**

**२. मल्लकभङ्ग का फल**—जिस गृह का 'मल्लक' टूट जाता है उसका पौरुष समाप्त हो जाता है । अतः शुभ नक्षत्र में उस दोष का प्रायश्चित्त करना चाहिए और उसी प्रकार का वृक्ष पुनः लाकर मल्लक की दूसरी प्रतिकृति बनानी चाहिए । ऐसा करने से वह गृहस्वामी सुख प्राप्त करता है और उसक बल बढ़ता है ॥ ३८-४० ॥

**३. पृष्ठवंशभङ्गफलकथनम्**

**पृष्ठवंशस्य भङ्गेन गृही बन्धमवाप्नुयात् ॥ ४० ॥**
**राजराजं यजेत् तत्र प्रायश्चित्तं तथाचरेत् ।**

**सुखी भवति तत् कृत्वा सर्वतश्चाभिवर्धते ॥ ४१ ॥**
**सर्वेषु स्वस्ति वाच्याश्च ब्राह्मणा दक्षिणाक्षतैः ।**

**३. पृष्ठवंशभङ्ग का फल**—'पृष्ठवंश' के भङ्ग होने से भवन स्वामी बन्धन को प्राप्त करता है । ऐसे दोष के निवारणार्थ उसे कुबेर की पूजा करनी चाहिए और प्रायश्चित्त होम करना चाहिए । ऐसा करने से वह सुख प्राप्त करता है और उसकी विविध प्रकार से समृद्धि होती है । इन सब प्रायश्चित्त कर्म में ब्राह्मणों को दक्षिणा देनी चाहिए और स्वस्तिवाचन कराकर अक्षतों से शान्ति करानी चाहिए ॥ ४०-४२ ॥

### ४. वारणभङ्गे फलकथनम्

वारणसंग्रहस्थूणयोपधिकायतुलानां भङ्गे तद्विधिः

**वारणो भज्यते यस्तु ज्येष्ठं पुत्रं स (वाज्य?बाध)ते॥ ४२ ॥**
**पृथ्वीधरं यजेत् तत्र प्रायश्चित्तं तथाचरेत् ।**
**तद्विधं वृक्षमानीय पुनस्तं प्रतिकारयेत् ॥ ४३ ॥**
**सुखी भवति कृत्वैवं पुत्रैश्चापि विवर्धते ।**

**४. वारणभङ्ग का फल**—जिस गृहपति का 'वारण' टूट जाता है इस उपद्रव से उसका ज्येष्ठ पुत्र दुखित होता है । तब 'पृथ्वीधर' की पूजा करनी चाहिए और प्रायश्चित्त कर्म करना चाहिए । फिर उसी प्रकार का पुनः वृक्ष लाकर उस वारण की प्रतिकृति बनवानी चाहिए । ऐसा करने पर वह गृहस्वामी सुख प्राप्त करता है और पुत्र-पौत्रों से वृद्धिगत होता है ॥ ४२-४४ ॥

### ५. संग्रहभङ्गे फलकथनम्

**संग्रहो भज्यते यस्तु कुलज्येष्ठं स(वार्ध?बाध)ते ॥४४॥**
**पितॄन् देवान् यजेत् तत्र प्रायश्चित्तं तथाचरेत् ।**
**सुखी भवति कृत्वैवं प्रीयन्ते पितरस्तथा ॥ ४५ ॥**

**५. संग्रहभङ्ग का फल**—यदि 'संग्रह' टूट जाता है तो उससे गृहस्वामी के कुल का ज्येष्ठ व्यक्ति दुःखित या पीड़ित होता है । अतः शान्ति के लिए पितृदेवों की पूजा करनी चाहिए और प्रायश्चित्त होम करना चाहिए । ऐसा करने पर वह सुख प्राप्त करता है और उसके पितृजन प्रसन्न होते हैं ॥ ४४-४५ ॥

### ६. स्थूणाभङ्गे फलकथनम्

**स्थूण्यं तु भज्यते यस्य तनयस्तस्य वाध्यते ।**
**देवानेव यजेत् तत्र प्रायश्चित्तं तथाचरेत् ॥ ४६ ॥**

तद्विधं वृक्षमानीय तत् स्थौण्यं प्रति कारयेत् ।
सुखी भवति कृत्वैवं पुत्रैश्चापि विवर्धते ॥ ४७ ॥

**६. स्थूणाभङ्ग का फल**—जिस गृहस्वामी के गृह का (स्थूणा) खूँटा टूट जाता है उसका पुत्र रोग आदि से पीड़ित होता है, उसे प्रायश्चित्त होम करना चाहिए और उस प्रकार का वृक्ष पुनः लाकर उस (स्थौण्य) खूँटे की प्रतिकृति बनवानी चाहिए । इस प्रकार शान्ति कर्म करने पर सुख प्राप्त करता है और सभी प्रकार से पुत्र-पौत्रों से वृद्धि को प्राप्त करता है ॥ ४६-४७ ॥

### ७. उपधीभङ्गे फलकथनम्

उपधी व्यथते यत्र तत्रामात्यो विनश्यति ।
यजेत वासवं तत्र प्रायश्चित्तं तथाचरेत् ॥ ४८ ॥
आनीय तद्विधं वृक्षमुपधिं प्रति कारयेत् ।
एवं कृते भवेत् सौख्यममात्यैश्च विवर्धते ॥ ४९ ॥

**७. उपधीभङ्ग का फल**—जहाँ पर 'उपधी' टूट जाती है उस देश के राजा के (अमात्य) मन्त्री को भय प्राप्त होता है । अतः उपधीभङ्ग पर 'इन्द्र' की पूजा करनी चाहिए और प्रायश्चित्त होम करना चाहिए और उसी प्रकार का वृक्ष पुनः लाकर दूसरी 'उपधी' बनाकर लगाना चाहिए । इस प्रकार शान्ति कर्म करने पर राजा को सुख प्राप्त होता है और मन्त्रियों से वह वृद्धि को प्राप्त करता है ॥ ४८-४९ ॥

### ८. कायभङ्गे फलकथनम्

कायस्तु व्यथते यस्य प्रेष्यस्तस्योपहन्यते ।
यक्षं तत्र यजेद् देवं प्रायश्चित्तं तथा चरेत् ॥ ५० ॥
तद्विधं काष्ठमानीय कायं तं प्रति कारयेत् ।
एवं कृते सुखी स स्यात् प्रेष्यैरपि विवर्धते ॥ ५१ ॥

**८. कायभङ्ग का फल**—जिस गृह का 'काय' व्यथित होता है उस गृहस्वामी का (प्रेष्य) नौकर नाश को प्राप्त होता है । अतः वहाँ पर यक्षदेव की पूजा करके शान्ति कर्म एवं प्रायश्चित्त होम आदि करना चाहिए और उसी प्रकार की लकड़ी पुनः लाकर 'काय' की प्रतिकृति बनवाकर लगानी चाहिए । ऐसा शान्ति कर्म करने पर वह गृहस्वामी सुखी होता है और नौकरों से वृद्धि को प्राप्त करता है ॥५०-५१ ॥

### ९. तुलाभङ्गे फलकथनम्

तुला तु व्यथते यस्य व्यथतेऽस्य कुटम्बिनी ।

यजेत् मेदिनीं तत्र प्रायश्चित्तं तथाचरेत् ॥ ५२ ॥

**९. तुलाभङ्ग का फल**—जिस गृह की 'तुला' व्यथित होती है उसकी गृहणी कष्ट में पड़ जाती है । अतः 'मेदिनी' की पूजा अर्चना करके गृहस्वामी को प्रायश्चित्त कर्म करना चाहिए ॥ ५२ ॥

**तद्विधं वृक्षमानीय स्थापयेत् तां स्वलङ्कृताम् ।**
**ततस्त्वन्याः क्रियाः पश्यन् कारयेन्मतिमान् नरः ॥ ५३ ॥**
**वधूमिव नवैर्वस्त्रैः प्रतिच्छाद्य स्वलङ्कृताम् ।**
**ब्राह्मणान् वाचयेत् स्वस्ति ततस्तां प्रति कारयेत् ॥ ५४ ॥**
**सुखी भवति कृत्वैवं धनैर्नित्यं विवर्धते ।**

तदनन्तर बुद्धिमान् गृहस्वामी निरीक्षण करता हुआ और भवन निर्माण की अन्य क्रियाओं को करावे, उसे पुनः वधू के समान सजाकर फिर नवीन वस्त्रों से उसे आच्छादित कर ब्राह्मणों से स्वस्तिवाचन करवाने के बाद उस तुला की प्रतिकृति बनवानी चाहिए । ऐसा करने पर गृह-स्वामी सुखी भी होता है और धनधान्य से वृद्धि को भी प्राप्त करता है ॥ ५३-५५ ॥

### १०. कर्णिकाभ्यन्तरस्थूणाशालापादभङ्ग फलकथनम्

**कर्णिकास्वान्तरस्थूणाशालापादोऽथ भज्यते ॥ ५५ ॥**
**तद्गृही दुःखमाप्नोति तस्मिन्नुत्पातलक्षणे ।**

**१०. कर्णिकाभ्यन्तरस्थूणादिभङ्ग का फल**—कर्णिकाओं में खूँटा अथवा शालापाद के टूट जाने पर गृहस्वामी इस भङ्ग दोष के उत्पात से दुःख प्राप्त करता है ॥ ५५-५६ ॥

### कर्णिकाभ्यन्तरस्थूणाशालापादयुगतुलापादादीनां भङ्गे तद्विधिः

**आनीय स्थपतिं तत्र प्रज्ञावन्तं बहुश्रुतम् ॥ ५६ ॥**
**तत्र वास्तुविभागेन यो देवः स्याद् विनिश्चितः ।**
**तस्मै देवाय जुहुयात् प्रायश्चित्तं च कारयेत् ॥ ५७ ॥**
**सुखी भवति कृत्वैवं सर्वतश्चाभिवर्धते ।**

अतः शास्त्र के जानकार विद्वान् स्थपति को बुलाकर वास्तु-विभाग से जिन देव की शान्ति का निश्चित किया जावे, उसको आहुति देकर प्रायश्चित्त करना चाहिए । ऐसा करने से गृहस्वामी सुख प्राप्त करता है और अनेक प्रकार से वृद्धिङ्गत होता है ॥ ५६-५८ ॥

### ११. युगव्यथन फलकथनम्

**युगं तु व्यथते यत्र तत्र स्यात् पशुपीडनम् ॥ ५८ ॥**
**यजेत् तस्मिन्नीशानं प्रायश्चित्तं च कारयेत् ।**
**तद्विधं वृक्षमानीय युगं तत् प्रतिकारयेत् ॥ ५९ ॥**
**एवं कृते सुखं तस्य पशुवृद्धिश्च जायते ।**

**११. युगभङ्ग का फल**—जहाँ पर 'युग' (= जूआ) भङ्ग हो जाता है वहाँ पर पशुओं में रोग आदि पीडन कहा गया है । अतः ईशानदेव की पूजा करके गृहस्वामी को प्रायश्चित्त कर्म करना चाहिए और उसी प्रकार का वृक्ष पुनः लाकर 'युग' की प्रतिकृति बनाकर लगानी चाहिए । ऐसा शान्तिकर्म करने पर गृहस्वामी को सुख प्राप्त होता है और उसके पशु वृद्धि को प्राप्त करते हैं ॥ ५८-६० ॥

### १२. तुलापादभङ्ग फलकथनम्

**तुलया अगयोर्वापि (?) पादो यस्य प्रभज्यते ॥ ६० ॥**
**आयुर्हानिर्भवेत् तत्र बलदेवं प्रपूजयेत् ।**
**प्रायश्चित्तं ततः कृत्वा पुनस्तं प्रति कारयेत् ॥ ६१ ॥**
**सुखी भवति कृत्वैवं कुटुम्बी शान्तिकं च तत् ।**

**१२. तुलापादभङ्ग का फल**—तुला अथवा अगय (?) पाद जिस गृह का टूट जाता है उस भङ्ग दोष से गृहस्वामी की आयु-हानि कही गयी है । ऐसी स्थिति में कृष्ण के बड़े भाई बलदाऊ जी की पूजा करनी चाहिए और प्रायश्चित्त कर्म करने के बाद उस तुला की प्रतिकृति का पुनः निर्माण करना चाहिए । इस शान्ति-कर्म से वह गृहस्वामी सुख प्राप्त करता है ॥ ६०-६२ ॥

### १३. माहेन्द्रादीनां द्वारवेध फलकथनम्

**द्वाराङ्गं यस्य माहेन्द्रं हिंस्यते नवकर्मणि ॥ ६२ ॥**
**इन्द्रं तत्र यजेद् देवं प्रायश्चित्तं तथाचरेत् ।**
**गृहक्षतस्य द्वाराङ्गे पूजयेद् यममेव त(त्?)म् ॥ ६३ ॥**
**पुष्पदन्तस्य द्वाराङ्गे वरुणं तत्र पूजयेत् ।**
**द्वाराङ्गं यस्य भल्लाटं हिंस्यते नवकर्मणि ॥ ६४ ॥**
**सोमं तत्र यजेद् देवं प्रायश्चित्तं समाचरेत् ।**
**सुखी भवति कृत्वैवं कुटुम्बी शान्तिकं च तत् ॥ ६५ ॥**

**१३. माहेन्द्र आदि चार द्वारों के वेध का फल**—१. नवीन गृह कर्म में

जिसका **'माहेन्द्र'** नामक द्वार नष्ट होकर टूट-फूट जाता है उसे इन्द्रदेव की पूजा अर्चना करके प्रायश्चित्त कर्म करना चाहिए । २. **'गृहक्षत'** नामक द्वार के भङ्ग होने पर 'यम' की पूजा करनी चाहिए । ३. **'पुष्पदन्त'** नाम के द्वार के टूट-फूट जाने पर गृहस्वामी को 'वरुण' की पूजा करनी चाहिए । ४. नवीन कर्म में जिस गृह का **'भल्लाट'** नामक द्वारा भग्न हो जाता है, वहाँ चन्द्रमा की पूजा करके प्रायश्चित्त होम करना चाहिए । अत: इस शान्ति कर्म को करने से सभी कुटुम्बीजनों को सुख प्राप्त होता है ॥ ६२-६५ ॥

### १४. प्रधानस्थूणाग्र-वक्रतादिषु फलम्

**स्थूणाराजस्य यस्याग्रं वक्रं दक्षिणतो भवेत् ।**
**शरीरं व्यथते तत्र प्रतिसंवत्सरं स्थिरम् ॥ ६६ ॥**
**पृष्ठतो दीर्घशोकः स्यादुत्तरेण धनक्षयः ।**
**पूर्वतो राजदण्डः स्यात् तस्मात् तद् ऋजु शस्यते ॥ ६७ ॥**

**१४. प्रधानस्थूणा के टेढ़े होने का फल**—जिस गृह के 'स्थूणाराज' (= प्रधान स्थूणा) का अग्रभाग दाहिनी ओर झुककर टेढ़ा हो जाता है वहाँ पर गृहस्वामी को निश्चय ही प्रतिवर्ष शारीरिक पीड़ा प्राप्त होती है । बाद में मृत्यु आदि से दीर्घशोक, उत्तर दिशा में झुकाव से धन-क्षय और पूर्व दिक् में झुकाव से राज-दण्ड प्राप्त होता है । अत: वास्तुविदों द्वारा उस स्थूणाराज के अग्रभाग को सीधा (ऋजु) बनाना ही कहा गया है ॥ ६६-६७ ॥

### विशेषतश्चतुर्णां तुलादीनां वास्तुमुख्याङ्गानां हिंसने शान्तिविधानकथनम्

**चत्वार्यङ्गानि हिंस्यन्ते शरीरा ये च वेश्मनः ।**
**तुला वा पृष्ठवंशो वा धार(ण्यां?णी) चोत्तराम्बरः ॥ ६८ ॥**
**उक्तांस्तत्र बलीन् कुर्यात् प्रायश्चित्तं तथाचरेत् ।**
**एवं धन्यं शिवं पुष्टिप्रजावृद्धिकरं भवेत् ॥ ६९ ॥**

**तुला आदि वास्तु के मुख्य अङ्ग के दोष का फल**—जिस घर के चार अङ्ग—१. तुला, २. पृष्ठवंश, ३. धारणी अथवा ४. उत्तराम्बर शास्त्र सम्मत निर्मित न होकर बिगड़ जाते हैं वहाँ पर पहले लोक में कहे गये पूजा-विधान के अनुसार शान्ति कर्म एवं प्रायश्चित्त होम करना चाहिए । ऐसा करने से उसे धन-धान्य, माङ्गलिक संवाद एवं पुष्टिप्रद सन्तान प्राप्त होती है और वह गृहस्वामी वृद्धि को प्राप्त करने वाला होता है ॥ ६८-६९ ॥

इत्थं निमित्तानि गृहाश्रितानि
ज्ञात्वा प्रदृष्टाञ् शकुनांश्च सर्वान् ।
शान्तिं प्रकुर्वन् पृथगुक्तरूपां
प्राप्नोति कीर्तिं सुखमर्थमायुः ॥ ७० ॥

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे शान्तिकर्मविधिर्नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥**

...❀...

इस प्रकार से गृह-सम्बन्धी सभी दोष के कारणों (= निमित्तों) को जानकर और पूर्वोद्दिष्ट सभी शुभ शकुनों को देखकर अलग-अलग पूर्व प्रतिपादित शान्तिकर्मों का विधान करते हुए गृहस्वामी कीर्ति, सुख, धन और आयु को प्राप्त करता है ॥ ७० ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'शान्तिकर्मविधि' नामक बयालिसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ४२ ॥**



# अथ त्रिचत्वारिंशोऽध्यायः

## * द्वारभङ्गफलम्[1] *

## (Good and Bad Effect of Damaged Door)

**उक्तानां नवकर्मविधीनां ग्रामादिष्वप्यतिदेशः**

**यदत्र नवकर्मोक्तं तद् यज्ञेषु गृहेषु च ।**
**ज्ञेयं ग्रामे पुरे वापि नगरे पत्तने तथा ॥ १ ॥**

यहाँ पर जो नवकर्म प्रतिपादित किया गया है वह यज्ञ में, गृह में, ग्राम में, पुर में तथा नगर और पत्तन (= तहसील) में भी जानना चाहिए ॥ १ ॥

**संस्थानमाकृतिर्मानं ह्रासवृद्धी च बाहुषु ।**
**एकमेव विजानीयात् सर्वत्रैव विचक्षणः ॥ २ ॥**

इन सभी के वास्तु कर्म में अर्थात् सर्वत्र ही बाहुओं (मानदण्डों) के संस्थान, आकार, मान और ह्रास तथा वृद्धि को विचक्षण स्थपति एक ही समान करे ॥ २ ॥

**यूपस्यैव निमित्तानि दारुकर्मणि निर्दिशेत् ।**
**पातं पाते विजानीयात् तक्षणं तक्षणेन च ॥ ३ ॥**

यूप (यज्ञ स्तम्भ) की ही लकड़ी के समान गृह बनाने के लिए दारुकर्म में निमित्तों (शकुनों) को देखना चाहिए । पात में पतन समझना चाहिए और तक्षण में तक्षण (= काँट-छाँट) जानना चाहिए ॥ ३ ॥

**यूपोच्छ्रायमिव ब्रूयाद् दारूणामपि चोच्छ्रयम् ।**
**भङ्गेन भङ्गो नि(र्दि?र्द)श्यः समाधिश्च समाधिना ॥ ४ ॥**

यूप की ऊँचाई के समान लकड़ियों की भी ऊँचाई समझनी चाहिए । उनके

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह छत्तीसवाँ अध्याय है ।

भङ्ग से भङ्ग (damage) और समाधि से समाधि (concentration) निर्दिष्ट की जानी चाहिए ॥ ४ ॥

**नवकर्मणि स्निग्धत्वादिगुणयुक्तेषु तद्विहीनेषु च द्रव्येषु फलम्**

**नवकर्मणि यत् स्निग्धं सुगन्धिं प्रियदर्शनम् ।**
**गम्येहरं (?) मनुष्याणां धन्यं तदभिनिर्दिशेत् ॥ ५ ॥**
**पुरं वा यदि वा ग्रामो गृहं वा यदि निष्प्रभम् ।**
**आयासबहुलं तद्धि तादृशैर्लक्षणैर्भवेत् ॥ ६ ॥**

**नवीन कर्म में गुणयुक्त द्रव्य के प्रयोग का फल**—नवीन कर्म में जो वस्तु (= द्रव्य) स्निग्ध अर्थात् सुश्लिष्ट, सुगन्धित तथा प्रियदर्शन हो वह मनुष्यों के लिए धन्य कहा गया है । यदि पुर या ग्राम अथवा गृह निष्प्रभ मालूम पड़े तो उसे इस प्रकार के लक्षणों से युक्त कर गृहस्वामी के लिए आयास (परिश्रम) बहुल समझना चाहिए ॥ ५-६ ॥

**परिध्वस्तोपमं रूक्षं नवकर्मणि यद् भवेत् ।**
**भ्रमं रोगं च शोकं च तस्मिन् वेश्मनि निर्दिशेत् ॥ ७ ॥**

नवीन कर्म में जो वास्तु परिध्वस्तोपम (उजड़ा हुआ खण्डहर सा) तथा रुक्ष (= ढढ्ढा) प्रतीत होता है तो उस वेश्म में भ्रम, रोग तथा शोक अवश्यम्भावी समझना चाहिए ॥ ७ ॥

**जनेन च यदाकीर्णं निश्छायमिव ल(क्ष?)क्ष्यते ।**
**कुटुम्बी तत्र षण्मासान् नात्र जीवेन्न संशयः ॥ ८ ॥**

मनुष्यों से व्याप्त होने पर भी जो भवन निश्छाय अर्थात् कान्ति विहीन दिखलाई पड़े वहाँ पर गृहस्वामी छह महीने तक भी जीवित नहीं रहता है, इसमें संशय नहीं ॥ ८ ॥

**यच्छून्यमप्यशून्याभं वेश्म वा यदि वा पुरम् ।**
**सर्वकामगुणैर्युक्तं ध(नं?न्यं) तदभिनिर्दिशेत् ॥ ९ ॥**

जो वेश्म (= गृह) अथवा पुर शून्य (= कान्तिहीन) होता हुआ भी अशून्य सा कान्तिमान् लगता हो वह सब कामनाओं और गुणों से युक्त धन्य गृह समझना चाहिए ॥ ९ ॥

**पूर्वादिषु नगरभागेषु रम्येषु सत्सु राज्ञः फलम्**

**पूर्वो नगरभागश्चेद् रम्यः स्यात् प्रियदर्शनः ।**

**प्रियभार्या मनःस्वास्थ्यं धनं धान्यं च भूपतेः ॥ १० ॥**

**नगर की रम्यता का फल**—नगर का पूर्व भाग यदि रम्य तथा प्रियदर्शन दिखलाई पड़े तो राजा के लिए प्रिय भार्या, मनः स्वास्थ्य, धन और धान्य प्राप्त होते हैं ॥ १० ॥

**पूर्वदक्षिणभागश्चेत् पुरस्य प्रियदर्शनः ।**
**महद् यशस्तदाप्नोति राजा हेम च पुष्कलम् ॥ ११ ॥**

पुर का यदि पूर्व-दक्षिण भाग प्रियदर्शन हो तो राजा को महद् यश प्राप्त होता है और पुष्कल स्वर्ण की भी प्राप्ति होती है ॥ ११ ॥

**तेषु रम्येषु तस्य फलम्**

**पुरस्य दक्षिणो भागो यदा रम्यस्तदा भवेत् ।**
**राज्ञः सेनापतिप्राप्तिर्धनं धान्यं च पुष्कलम् ॥ १२ ॥**

**पुर के मनोहर होने का फल**—पुर का दक्षिण भाग जब रमणीय प्रतीत होता है तो राजा को सेनापति की प्राप्ति होती है तथा पुष्कल धन-धान्य भी प्राप्त होता है ॥ १२ ॥

**रमणीयो यदा भागः पुरदक्षिणपश्चिमः ।**
**अर्थसम्पत् तदा राज्ञः प्रजावृद्धिश्च जायते ॥ १३ ॥**

पुनः पुर का दक्षिण-पश्चिम भाग यदि रमणीय प्रतीत होता है तो राजा की अर्थ सम्पत्ति और प्रजा वृद्धि निश्चित है ॥ १३ ॥

**पुरपश्चिमभागेन रमणीयेन पार्थिवः ।**
**पुत्रबान्धवधान्याढ्यः सम्प्राप्नोत्युन्नतिं पराम् ॥ १४ ॥**

यदि नगर का पश्चिम भाग बाग बगीचों आदि से रमणीय होता है तो राजा पुत्रों तथा बन्धु-बान्धवों सहित धन धान्य आदि से सम्पन्न होता है और उत्कृष्ट उन्नति को भी प्राप्त करता है ॥ १४ ॥

**पश्चिमोत्तरभागे तु रमणीये नराधिपः ।**
**प्रेष्यैः पुत्रैर्वाहनैश्च वृद्धिमेत्युत्तरोत्तराम् ॥ १५ ॥**

नगर के पश्चिमोत्तर भाग के रमणीय होने पर राजा की भृत्यों, पुत्रों और वाहनों से उत्तरोत्तर वृद्धि होती है ॥ १५ ॥

**उत्तरे रमणीये तु पुरभागे नरेश्वरः ।**

**शत्रून् विजयते सर्वान् वर्धते च पुरोहितः ॥ १६ ॥**

नगर के उत्तर भाग के रमणीय होने पर राजा सब शत्रुओं पर विजय प्राप्त करता है और पुरोहित की भी वृद्धि होती है ॥ १६ ॥

**यदि पूर्वोत्तरो भागः पुरस्य प्रियदर्शनः ।**
**तत्राभ्युत्तरमानन्दं क्षिप्रं राज्ञो विनिर्दिशेत् ॥ १७ ॥**

यदि नगर का पूर्वोत्तर भाग सुन्दर होता है तो वहाँ पर राजा को शीघ्र ही एवं उत्तरोत्तर आनन्द प्राप्त होता है ॥ १७ ॥

**निष्पन्नस्य पुरादेर्यो भागो न स्यान्मनोरमः ।**
**तस्य तस्यैव भागस्य परिहाणिं विनिर्दिशेत् ॥ १८ ॥**

अतः नगर (= पुर) आदि के निर्मित हो जाने पर उसका जो भाग सुन्दर दृष्टिगोचर न हो उसके उसी भाग की क्षति समझनी चाहिए ॥ १८ ॥

**नवे यदि पुरद्वारे कपाटं प्रविशीर्यते ।**
**स्त्रीनामधेयमन्यद् वा स्त्रीनाशं तद् विनिर्दिशेत् ॥ १९ ॥**

यदि नवीन नगर के द्वार में किवाड़ टूट जाते हैं तो उससे स्त्रीनाम वाली किसी वस्तु का अथवा स्वयं स्त्री पीड़ा समझना चाहिए ॥ १९ ॥

### देवागारपुरद्वारादिषूत्पन्नानि शुभाशुभानि राज्ञ एवेति कथनम्

**देवागारे पुरद्वारे प्राकाराट्टालकेषु च ।**
**हस्तिशालाश्वशालासु रथशाला(स्त?)स्वथापि वा ॥ २० ॥**
**कोष्ठागारायुधागारे निमित्तं तु शुभाशुभम् ।**
**यदि किञ्चित् प्रदृश्येत राज्ञस्तदभिनिर्दिशेत् ॥ २१ ॥**

देव मन्दिर में, नगर के द्वार में, चहारदिवारी में, अट्टालिकाओं में, हस्ति-शालाओं में, अश्वशालाओं में, रथशालाओं में, कोष्ठागार एवं आयुधागार में यदि कोई शुभ अथवा अशुभ लक्षण दिखाई पड़े तो शास्त्रज्ञ स्थपति राजा को उस दोष को निर्दिष्टकर देना चाहिए ॥ २०-२१ ॥

### उक्तेषु स्थलविशेषेषु नवकर्मण्यूर्ध्ववंशार्गलादीनां मुख्याङ्गानां भङ्गे राज्ञः फलम्

**भङ्गो यत्रोर्ध्ववंशस्य तत्र राजा विनश्यति ।**

**ऊर्ध्ववंश भग्न होने का फल**—जहाँ 'ऊर्ध्ववंश' का भङ्ग दृष्टिगोचर हो तो वहाँ का राजा विनाश को प्राप्त होता है ॥ २२ ॥

**अर्गलापीलिकाकुञ्चीभङ्गे च नवकर्मणि ॥ २२ ॥**

**तद्भङ्गे ग्रामे सति फलम्**

**ग्रामे नश्यन्ति चैतानि तदा ग्रामो विनश्यति ।**

**दिगुत्थिते गृहोत्थिते च तस्मिन् फलभाजः**

**दिगुत्थितं तु राष्ट्राणां गृहार्थेषु कुटुम्बिनाम् ॥ २३ ॥**

**अर्गला, पीलिका एवं कुञ्ची भङ्ग होने का फल**—नवीन गृहनिर्माण में अर्गला, पीलिका और कुञ्ची (कुण्डी) भङ्ग होने पर यदि ग्राम में इनका भङ्ग होता है तो ग्राम विदीर्ण होता है और यह भङ्ग राज्यों के लिए एकाएक अशुभ उपस्थित करता है ॥ २२-२३ ॥

**नवकर्मणि यत्किञ्चित् भज्यते यदि वा नमेत् ।**
**वि(ध्व)स्ते वा स्फुटे वापि कुटुम्बिमरणं ध्रुवम् ॥ २४ ॥**

**नवनिर्माण में टूट-फूट अपशकुन का सूचक**—वही कुटुम्बियों के लिए गृह निर्माण में भी अपशकुन का सूचक है । नवीन वास्तु कर्म में यदि कोई निर्मित वस्तु टूट-फूट जाती है तो वह दोष गृहस्वामी के कुटुम्बी जनों को निश्चित ही पीड़ित करता है ॥ २४ ॥

**इह सर्वनिमित्तेषु शुभाशुभानां फलानां कालनियमः**

**फलं सर्वनिमित्तेषु शुभं वा यदि वाशुभम् ।**
**संवत्सरं परं ग्राह्यं नवकर्मकृते गृहे ॥ २५ ॥**

**वास्तुनि पुराणत्वव्यपदेशस्य कालः**

**परिसंवत्सरान्ते च पुराणमिति निर्दिशेत् ।**

**शुभाशुभ फल का काल**—नव निर्मित गृह में सभी निमित्तों में शुभ अथवा अशुभ फल का काल अधिक से अधिक एक साल के भीतर लेना चाहिए । क्योंकि एक साल के बाद तो उसे पुराना निर्दिष्ट कर देना चाहिए ॥ २५-२६ ॥

**नवकर्मणि निष्ठिते तुम्बिकादीनां भङ्गे फलम्**

**तुम्बिका भज्यते यत्र नवकर्मणि निष्ठिते ॥ २६ ॥**
**श्रेष्ठा तु महिला तत्र षड्भिर्मासैर्विनश्यति ।**

**नवकर्म में तुम्बिका भङ्ग का फल**—नवीन कर्म के सम्पन्न हो जाने पर जहाँ पर तुम्बिका टूट जाती है तो वहाँ की श्रेष्ठ महिला छह महीनों में विनाश को प्राप्त होती है ॥ २६-२७ ॥

**एवमेव नवं यस्य सदनं तु विनश्यति ॥ २७ ॥**
**प्रेष्यदासादिविश्वासात् तद् विनाशयति ध्रुवम् ।**

इसी प्रकार से जिसका नवीन सदन विनष्ट हो जाता है, वह प्रेष्य (सेवक) तथा दास आदि के विश्वास से हीन होकर नाश को प्राप्त हो जाता है ॥ २७-२८ ॥

पृष्ठवंशभग्ने फलम्

**पृष्ठवंशो नवो यस्य नवकर्मणि भिद्यते ॥ २८ ॥**
**कुटुम्बी म्रियते तत्र गृहं संवत्सरात् परम् ।**
**प्रेष्याश्चात्र विनश्यन्ति दीर्यमाणे विशेषतः ॥ २९ ॥**

**पृष्ठवंश के भग्न होने का फल**—नवीन भवन बनते समय यदि नवीन पृष्ठ वंश फट जाता है तो वहाँ के कुटुम्बीजन एक साल के अन्दर ही नष्ट हो जाते हैं और यदि वह विशेष रूप से छिन्न-भिन्न हो जाए तो नौकर मर जाते हैं ॥ २८-२९॥

लुमामुण्डकानुपूर्वमुण्डगोधानागपाशाख्यानां
गृहद्रव्यानां भङ्गे फलम्

**लुमासु भिद्यमानासु कन्यामरणमादिशेत् ।**
**मुण्डकेषु विनष्टेषु सुहृदस्य विनश्यति ॥ ३० ॥**

**लुमामुण्डकादि के भङ्ग का फल**—नवीन भवन बनते समय लुमाओं (= ढलुआ छत) के टूटने पर गृहस्वामी की कन्या का मरण कहा गया है और मुण्डकों के नष्ट होने पर सुहृद् का विनाश होता है ॥ ३० ॥

**अनुपूर्वेषु भिन्नेषु पुत्राणां मरणं ध्रुवम् ।**
**विपत्तौ मुण्डगोधानां माता तस्य विनश्यति ॥ ३१ ॥**

अनुपूर्वों के फट जाने पर पुत्रों का मरण ध्रुव समझना चाहिए और मुण्ड गोधाओं की विपत्ति में कुटुम्बी की माता का विनाश कहा गया है ॥ ३१ ॥

**नागपाशकभङ्गे तु भृत्यानां मरणं भवेत् ।**
**कपाटे भ्रातृमरणमर्गलायां स्त्रिया वधः ॥ ३२ ॥**

नागपाशक (= खूँटी) के भङ्ग होने पर भृत्यों का मरण बताया गया है । कपाट भग्न में भ्रातृ मरण और अर्गला (= कुण्डी) टूटने में स्त्री मरण होता है ॥ ३२ ॥

**कपाटस्यार्गलापार्श्वस्य तोरणस्य वास्तुमध्यस्य सोपानस्य वेदिकायाः गवाक्षस्य पट्टस्तम्भस्य च विनाशे फलम्**

**सुतस्य चार्गलापर्श्वे विनष्टे मरणं भवेत् ।**
**द्वारबन्धे विनष्टे तु शीघ्रं कुर्यात् कुलक्षयम् ॥ ३३ ॥**

अर्गला के पार्श्व के विनष्ट होने पर पुत्र का मरण कहा गया है और द्वार वंध के विनष्ट होने पर तो शीघ्र कुलक्षय समझना चाहिए ॥ ३३ ॥

**इन्द्रकीलो दृढो यस्य भङ्गमायाति मूलतः ।**
**सपुत्रपशुवर्गस्य तस्य ब्रूयात् कुलक्षतिम् ॥ ३४ ॥**

जिसका दृढ़ इन्द्रकील मूल से फट जाता है उसके पुत्र सहित पशुवर्ग की कुल क्षति बतायी गयी है ॥ ३४ ॥

**तोरणं भज्यते यस्य द्रव्यं तस्य विनश्यति ।**
**गृहभर्तुश्च मरणं त्रिदशैरवधारयेत् ॥ ३५ ॥**

तोरण भङ्ग हो जाने पर उस भवन के स्वामी का द्रव्य नष्ट होता है और उस गृहस्वामी की तेरह दिन में ही मृत्यु समझनी चाहिए ॥ ३५ ॥

**वास्तुमध्ये विनष्टे तु कुलवृद्धो विनश्यति ।**
**सोपानं भिद्यते यत्र नवकर्मणि निष्ठिते ॥ ३६ ॥**
**तस्य प्रेष्याश्च गावश्च हिरण्यं च विनश्यति ।**

वास्तु के मध्य भाग में टूटे-फूटे होने पर कुल के वृद्ध का विनाश होता है। नवीन कर्म के सम्पन्न होने पर जहाँ की सीढ़ियाँ (सोपान) भिन्न हो जाती है, उसके नौकर, गौवें और सोना विनाश को प्राप्त होते हैं ॥ ३६-३७ ॥

**वेदिका भज्यते यस्य भार्या तस्य विनश्यति ॥ ३७ ॥**

जिसकी वेदिका फट जाती है उसकी भार्या विनाश को प्राप्त होती है ॥ ३७॥

**गजशुण्डायाः कपोताल्याः स्थपनीयपट्टिकाया विटङ्कस्य तुलायाः शालास्तम्भस्य स्तम्भशीर्षादेश्च भङ्गे फलम्**

**गवाक्षस्तु विनश्येत पट्टस्तम्भोऽपि वा दृढः ।**
**गजशुण्डाथ भिन्नोऽश्वः कपोताल्यथवा नवा ॥ ३८ ॥**
**स्थपनीपट्टिकाश्चैव स्त्रीविनाशं तदादिशेत् ।**

गवाक्ष यदि नष्ट हो जावे अथवा दृढ़ पट्ट-स्तम्भ या गज शुण्ड नष्ट हो जावे

अथवा अश्व या नवीन कपोतालियाँ और स्थपनी पट्टिकाएँ फट जावें तो स्त्री का विनाश समझना चाहिए ॥ ३८-३९ ॥

**विटङ्कस्य तुलाया वधा भङ्गे जाते कथञ्चन ॥ ३९ ॥**
**शालास्तम्भस्य वा नाशे भार्या तस्य विनश्यति ।**

विटङ्क (= कपोताली) के अथवा तुला (स्तम्भ का एक भाग) के किसी प्रकार भङ्ग होने पर अथवा शाल स्तम्भ के विनाश होने पर गृहस्वामी की भार्या नष्ट हो जाती है ॥ ३९-४० ॥

### प्रतिमोकभङ्गवाहिन्यां काशतलकप्रतिच्छन्नप्रासाद मण्डलवलभीनां भङ्गे फलम्

**स्तम्भशीर्षं यदि भ्रंश्येत् स्फुटेत् स्तम्भोऽपि वा दृढः ॥ ४० ॥**
**भज्यते प्रतिमोको वा स्वामिनस्तु वधो भवेत् ।**
**भङ्गे तु भङ्गवाहिन्याः कुलवृद्धवधो भवेत् ॥ ४१ ॥**
**आकाशतलके पुत्राः प्रतिच्छिन्ने कुटुम्बिनः ।**
**विनष्टे च विनश्यन्ति षड्भिर्मासैर्न संशयः ॥ ४२ ॥**

**स्तम्भशीर्ष आदि नष्ट होने का फल**—स्तम्भ का शीर्ष यदि नष्ट हो जावे अथवा फट जावे अथवा वह मजबूत खम्भा ही टूट जावे अथवा प्रतिमोक का भङ्ग उपस्थित हो तो स्वामी का वध होता है । भङ्गवाहिनी अर्थात् जल निर्गम मार्ग के नष्ट होने पर कुल के वृद्ध का वध समझना चाहिए । इसी प्रकार आकाश तलक (= छत) के प्रति छिद्र होने पर पुत्र और कुटुम्बीजन छह महीने के अन्दर नष्ट हो जाते हैं, इसमें कोई संशय नहीं ॥ ४०-४२ ॥

**प्रासादमण्डले भग्ने भग्नासु बलभीषु च ।**
**भार्याकुटुम्बिनस्तस्य नाशमायात्यसंशयः ॥ ४३ ॥**

प्रासाद मण्डल के भग्न होने पर और बलभियों (छत पर चहारदिवाली) के भग्न होने पर गृहस्वामी की भार्या का निस्सन्देह नाश होता है ॥ ४३ ॥

### प्रलीने विलीने विनष्टे च प्रासादे फलम्

**प्रलीनो वा विलीनो वा प्रासादो यस्य भज्यते ।**
**प्रलीने भृत्यमृत्युः स्याद् विलीने तु धनक्षयः ॥ ४४ ॥**

**प्रलीन एवं विलीन प्रासाद के नाश का फल**—'प्रलीन' अथवा 'विलीन'

प्रासाद जब नष्ट हो जाता है तो प्रलीन प्रासाद में नौकर की मृत्यु और विलीन प्रासाद में धनक्षय कहा गया है ॥ ४४ ॥

**मिश्रे विनष्टे प्रासादे हीयन्ते सर्ववृद्धयः ।**
**मरणं वा भवेत् तत्र कुष्ठव्याधिं च निर्दिशेत् ॥ ४५ ॥**

**मिश्र प्रासाद के भग्न होने का फल**—'मिश्र प्रासाद' के भग्न होने पर सभी समृद्धियाँ नष्ट हो जाती हैं अथवा वहीं पर किसी न किसी की मृत्यु होती है अथवा गृहस्वामी कुष्ठ व्याधि से पीड़ित होता है ॥ ४५ ॥

**येषु स्थानेषु भङ्गो वा विनतिर्वा प्रकीर्तिता ।**
**उपद्रुतिर्विघातो वा तेषां फलमपीरितम् ॥ ४६ ॥**

जिन-जिन स्थानों में 'भङ्ग' अथवा 'विनति' कही गई है वहाँ पर कोई-न-कोई उपद्रव अथवा रोग आदि विघातादि दोष जरूर उपस्थित होता है ॥ ४६ ॥

**पूर्वोक्तेषु गृहावयवेषु स्निग्धत्वादिगुणविशिष्टेषु फलम्**

**स्निग्धानि यदि दृश्यन्ते तानि दार्ढ्यान्वितानि च ।**
**धनमायुश्च हर्षञ्च पूर्वोक्तानां तदादिशेत् ॥ ४७ ॥**

**स्निग्धत्वादिगुणविशिष्ट का फल**—दृढ़ता से युक्त यदि वे प्रासाद स्थान सुन्दर दिखलायी पड़ते हैं तो गृहस्वामी को धन आयु एवं हर्ष प्राप्त होता है ॥ ४७ ॥

**कर्णिकाभ्यन्तरस्थूणाशालापादहानौ फलम्**

**कर्णिकाभ्यन्तरी स्थूणा शालापादोऽथ हीयते ।**
**यदि तद् दुःखमाप्नोति गृहभर्ता न संशयः ॥ ४८ ॥**

**स्थूणा भग्न होने का फल**—कर्णिका के बीच की 'स्थूणा' अथवा 'शालापाद' यदि नष्ट हो जाता है तो गृहस्वामी निश्चय ही दुःख को प्राप्त करता है, इसमें संशय नहीं ॥ ४८ ॥

**सम्प्रधार्य च मेधावी बलाबलमतन्द्रितः ।**
**निर्दिशन्बलमाप्नोति धनमायुर्यशस्तथा ॥ ४९ ॥**

अतः सावधान चित्त एवं बुद्धिमान् स्थपति इन लक्षणों के बलाबल का विचार करके ही निर्देश देता हुआ बल, धन, आयु और यश की प्राप्ति करता है ॥४९॥

**एवमादिकनिमित्तसूचितं**
**सम्प्रधार्य मतिमान् बलाबलम् ।**

**स्पष्टमादिशति योऽत्र शास्त्रवित्**
**कीर्तिवित्त (ध?)भवनानि सोऽश्नुते ॥ ५० ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे द्वारभङ्गफलं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥**



इस प्रकार से सूचित किये गए निमित्तों (शकुन के लक्षणों) के बलाबल को विचार कर जो बुद्धिमान तथा शास्त्रज्ञ स्थपति गुरु स्पष्ट आदेश करता है वह निश्चय ही इस लोक में यश तथा धन एवं समृद्धि को प्राप्त करता है तथा गृहस्वामी उन भङ्ग (damaged) दोष से रहित भवनों का उपभोग करता है ॥ ५० ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'द्वारभङ्गफल' नामक तिरालिसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ४३ ॥**

# अथ चतुश्चत्वारिंशोऽध्यायः

## * स्थपति-लक्षणम्[1] *

## (The Definition of an Architect)

**स्थापत्यमुच्यतेऽस्माभिरिदानीं प्रक्रमागतम् ।**
**ज्ञातेन येन ज्ञायन्ते स्थपतीनां गुणागुणाः ॥ १ ॥**

अब वास्तु के विवेचन के बाद क्रमप्राप्त चतुर्धा स्थापत्य का यहाँ निरूपण किया जाता है जिसके जानने मात्र से स्थपतियों के गुण एवं उनके दोषों का ज्ञान प्राप्त हो जाता है ॥ १ ॥

### स्थपतेर्लक्षणम्

**शास्त्रं कर्म तथा प्रज्ञा शीलं च क्रिययान्वितम् ।**
**लक्ष्यलक्षणयुक्तार्थशास्त्रनिष्ठो नरो भवेत् ॥ २ ॥**

**स्थपति के लक्षण**—यह स्थापत्य चार प्रकार को होता है—१. शास्त्र, २. कर्म, ३. प्रज्ञा तथा ४. क्रियान्वयन में शील अर्थात् आचरण का होना । इस प्रकार लक्ष्य (उदाहरण) तथा लक्षण के ज्ञान से युक्त एवं शास्त्र में निष्ठा (रुचि) रखने वाला विद्वान् ही स्थपति होता है ॥ २ ॥

### वास्तुशास्त्रस्याष्टाङ्गानि

**सामुद्रं गणितं चैव ज्यौतिषं छन्द एव च ।**
**सिराज्ञानं तथा शिल्पं यन्त्रकर्मविधिस्तथा ॥ ३ ॥**
**एतान्यङ्गानि जानीयाद् वास्तुशास्त्रस्य बुद्धिमान् ।**
**शास्त्रानुसारेणाभ्युद्य लक्षणानि च लक्षयेत् ॥ ४ ॥**

**वास्तुशास्त्र के आठ अङ्ग**—उस शास्त्रवेत्ता स्थपति को १. सामुद्र (सामुद्रिकशास्त्र), २. गणितशास्त्र, ३. ज्योतिषशास्त्र, ४. छन्दस्, ५. शिरा ज्ञान,

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह आठवाँ अध्याय है ।

६. शिल्पशास्त्र (Prosody craft) तथा ७. यन्त्रकर्म (mechenical art) और ८. विधि (the art of implementing the work) वास्तुशास्त्र के इन अङ्गों को जानना चाहिए और उस बुद्धिमान् स्थपति को शास्त्र के अनुसार लक्षणों को समझ कर अपना कार्य सम्पादित करना चाहिए ॥ ३-४ ॥

**स्थपतेः कृत्यविशेषाः**

**प्रसिद्धशास्त्रदृष्टान्तैर्वास्तुज्ञानं प्रसाधयेत् ।**
**वास्तुनः ससिरावंशैर्मर्मवेधैः सुनिश्चितैः ॥ ५ ॥**
**वास्तुद्वारक्षणान् भूयः सर्वान् जानाति शास्त्रतः ।**

**स्थपति के विशेष कर्म**—प्रसिद्ध शास्त्र के प्रायोगिक सिद्धान्तों से विद्वान् स्थपति अपने वास्तु-ज्ञान का परिवर्धन एवं संवर्धन करे । क्योंकि वास्तु पद विन्यास में सुनिश्चित शिरा एवं वंशों आदि के सहित मर्मवेधों के द्वारा वास्तु के अङ्ग-प्रत्यङ्ग को उसे शास्त्रानुसार जानना चाहिए ॥ ५-६ ॥

**शास्त्रमविज्ञाय प्रयोक्तुः स्थपतेर्घातः, अविदुषः स्थपतेर्निन्दा**

**यस्तु शास्त्रमविज्ञाय प्रयोक्ता स्थपतिर्भवेत् ॥ ६ ॥**
**हन्तव्यः स स्वयं राजा मृत्युवद् राजहिंसकः ।**
**मिथ्याज्ञानादहङ्कारी शास्त्रे चैवाकृतश्रमः ॥ ७ ॥**

**प्रयोग-पद्धति के अज्ञानी स्थपति की निन्दा**—जो व्यक्ति शास्त्र को न समझकर कार्य सञ्चालक स्थपति (= गुरु) का ढोंग रचता है, उस राजहिंसक दिखावटी स्थपति को राजा स्वयं, मार डाले क्योंकि ऐसा स्थपति मिथ्या ज्ञान के कारण अहङ्कारी होता है और शास्त्र में परिश्रम भी नहीं करता है ॥ ६-७ ॥

**केवलशास्त्रज्ञस्य केवलकर्मज्ञस्य वा तस्य प्रयोगकाले सम्पद्यमाना दोषाः**

**अकालमृत्युर्लोकस्य विचरेद् वसुधातले ।**
**यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ॥ ८ ॥**
**स मुह्यति क्रियाकाले दृष्ट्वा भीरुरिवाहवम् ।**

**प्रयोग पद्धति न जानकर मात्र कर्म जानने वाले स्थपति का दोष**—वह संसार में लोगों की अकाल मृत्यु के समान विचरण करता है । जो स्थपति केवल शास्त्र को जानता है और कर्म में पारङ्गत नहीं है वह क्रियाकाल में, युद्ध को देखकर मुँह मोड़ लेने वाले डरपोक के समान किङ्कर्तव्यविमूढता को प्राप्त होता है ॥ ८-९ ॥

**केवलं कर्म यो वेत्ति शास्त्रार्थं नाधिगच्छति ॥ ९ ॥**

**सोऽचक्षुरिव नीयेत विवशोऽन्येन वर्त्मसु ।**

फिर जो विद्वान् स्थपति केवल कर्म को ही जानता है और शास्त्र के अर्थ को वस्तुगत्या नहीं समझता है वह दूसरे के द्वारा परवश अन्धे के समान अन्य मार्ग पर ले जाया जाता है ॥ ९-१० ॥

**कर्मविदः स्थपतेर्लक्षणम्**

**कर्म वास्तुविधेः स्थानं मानमुन्मानमेव च ॥ १० ॥**
**क्षेत्रजा(दि?)नि च कर्माणि लुमालेखा(च?)श्चतुर्दश ।**

**स्थापत्य कर्म के ज्ञाता स्थपति का लक्षण**—वस्तुतः वही स्थपति (= गुरु) कर्मवित् एवं कर्म में पारङ्गत होता है जो वास्तु तथा शिल्प एवं चित्र-कर्मों को उचित रूप से जानता है ।

उसे वास्तु शास्त्र (का सम्यक् ज्ञान तथा उसके रेखाचित्रों आदि) में वास्तु विधि (अर्थात् क्रियान्वयन करने की विधि) के (लम्बाई-चौड़ाई आदि) मान (= प्रमाण), उन्मान (= विशिष्ट मान) के साथ-साथ वास्तु क्षेत्र से सम्बन्धित चौदह लुमा लेखा आदि समस्त कर्मों के कौशल में पारङ्गत होना चाहिए ॥ १०-११ ॥

**चतुरो गण्डिकाच्छेदान् वृत्तच्छेदेषु सप्तसु ॥ ११ ॥**
**सुश्लिष्टं सन्धिसन्धानैरधरोत्तरसंयुतम् ।**
**बाह्यरेखान्वितं शुद्धं यो जानाति स कर्मवित् ॥ १२ ॥**

**गण्डिकाच्छेद एवं वृत्तच्छेद**—स्थपति को चतुर्विध गण्डिकाच्छेद एवं सप्तविध वृत्तच्छेद कर्म का ज्ञाता होना चाहिए । जो स्थपति सन्धिकर्म, सन्धानकर्म तथा बाह्य रेखाकर्म आदि के सुश्लिष्ट (परस्पर सम्बद्ध) विशुद्ध वास्तु कृत्य को जानता है वह विद्वान् कारीगर होता है ॥ ११-१२ ॥

**विमर्श—चौदह लुमा लेखा**—वस्तुतः लुमा एवं वितान-रचना शिल्पकला में प्रसिद्ध है । प्रासाद वास्तु में वितान-रचना एवं लुमा-विन्यास (= ढालुआ छत) को प्राचीन भारतीय स्थपतियों का वास्तु-वैदग्ध्य समझा जाता था । इसी प्रकार चतुर्विध गण्डिकाच्छेद का विज्ञान भी (वास्तु में परम निष्णात स्थपतियों की) कला थी । लुमा प्रस्तर कला (छत) में आती है तथा गण्डिका का सम्बन्ध पाषाणकला से है । दोनों ही पुष्पाकृतियों में निर्मेय एवं छेद्य होते हैं । लुमा रचना एवं गण्डिकाच्छेद के समान सप्तविध 'वृत्तच्छेद' भी शिल्पकला में परिकल्पित है ।

**प्रत्युत्पन्नमतित्वप्रशंसनम्**

**शास्त्रकर्मसमर्थोऽपि स्थपतिः प्रज्ञया विना ।**

**फलेयुः कर्मभिरन्याभिः(?) स्यान्निर्मद इव द्विपः ॥ १३ ॥**
**प्रत्युत्पन्नमतिर्यः स्याद् वाह(तः?कः) स्थपतिस्तथा।**
**कर्मकाले न मुह्येत स प्रज्ञानेनोपबृंहितः ॥ १४ ॥**

**प्रतिभा की प्रशंसा**—वास्तुशास्त्र तथा कर्म दोनों (= प्रयोगपद्धति) में पारङ्गत अर्थात् दक्ष होता हुआ भी बिना नवनवोन्मेषशालिनी प्रज्ञा (प्रतिभा) के विद्वान् स्थपति मदहीन हाथी के समान मात्र दर्शनीय ही होता है। जो स्थपति प्रत्युत्पन्नमति (inteligent) होता है, वह अपने प्रज्ञा से कर्मकाल (implementation of work) में संमोह को प्राप्त नहीं होता है ॥ १३-१४ ॥

### प्रज्ञावत एव तस्य सर्वकर्मनिर्वहणक्षमत्वस्थापनम्

**अप्रज्ञेयं दुरालोकं गूढार्थं बहुविस्तरम्।**
**प्रज्ञापोतं समारुह्य प्राज्ञो वास्तुनिरं(धिं) तरेत् ॥ १५ ॥**

अप्रज्ञेय तथा दुरालोक और गूढार्थ एवं बहुविस्तर वाले इस वास्तुरूपी सागर का संतरण प्रज्ञारूपी पोत (जहाज) पर चढ़कर विद्वान् एवं प्रज्ञावान् स्थपति ही सम्पादित कर सकता है ॥ १५ ॥

**विमर्श—अप्रज्ञेय** = प्रतिभाविहीन (fit not to be gauged) **दुरालोक** = दूरदर्शिता (presence of power), **गूढार्थ** = रहस्यमय अर्थ वाला (mystirious) **बहुविस्तरम्** = ज्योतिष आदि अन्य शास्त्र में बहुत विस्तार वाला (highly detailed one)।

### सर्वेषु स्थपतिगुणेषु सत्स्वपि शीलाभावे कर्मवैफल्यस्य विपरीतफलोपनमनस्य च निरूपणम्

**ज्ञानवांश्च तथा वाग्मी कर्मस्वपि च निष्ठितः।**
**एवं युक्तोऽपि न श्रेयान् यदि शीलविवर्जितः ॥ १६ ॥**

**स्थपति के शील की प्रशंसा**—ज्ञानवान्, वाग्मी और कर्मनिष्ठ तथा कर्मकुशल होने पर भी स्थपति श्रेष्ठ नहीं कहलाता, यदि वह शीलवान् अर्थात् शास्त्रनिष्ठा रूप आचार से रहित है ॥ १६ ॥

**रोषाद् द्वेषात् तथा लोभान्मोहाद् रागात् तथैव च।**
**अन्यचिन्त्यत्वमायाति दुःशीलानामविक्षयात् (?) ॥ १७ ॥**

क्रोध से, द्वेष से, लोभ से एवं मोह से और राग से अपनी दुःशीलता के कारण विद्वान् होकर भी वह परित्यक्त हो जाता है ॥ १७ ॥

**शीलवान् पूजितो लोके शीलवान् साधुसम्मतः ।**
**शीलवान् सर्वकर्मार्हः शीलवान् प्रियदर्शनः ॥ १८ ॥**

शीलयुक्त स्थपति लोक में पूजित होता है, शीलवान् स्थपति सज्जनों के द्वारा भी प्रशंसित होता है तथा शीलवान् स्थपति सभी कर्मों के योग्य होता है । ऐसे (= क्रोधादि से रहित) शील सम्पन्न स्थपति का दर्शन प्रियदर्शन कहलाता है ॥ १८ ॥

**शीलाधाने परं यत्नमा(धि?)तिष्ठेत् स्थपतिः सदा ।**
**ततः कर्माणि सिध्यन्ति जनयन्ति शुभानि च ॥ १९ ॥**

शास्त्र में इसलिए स्थपति को शील की प्राप्ति एवं निष्ठा रखने का पूर्ण प्रयत्न करना चाहिये । शील (= शास्त्रनिष्ठा) से ही कर्मों की सिद्धि होती है और शील से ही कर्म कल्याणप्रद होते हैं क्योंकि शीलवान् स्थपतियों के द्वारा ही ये कर्म सिद्ध किए जाते हैं ॥ १९ ॥

### आलेख्याद्यष्टविधकर्मविज्ञानस्याप्यावश्यकता

**तथा चाष्टविधं कर्म ज्ञेयं स्थपतिना सदा ।**
**आलेख्यं लेख्यजातं च दारुकर्म चयस्तथा ॥ २० ॥**
**पाषाणसिद्धहेम्नां च शिल्पं कर्म तथैव च ।**
**एभिर्गुणैः समायुक्तः स्थपतिर्याति पूज्यताम् ॥ २१ ॥**

**स्थपति के आलेख्य आदि आठ कर्म का ज्ञान**—स्थपति को इन आठ कर्मों का ज्ञान आवश्य होना चाहिए—१. आलेख्य (चित्रकारी), २. लेख्यजात अर्थात् लेप कर्म, ३. दारुकर्म (कठपुतली आदि का निर्माण), ४. काष्ठ कला (पच्चीकारी), ५. चय (चुनाई), ६. पत्थर का जानकार, ७. पारा और धातु (सोना आदि) की कारीगरी और ८. शिल्प कर्म इन गुणों के ज्ञाता स्थपति की पूजा होती है ॥ २०-२१ ॥

**स्थापत्यमङ्गैरिदमष्टभिर्य-**
**श्चतुर्विधं वेत्ति विशुद्धबुद्धिः ।**
**स शिल्पिनां संसदि लब्धपूजः**
**परां प्रतिष्ठां लभते चिरायुः ॥ २२ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे स्थपतिलक्षणं नामचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥**

...✿...

इन आठ अङ्गों से युक्त चार प्रकार के स्थापत्य (शास्त्र, कर्म, प्रज्ञा तथा शील) को जो विशुद्ध बुद्धि वाला स्थपति जानता है, वह विद्वान् शिल्पियों के मध्य पूजित होता है और उत्कृष्ट प्रतिष्ठा प्राप्त कर चिरायु होता है ॥ २२ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'स्थपतिलक्षण' नामक चौवालिसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ४४ ॥**



## समीक्षात्मक टिप्पणी

### स्थपति लक्षण (श्लोक ४४.१-२२)

**१. समराङ्गणसूत्रधार** (४४.१-२२) में स्थपति की विशेषताओं का विस्तार से वर्णन है । संक्षेप में इसे शास्त्र, कर्म और प्रज्ञा से सम्पन्न एवं शील से युक्त होना चाहिये । शास्त्रों में इसे मुख्य रूप से सामुद्रिक (= हस्तरेखा विज्ञान), गणित, ज्योतिष, छन्द, सिरा, शिल्प एवं यन्त्रकर्म का भी ज्ञाता होना चाहिये—

शास्त्रं कर्म तथा प्रज्ञा शीलं क्रिययान्वितम् ।
लक्ष्यलक्षणयुक्तार्थशास्त्रनिष्ठो नरो भवेत् ॥ २ ॥
सामुद्रं गणितं चैव ज्यौतिषं छन्द एव च ।
सिराज्ञानं तथा शिल्पं यन्त्रकर्मविधिस्तथा ॥ ३ ॥
एतान्यङ्गानि जानीयाद् वास्तुशास्त्रस्य बुद्धिमान् ॥ ४ ॥

इसको शास्त्र के ज्ञान के साथ-साथ कार्य का भी ज्ञान होना चाहिये—

यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ॥ ८ ॥
स मुह्यति क्रियाकाले दृष्ट्वा भीरुरिवाहवम् ।
केवलं कर्म यो वेत्ति शास्त्रार्थं नाधिगच्छति ॥ ९ ॥
सोऽचक्षुरिव नीयेत विवशोऽन्येन वर्त्मसु ॥ १० ॥

स्थपति का शील सम्पन्न होना अत्यावश्यक चारित्रिक गुण कहा गया है—

ज्ञानवांश्च तथा वाग्मी कर्मस्वपि च निष्ठितः ।
एवं युक्तोऽपि न श्रेयान् यदि शीलविवर्जितः ॥ १६ ॥

अन्य वास्तुग्रन्थों में स्थपति, सूत्रधार आदि शिल्पियों के लक्षण इस प्रकार प्राप्त होते हैं—

**२. वास्तुराजवल्लभ** (१.४१) में भी उपर्युक्त मत की पुष्टि प्राप्त होती है—

सुशीलः चतुरो दक्षः शास्त्रज्ञो लोभवर्जितः ।
क्षमायुक्तो द्विजश्चैव सूत्रधारः स उच्यते ॥

सूत्रधार वह होता है जो सुशील, चतुर, दक्ष, शास्त्रज्ञ, निर्लोभ एवं क्षमा से युक्त होता है ।

**३. मनुष्यालयचन्द्रिका** (१.११-१३) में १. स्थपति, २. सूत्रग्राही, ३. तक्षक एवं ४. वर्धक नामक शिल्पियों के लक्षण निम्न प्रकार से प्राप्त होते हैं—

**चतुर्धा कारवः—**

स्थपतिः सूत्रग्राहीतक्षकसंज्ञश्च वर्धकिः क्रमशः ।
स्वोचितकर्मणि दक्षा ग्राह्यास्ते कारवश्चतुर्धेति ॥ ११ ॥

**स्थपतिः—**

सर्वशास्त्रविहितक्रियापटुः सर्वदावहितमानसः शुचिः ।
धार्मिको विगतमत्सरादिको यः स च स्थपतिरस्तु सत्यवाक् ॥ १२ ॥

**अन्ये कारवः—**

जानीयात् स्थापनार्हं स्थपतिमथ गुणैः प्रायशस्तेन तुल्यः
सूत्रग्राही सुतो वा स्थपतिमतिगतिप्रेक्षकः शिष्यको वा ।
स्थूलानां तक्षणात्तक्षक इति कथितः सन्ततं हृष्टचित्तो
दार्वाद्यन्योऽन्यसम्मेलनपटुरुदितो वर्धकिः सावधानः ॥ १३ ॥

**४. मानसार** (२.१-१७) में स्थपतियों के लक्षण, उनके प्रकार, उनके वैशिष्ट्य आदि सभी विषयों पर अत्यन्त विस्तार से वर्णन किया गया है । इस सृष्टि के प्रथम स्थपति 'महाविश्वकर्मा' थे—

परः शिवसकाशाद्धि ब्रह्मा चेन्द्रोऽपि लोककृत् ॥ १ ॥
स महाविश्वकर्मेति त्वीश्वरेणैव कीर्तितः ।
स एवायं विश्वकर्मा ब्रह्माण्डं सृजते मुहुः ॥ २ ॥

महा विश्वकर्मा के चार मुख थे । पूर्व दिशा के मुख का नाम विश्वभू था और दक्षिणमुख विश्वविद्, उत्तरमुख विश्वस्थ एवं पश्चिममुख विश्वस्त्रष्टा था—

विश्वभूरिति नामैतत्पूर्ववक्त्रं प्रकीर्तितम् ।
दक्षिणे विश्वविद्वक्त्रं विश्वस्थश्च तथोत्तरे ॥ ४ ॥
पश्चिमे विश्वस्त्रष्टाख्यं वक्त्रमेवं चतुर्विधम् ।
एतेभ्यः प्रथमो जातो विश्वकर्माचतुष्टयः ॥ ५ ॥

इन महाविश्वकर्मा से चार कारवों अर्थात् स्थपतियों, विश्वकर्माचतुष्टय—विश्वकर्मा, मय, त्वष्टा एवं मनु की उत्पत्ति हुई। ये चारो क्रमशः इन्द्र, सुरेन्द्र, वैश्रवण एवं नल के पुत्र (२.७-८) कहे गये हैं—

पूर्वानने विश्वकर्मा जायते दक्षिणे मयः।
उत्तरस्य मुखे त्वष्टा पश्चिमे तु मनुः स्मृतः ॥ ६ ॥

महाविश्वकर्मा के पूर्वानन से विश्वकर्मा उत्पन्न हुए, दक्षिणमुख से मय, उत्तरमुख से त्वष्टा तथा पश्चिम मुख से मनु उत्पन्न हुए।

विश्वकर्मा के पुत्र को स्थपति, मय के पुत्र को सूत्रग्राही तथा त्वष्टा के पुत्र को वर्धकी एवं मनु के पुत्र को तक्षक कहा गया है—

विश्वकर्माख्यनाम्नोऽस्य पुत्रः स्थपतिरुच्यते।
मयस्य तनयः सूत्रग्राहीति परिकीर्तितः ॥ ९ ॥
त्वष्टुर्देव ऋषेः पुत्रो वर्धकीरिति प्रकथ्यते।
मनोः पुत्रस्तक्षकः स्यात्स्थपत्यादिचतुष्टयम् ॥ १० ॥

इनमें स्थपति को सभी शास्त्रों का ज्ञाता, सूत्रग्राही को (नापने के लिए) मानसूत्र धारण करने वाला, वर्धकी को मानकर्म का ज्ञाता एवं तक्षक (= पत्थर तराश कराने वाले) को छीलने-काटने का विशेषज्ञ कहा गया है—

स्थपतिः सर्वशास्त्रज्ञः सूत्रग्राहीति सूत्रधृत् ॥ १२ ॥
वर्धकीर्मानकर्मज्ञः तक्षणात्तक्षकः स्मृतः ॥ १३ ॥

**५. वास्तुविद्या** (१.१२-२०) में चारो स्थपति आदि का लक्षण इस प्रकार प्राप्त होता है—

**(१) स्थपति**—

स्थपतिः स्थापनार्हः स्यात्सर्वशास्त्रविशारदः।
न हीनाङ्गोऽतिरिक्ताङ्गो धार्मिकस्तु दयापरः।
अमात्सर्योऽनसूयश्च तान्त्रिकस्त्वभिज्ञातवान् ॥ १३ ॥
गणितज्ञः पुराणज्ञः आनन्दात्माप्यलुब्धकः।
चित्रज्ञः सर्वदेशज्ञः सत्यवादी जितेन्द्रियः ॥ १४ ॥
अरोगी चाप्रमादी च सप्तव्यसनवर्जितः।
सुनामा दृढबन्धुश्च वास्तुविद्याब्धिपारगः ॥ १५ ॥

**(२) सूत्रग्राही**—

स्थपतेस्तस्य शिष्यो वा सूत्रग्राही सुतोऽथवा।
स्थपत्याज्ञानुसारी च सर्वकर्मविशारदः ॥ १६ ॥

सूत्रदण्डप्रमाणज्ञो मानोन्मानप्रमाणवित् ।
तक्षितानां तक्षकेणाप्युपर्युपरि युक्तितः ॥ १७ ॥

**(३) वर्धकी (वर्धकि)—**

वृद्धिकृद् वर्धकिः प्रोक्तः सूत्रग्राह्यनुगः सदा ।

**(४) तक्षक—**

तक्षणात्स्थूलसूक्ष्माणां तक्षकः स तु कीर्तितः ॥ १८ ॥
मृत्कर्मज्ञो गुणी शक्तः सर्वकर्मस्वतन्त्रकः ।
गुरुभक्तः सदा हृष्टः स्थपत्याद्यनुगः सदा ॥ १९ ॥

**६. शिल्परत्न** (१.२९-३३) में स्थपति, सूत्रग्राही, तक्षक एवं वर्धकी के लक्षण वास्तुविद्या में वर्णित लक्षणों के अनुसार ही हैं ।

**७. मयमतम्** (५.१३-२४) के अनुसार स्थपति के लक्षण—

भवन्ति शिल्पिनो लोके चतुर्धा स्वस्वकर्मभिः ॥ १३ ॥
........... ............ ........... ...........
.......... ............ ............ ............
एभिर्विना हि सर्वेषां कर्म कर्तुं न शक्यते ।
तस्मादेतत् सदा पूज्यं स्थपत्यादिचतुष्टयम् ॥ २४ ॥

अपने-अपने कार्यों के अनुसार चार प्रकार के शिल्पी जगत् में होते हैं । १. स्थपति, २. सूत्रग्राही, ३. वर्धकि (बढ़ई) एवं ४. तक्षक (छीलने, काटने एवं आकृतियाँ गढ़ने वाले) होते हैं । ये सभी (स्थापत्यादि कर्म के लिये) प्रसिद्ध होते हैं और अधिकतर सङ्कीर्ण जाति से उत्पन्न एवं अपने कार्यों के लिये अभीष्ट गुणों से युक्त होते हैं ।

१. **'स्थपति'** संज्ञक शिल्पी को भवन की स्थापना में योग्य तथा अन्य शास्त्रों का भी ज्ञाता होना चाहिये । उसे शारीरिक दृष्टि से स्वस्थ होना चाहिए । वह न कम अङ्गों वाला हो तथा न ही अधिक अङ्गों वाला हो, उसे धार्मिक प्रवृत्ति वाला एवं दयार्द्र स्वभाव वाला होना चाहिये ।

स्थपति को द्वेष रहित एवं ईर्ष्या रहित होना चाहिए । उसे सदैव सावधान रहने वाला, स्वाभाविक गुणों से युक्त, गणितज्ञ तथा इतिहास-पुराणों का ज्ञाता, सत्यवक्ता एवं जितेन्द्रिय होना चाहिये । स्थपति को चित्रकर्म (गृह के नक्शा आदि बनाने) में निपुण, सभी देशों का ज्ञान अर्थात् भूगोल का ज्ञाता होना चाहिए । उसे (अपने सहायकों को) अन्न देने वाला, निर्लोभी, रोगविहीन, आलस्य एवं

भूल न करने वाला होना चाहिए तथा सात प्रकार के व्यसनों अर्थात् गाली आदि से वाचिक आघात पहुँचाना, सम्पत्ति के लिये मार-पिटाई करना, शारीरिक आघात पहुँचाना, शिकार, जुआ और स्त्रीगमन एवं सुरापान—(अर्थशास्त्र ८.३.२३,३२) से रहित होना चाहिये ।

२. **'सूत्रग्राही'** स्थपति का पुत्र होता है या शिष्य होता है । उसे यशस्वी, मानसिकरूप से दृढ़ एवं वास्तुशास्त्र में पारङ्गत विद्वान् होना चाहिये । सूत्रग्राही को स्थपति की आज्ञानुसार कार्य करने वाला एवं (स्थापत्यसम्बन्धी) सभी कार्यों का ज्ञान होना चाहिये । उसे सूत्र एवं दण्ड के प्रयोग का ज्ञान एवं विविध प्रकार के अन्य मापन अर्थात् मान-उन्मान (लम्बाई, चौड़ाई, ऊँचाई एवं उनके उचित अनुपात) का भी ज्ञान होना चाहिये ।

३. पत्थर, काष्ठ और ईंट आदि को मोटा एवं पतला काटने-एवं छाँट करने के कारण **'तक्षक'** कहलाता है । यह सूत्रग्राही के निर्देशन में कार्य करता है ।

४. **वर्धकि** (= बढ़ई) मृत्तिका के कर्म (गृहनिर्माण) का ज्ञाता, गुणवान्, अपने कार्य में कुशल, अर्थात् अपने क्षेत्र से सम्बद्ध सभी कार्यों को स्वतन्त्रतापूर्वक करने वाला, तक्षक द्वारा काटे-छाँटे गये सभी द्रव्यों को विहित रूप से जोड़ सकता है । सर्वदा सूत्रग्राही के अनुसार कार्य करने वाला शिल्पी 'वर्धकि' कहलाता है ।

इस प्रकार ये सभी शिल्पी कार्य करने वाले, अपने कार्यों में कुशल, शुद्ध, बलवान् एवं दयावान् होते हैं । ये सभी शिल्पी अपने गुरु अर्थात् प्रधान स्थपति का सम्मान करने वाले एवं सदैव स्थपति की आज्ञा का अनुसरण कर प्रसन्नचित्त होते हैं । उनके लिये स्थपति ही विश्वकर्मा होते हैं ।

उपर्युक्त (सूत्रग्राही, तक्षक एवं वर्धकि) शिल्पियों के विना स्थपति (भवन निर्माण सम्बन्धी) सभी कार्य में समर्थ नहीं हो सकता है । इसलिये स्थपति आदि चारो प्रकार के शिल्पियों का सदा सम्मान करना चाहिये ।



# अथ पञ्चचत्वारिंशोऽध्यायः

## * अष्टाङ्ग-लक्षणम्[1] *

## (The Definition of Eight Components of Architecture)

**प्रोक्तं चतुर्धा स्थापत्यं वास्तुतत्त्वस्य सिद्धये ।**
**ब्रूमस्तदेव चेदानीमङ्गैः संयुक्तमष्टभिः ॥ १ ॥**

**अष्टाङ्ग स्थापत्य के लक्षण**—वास्तु तत्व की सिद्धि के लिए वास्तुविदों के द्वारा चार प्रकार का स्थापत्य (शास्त्र, कर्म, प्रज्ञा तथा शील) बताया गया है । अब आठ अङ्गों से युक्त उसी का अर्थात् अष्टाङ्ग स्थापत्य का वर्णन किया जाता है ॥ १ ॥

**स्थापत्याष्टाङ्गविवरणम्**

**तेष्वङ्गं प्रथमं प्रोक्तं वास्तुपुंसो विकल्पना ।**

१. वास्तुपुरुष प्रकल्पना उन अङ्गों में पहला अङ्ग वास्तु पुरुष की विशेष कल्पना बतायी गई है ॥ २ ॥

**पुरस्य विनिवेशस्तु द्वितीयं द्वारकर्म च ॥ २ ॥**
**रथ्याविभागः प्राकारनिवेशोऽट्टालकस्य च ।**
**विनिवेशः प्रतोलीनां विभागस्थानकानि च ॥ ३ ॥**

२. नगर विभाग पुरनिवेश, द्वार कर्म, रथ्या विभाग, प्राकार निवेश, अट्टालक निवेश, प्रतोली विनिवेश और विभाग स्थान (अन्य नगर विभाग) को दूसरा अङ्ग समझना चाहिए ॥ २-३ ॥

**प्रासादश्च तृतीयं स्याच्चतुर्थं तु ध्वजोच्छ्रितिः ।**
**पञ्चमं नृपतेर्वेश्म स्थानान्तरविभक्ति च ॥ ४ ॥**

३. प्रासाद निर्माण तीसरा अङ्ग है और ४. ध्वजोच्छ्रिति अर्थात् इन्द्र ध्वज की ऊँचाई एवं उत्थान आदि चौथा अङ्ग है । ५. राजा का वेश्म पाँचवाँ अङ्ग है तथा

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह नवम अध्याय है ।

स्थानान्तर विभक्ति अर्थात् राजधानी (नगर) में राजोचित अन्य भवनों का निवेश कहाँ-कहाँ करना चाहिए ॥ ४ ॥

**चातुर्वर्ण्यविभागश्च गृहभागश्च षष्ठकम् ।**
**सप्तमं यजमानस्य शालायां मानमीरितम् ॥ ५ ॥**
**यज्ञवेदीप्रमाणं च कोटिहोमविधिस्तथा ।**

६. चारो वर्णों के अनुरूप गृह तथा विभिन्न पेशे वालों के लिए घर कैसे और कहाँ बनाने चाहिये यह छठा अङ्ग है और ७. यजमान की शाला का मान तथा यज्ञ वेदी का प्रमाण और कोटि होम की विधि सातवाँ अङ्ग है ॥ ५-६ ॥

**अष्टमं राजशिविरनिवेशो दुर्गकर्म च ॥ ६ ॥**
**यो वेत्त्यङ्गान्यमून्यष्टौ सोऽत्र स्थपतिसत्तमः ।**
**यशो मानं स लभते पूज्यते च नराधिपैः ॥ ७ ॥**

८. राज शिविर (छावनी) और दुर्ग कर्म स्थापत्य का आठवाँ अङ्ग है । जो स्थपति इन आठों अङ्गों का ज्ञाता होता है वह श्रेष्ठ स्थपति कहलाता है और वह समाज में यश एवं मान को प्राप्त करता है, तथा राजाओं के द्वारा पूजित होता है ॥ ६-७ ॥

नृपालस्थपतेर्गुणाः

**अशास्त्रज्ञमकर्मज्ञं स्थपतिं यः प्रयोजयेत् ।**
**न तस्य वास्तु सिध्येत सिद्धमप्यसुखावहम् ॥ ८ ॥**

**स्थपति के गुण**—जो शास्त्रज्ञ नहीं है और मूर्ख अकर्मज्ञ अर्थात् क्रिया कौशल विहीन है ऐसे स्थपति से जो गृह निर्माण का काम करवाता है उसका वास्तु (= गृहकर्म) सिद्ध नहीं होता है और सिद्ध होने पर भी वह गृह सुखावह नहीं होता ॥ ८ ॥

**तस्मात् कर्म च शास्त्रं च यो वेत्ति द्वितयं नरः ।**
**अष्टाङ्गमपि यो वेत्ति स राज्ञः स्थपतिर्भवेत् ॥ ९ ॥**

इसलिए स्थपति वही हो सकता है जो कर्म (वास्तु कर्म) एवं शास्त्र (वास्तु शास्त्र) दोनों को जानता है तथा जो स्थापत्य के इन आठ अङ्गों को भी राजा का समझता है ॥ ९ ॥

**अङ्गानि पूर्वमुक्तानि वास्तुशास्त्रोक्तविस्तरात् ।**
**तेषु प्रासादिकं यत् तद् वक्ष्यामोऽग्रे सविस्तरम् ॥ १० ॥**

वास्तुशास्त्र के जो आठ प्रकार के अङ्ग पहले विस्तार से बताए गए हैं उनमें से जो प्रासादिक अङ्ग हैं उनका सविस्तर वर्णन आगे (४९-८३ अध्याय तक) किया जाएगा ॥ १० ॥

**अङ्गेषु सप्तमस्य यज्ञशालामानस्य प्रयोगः**

**अथाङ्गं सप्तमं ब्रूमो यत् तद् यज्ञेषु युज्यते ।**
**विनिविष्टे पुरे पूर्वं क्लृप्तेषु सुरधामसु ॥ ११ ॥**

**उन अङ्गों में यज्ञशाला मान में प्रयुक्त सातवें अङ्ग का निरूपण**—अब उस सातवें अङ्ग का वर्णन करते हैं जिसका यज्ञों में प्रयोग किया जाता है । पहले पुर संयोजना सम्पन्न कर लें फिर वहाँ पर देव मन्दिरों के निर्माण करे ॥ ११ ॥

**तत्र यज्ञशालानिवेशनविधिः**

**दिशि दक्षिणपूर्वस्यां यज्ञार्थं मापयेद् भुवम् ।**
**निवेशनं तत्र कुर्वीत चतुरस्त्रं समन्ततः ॥ १२ ॥**

**यज्ञशाला की योजना**—इसके बाद दक्षिण पूर्व दिशा में यज्ञ के लिए अपेक्षित भूमि का माप कर लेना चाहिए । वहाँ पर एक चौकोर स्थान का चयन कर लेना चाहिए ॥ १२ ॥

**आयामेन विधातव्यो हस्ताष्टादशविस्तृतः ।**
**पूर्वद्वारं विधातव्यमादित्यस्य पदे बुधैः ॥ १३ ॥**

**यज्ञशाला की माप**—अठारह हस्त के विस्तार के प्रमाण से उस यज्ञशाला का आयाम बनाना चाहिए । यज्ञशाला के पूर्वद्वार का निर्माण आचार्य आदित्य के पद में करना चाहिए ॥ १३ ॥

**यजमानकुटीप्रमाणादिकम्**

**तस्य पश्चिमभागे तु यजमानकुटी भवेत् ।**
**षोडशायामविस्तारा प्राङ्मुखी सा प्रशस्यते ॥ १४ ॥**

**यजमान की कुटी का प्रमाण**—उसके पश्चिम भाग में यजमान की कुटी बनानी चाहिए । उसका विस्तार सोलह हाथ के आयाम का कहा गया है और उसकी पूर्वाभिमुखता प्रशस्त होती है ॥ १४ ॥

**प्राग्वंशपरिकल्पनम्**

**यजमानकुटीद्वारे देवता या च कीर्तिता ।**
**ततः प्रभृति पूर्वेण प्राग्वंशं परिकल्पयेत् ॥ १५ ॥**

**प्राग्वंश का निर्माण**—यजमान की कुटी के द्वार पर जिन देवता की स्थापना की गई है, उससे प्रारम्भ कर पूर्व से प्राग्वंश (यज्ञ की कुटी) का निर्माण करे ॥ १५ ॥

**प्रक्रमनिवेशनविधिः**

**वेदिमध्ये स्थितं तत् स्यान्मानं वेद्याश्च शस्यते ।**
**पूर्वापरेण षट्त्रिंशत् कर्तव्याः प्रक्रमाः बुधैः ॥ १६ ॥**

**वेदी की दिशा**—उसकी स्थापना वेदी के मध्य भाग में करनी चाहिए । वेदि की रचना विद्वानों के द्वारा पूर्व पश्चिम से ३६ प्रक्रम बताई गई हैं ॥ १६ ॥

**वेदिकल्पनम्**

**एकत्रिंशत् कुटीभागे मध्येऽष्टादश कल्पयेत् ।**
**प्रक्रमाः स्यु शिरस्थाने विंशतिश्चतुरूत्तरा ॥ १७ ॥**

**वेदी की माप**—कुटी भाग में ३१, बीच में १८, शिरस्थान में २४ प्रक्रम (= नाप) प्रकल्पित किये गये हैं ॥ १७ ॥

**पुरुषस्य शिरस्तत्र प्राग्वंशे तु प्रतिष्ठितम् ।**
**तस्मात् पूर्वोत्तरं ज्ञेयं सर्वयज्ञेषु पूजितम् ॥ १८ ॥**

वास्तु पुरुष का शिर उस प्राग्वंश में प्रतिष्ठित माना जाता है, इसलिए सभी यज्ञों में पूर्वोत्तर स्थान पूज्य समझना चाहिए ॥ १८ ॥

**वेद्यन्तरं तु कर्तव्यं शकटं येन गच्छति ।**
**तस्मादुत्तरवेदी या कार्या प्रत्युत्तरेण तु ॥ १९ ॥**

दूसरी वेदी ऐसी बनावे, जिसमें शकट (= यज्ञीय गाड़ी) जा सके है । उत्तर वेदी की रचना उत्तर की ओर ही करना चाहिए ॥ १९ ॥

**होमस्थानकल्पनम्**

**द्विहस्तायामविस्तारो होमश्चेष्टः कृतोऽत्र हि ।**

**यजमानस्थानकल्पनम्**

**प्राग्दक्षिणेन संस्थानं यजमानस्य शस्यते ॥ २० ॥**

**होम एवं यजमान का स्थान**—द्विहस्त आयाम विस्तार वाला (गहरा) इष्ट होम का स्थान स्थापित करे । यहाँ पर यजमान का (आसन) संस्थान प्राग्दक्षिण में कहा गया है ॥ २० ॥

**कटिमात्रं सदा कार्यं नाभिमात्रमथापि वा ।**

**ततोऽधिकेन दुर्भिक्षमनावृष्टिश्च जायते ॥ २१ ॥**
**एषा यज्ञक्रिया प्रोक्ता कोटिहोमोऽथ वक्ष्यते ।**

सर्वदा कटिपर्यन्त अथवा नाभिमात्र गहरा कुण्ड बनाना चाहिए, उससे अधिक बनाने पर दुर्भिक्ष पड़ता है अथवा अनावृष्टि होती है । इस प्रकार यज्ञ क्रिया का प्रतिपादन किया गया है, अब कोटि होम कहेंगे ॥ २१-२२ ॥

**कोटिहोमलक्षहोमस्थानादिकथनम्**

**पुरस्याभ्यन्तरे भागे हुताशस्य पदे तथा ॥ २२ ॥**
**तस्मिन् स्थाने विधातव्यः कोटिहोमः सदा पुरे ।**
**लक्षहोमश्च कर्तव्यो नित्यो नैमित्तिकोऽपि वा ॥ २३ ॥**

**कोटि होम एवं लक्ष होम का स्थान**—सदैव पुर के आभ्यन्तर भाग में तथा (वास्तु चक्र के) अग्नि के पद पर कोटि होम करना चाहिए, और वही पर नित्य अथवा नैमित्तिक लक्ष होम भी करना चाहिए ॥ २२-२३ ॥

**विमर्श**—मनु ने ब्राह्मणों के लिए छह विहित कर्म बताए हैं—

अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः ॥ मनु. १०.७५

छह कर्म ब्राह्मण की जीविका के लिए विहित हैं—

उञ्छं प्रतिग्रहोऽभिक्षा वाणिज्यं पशुपालनम् ।
कृषिकर्म तथा चेति षट्कर्माण्यग्रजन्मनः ॥

**अथ भूमिवशात् स्थानं कदाचिन्नैव लभ्यते ।**
**सर्वतो ब्रह्मणः स्थानाद्धोमस्थानं निवेशयेत् ॥ २४ ॥**

जब कम भूमिवशात् कदाचित् यदि उचित स्थान न प्राप्त हो, तो सब ओर ब्रह्मा के स्थान से होम-स्थान का माप करे ॥ २४ ॥

**ऐशानीं दिशमाश्रित्य ब्राह्मणैर्वेदपारगैः ।**
**पुरश्चरणतत्वज्ञैः षट्कर्मनिरतैः सदा ॥ २५ ॥**

**सर्वाङ्गेषु याज्ञिकाङ्गस्य प्राशस्त्यम्**

**नित्यं शान्तिपरैर्विप्रै राजा तु विजयी भवेत् ।**
**नोपसर्गास्तु जायन्ते न च लक्ष्मीः पुरं त्यजेत् ॥ २६ ॥**

**सभी आठ अङ्गों में यज्ञाङ्ग का प्राशस्त्य कथन**—ईशान कोण का आश्रय ग्रहण कर वेद में पारङ्गत, पुरश्चरण के तत्त्व को जानने वाले तथा सदैव अध्ययन

अध्यापन आदि षट्कर्म में निरत ब्राह्मणों के द्वारा जो राजा नित्य शान्तिपाठ एवं स्वस्ति वाचन कर्म करवाता है वह राजा विजयी होता है। न तो वहाँ पर उपसर्ग (= उपद्रव) उत्पन्न होते हैं और न लक्ष्मी उस पुर को छोड़ती है ॥ २५-२६ ॥

**अनावृष्टिभयं नास्ति सुभिक्षं जायते सदा ।**
**उक्तं याज्ञिकमङ्गं तु सर्वाङ्गेभ्यः प्रशस्यते ॥ २७ ॥**

वहाँ अनावृष्टि का भय नहीं रहता। सदा सुभिक्ष रहता है। इसलिए सभी (अष्ट) अङ्गों में यह याज्ञिक अङ्ग प्रशस्त कहा गया है ॥ २७ ॥

### यज्ञभूमिमापने विहितं वास्तुपदम्

**सर्वं स्थपतिना ज्ञेयं तत्वज्ञैर्ब्राह्मणैः सह ।**
**एकाशीतिपदेनैव यज्ञभूमिं तु मापयेत् ॥ २८ ॥**

विद्वान् स्थपति को तत्वज्ञ ब्राह्मणों के द्वारा यह सभी माप आदि का प्रमाण समझ लेना चाहिये। यज्ञ भूमि को इक्यासी पद (एकाशीति पदवास्तु) से ही नापकर बनाना चाहिए ॥ २८ ॥

### अष्टमस्य राजशिविरनिवेशाख्यस्याङ्गस्य निरूपणम्

**निवेशं शिबिरस्याथ कथयामोऽङ्गमष्टमम् ।**
**यदा तु नृपतिः स्थानात् स्वाद् यात्राभिमुखो भवेत् ॥ २९ ॥**
**शिविरस्य निवेशं च तत्त्ववेत्ता परीक्षयेत् ।**
**अर्थशास्त्रविधिज्ञो वा स्थपतिर्वा प्रकल्पयेत् ॥ ३० ॥**

**आठवें अङ्ग निवेश (राजशिविर) का कथन**—अब आठवे अङ्ग राजशिविर का निवेश कहते हैं—जब राजा अपने स्थान से यात्राभिमुख हो तब तत्ववेत्ता विद्वान् स्थपति को शिविर के निवेश की परीक्षा करनी चाहिए और राजा को चाहिए कि अर्थशास्त्र के ज्ञाता विद्वान् अथवा स्वयं स्थपति के द्वारा राजनिवेश कर्म का प्रकल्पन (योजना Sit plan) करवाए ॥ २९-३० ॥

### तत्र शिविराणामाकृतिविशेषाः

**शिविरं चतुरस्रं स्याद् वृत्तं वृत्तायतं क्वचिद् ।**
**चतुरस्रायतं वापि विषमं वा क्वचिद् भवेत् ॥ ३१ ॥**

**राजशिविर की आकृति**—राजशिविर चौकोर होना चाहिए और कहीं पर वृत्त (गोल) हो, कहीं पर वृत्तायत हो अथवा चतुरस्रायत अथवा कहीं पर विषम भी बनाया जा सकता है ॥ ३१ ॥

**शिविरद्वारसंख्या**

**भूमिभागवशात् कल्प्यं महारथ्योभयान्वितम् ।**
**शिविरस्य तु चत्वारि कुर्याद् द्वाराणि यत्नतः ॥ ३२ ॥**

भूमि के भागवश दोनों ओर महारथ्याओं (राजमार्ग) से उस शिविर को युक्त करना चाहिए और प्रयत्नपूर्वक शिविर के चार दरवाजे बनाने चाहिए ॥ ३२ ॥

**रथ्याप्रमाणम्**

**रथ्या सार्धा तु सेनायाः पुररथ्याप्रमाणतः ।**
**मित्रे स्थानं नरपतेः कार्यं पृथ्वीधरेऽपि वा ॥ ३३ ॥**

**नरपतेः स्थानम्**

**आर्यम्णो वा विधातव्यं पदे वैवस्वतेऽथवा ।**

**रथ्या (राजमार्ग) का प्रमाण**—पुर रथ्या प्रमाण से सेना की रथ्या (सेना के आने-जाने की सड़क) आधी होती है ।

**राजशिविर में राजा का गृहस्थान**—राजा के निवास का स्थान (चौंसठ पद वास्तु में) मित्र पद पर अथवा पृथ्वीधर के पद पर करना चाहिए, अथवा अर्यमा के पद पर या वैवस्वत के पद पर राजा का गृह बनावे ॥ ३३-३४ ॥

**मन्त्रिपुरोहितबलाध्यक्षान्तपुरभाण्डागाराणां स्थानानि**

**निवेशो मन्त्रिणां कार्यः पश्चिमे राजवेश्मनः ॥ ३४ ॥**
**पुरोहितस्योत्तरतो बलाध्यक्षस्य पूर्वतः ।**
**अन्तःपुरं दक्षिणतो भाण्डागारं तथैव च ॥ ३५ ॥**

**मन्त्रियों, पुरोहित बलाध्यक्षादि के गृह**—मन्त्रियों का घर राजवेश्म के पश्चिम भाग में बनावे तथा पुरोहत का गृह उत्तर भाग में, बलाध्यक्ष अर्थात् सेनापति का राजगृह के पूर्व में गृह होना चाहिए तथा अन्तःपुर और भाण्डागार राजवेश्म के दक्षिण भाग में हो ॥ ३४-३५ ॥

**अश्वानां दन्तिनां च स्थानानि**

**गृहं प्रविशतो राज्ञो न्यस्येद् दक्षिणतो हयान् ।**
**वामे च दन्तिनो न्यस्येदेवं सैन्यं निवेशयेत् ॥ ३६ ॥**

**हाथियों और घोड़ों का स्थान**—राजा के गृह में प्रवेश करने पर दक्षिण की ओर घोड़ों की घुड़साल होनी चाहिए और बाएँ हाथ हाथियों की गजशाला बनाना चाहिए । इस प्रकार सैन्य का निवेश बताया गया है ॥ ३६ ॥

### परिखाप्रमाणम्

**बाह्यतः परिखां तस्या कारयेद् राजवेश्मनः ।**
**हस्तांस्त्रीश्चतुरो वापि पञ्चहस्तानथापि वा ॥ ३७ ॥**

**परिखा प्रमाण**—उस राजप्रासाद के बाहर चारों ओर परिखा (चहारदीवारी, खाई) बनानी चाहिए । उसका प्रमाण तीन, चार अथवा पाँच हाथों का कहा गया है ॥ ३७ ॥

### शिविरस्थानमापनोचितं वास्तुपदम्

**चतुष्षष्टिपदाख्येन विभाज्यं शिबिरं बुधैः ।**
**निवेशः शिविरस्योक्तो दुर्गकर्माथ कथ्यते ॥ ३८ ॥**

**शिविर स्थान का वास्तुपद विन्यास**—राजशिविर का विभाजन विद्वानों के द्वारा चौंसठ पद वास्तु से कहा गया है । इस प्रकार के शिविर (= दुर्ग की भूमि) का निवेश कहा गया है । अब दुर्ग कर्म बताया जाता है ॥ ३७-३८ ॥

### अष्टमाङ्गावशिष्टस्य दुर्गकर्मणो निरूपणारम्भः, तत्र षड्विधानां दुर्गाणां संज्ञाः

**दुर्गं तु षड्विधं प्रोक्तं राज्ञां तु विजिगीषताम् ।**
**अब्दुर्गं पङ्कदुर्गं वा वनदुर्गैरिणे तथा ॥ ३९ ॥**
**पार्वतीयं महादुर्गमिति कल्प्यानि पार्थिवैः ।**

### तेषु प्रशस्तं दुर्गम्

**सर्वेषामेव दुर्गाणां पार्वतीयं प्रशस्यते ॥ ४० ॥**

**अष्टाङ्गशेष दुर्ग कर्म का निरूपण एवं छह प्रकार के दुर्ग**—विजयार्थी राजा के लिए ६ प्रकार के दुर्ग कहे गए हैं—१. जल-दुर्ग, २. पङ्क-दुर्ग, ३. वन-दुर्ग, ४. ईरिण-दुर्ग, ५. पर्वतीय- दुर्ग तथा ६. महा-दुर्ग । इस प्रकार छह दुर्गों की प्रकल्पना राजाओं को करानी चाहिए । किन्तु सभी प्रकार के दुर्गों में 'पर्वतीय-दुर्ग' प्रशस्त कहा गया है ॥ ३९-४० ॥

### दुर्गस्थानविभाजनार्हं वास्तुपदम्

**दुर्गस्थानविभागोऽत्र षोडशाख्येन कीर्तितः ।**
**मध्ये तु ब्रह्मणः स्थानमसम्बाधं विधीयते ॥ ४१ ॥**

**दुर्गस्थान का वास्तुपद विन्यास**—दुर्ग का स्थान विभाग षोडश पद वास्तु से बताया गया है । दुर्ग के मध्य में ब्रह्मा का खुला हुआ (= असंबाध) स्थान कहा गया है ॥ ४१ ॥

### हर्म्यप्रमाणादिकम्

**ब्रह्मस्थानं समारभ्य हर्म्यं पञ्चशयाः स्मृताः ।**
**उपरथ्या त्रिहस्ता तु शेषास्तु द्विशयाः स्मृताः ॥ ४२ ॥**

**हर्म्य-प्रमाण**—ब्रह्म स्थान से आरम्भ कर राज हर्म्य को पाँच हाथ के प्रमाण से बनाना चाहिए । उप रथ्याएँ गलियाँ (छोटी सड़क) तीन हाथ और बाकी सड़के दो हाथ प्रमाण की कही गई है ॥ ४२ ॥

### रथ्योपरथ्याद्वाराणां प्रमाणानि

**सन्निकृष्टा विधातव्या दुर्गरथ्या समन्ततः ।**
**द्वारं रथ्याप्रमाणेन कार्यं नात्यन्तमुच्छ्रितम् ॥ ४३ ॥**
**परचक्रसमं बाधं (?) सुरक्षं तत् सदा भवेत् ।**

**रथ्या एवं उपरथ्या द्वारों के प्रमाण**—सभी दुर्ग रथ्याओं (= राजमार्गों) का विभाग समीप में ही चारों ओर कहा गया है । रथ्या के प्रमाण से ही द्वार बनाना चाहिए । परन्तु वह द्वार बहुत ऊँचा न हो, जिससे कि शत्रु की सेना उसमें प्रवेश कर सके । उसे सदैव सुरक्षित होना चाहिए ॥ ४३-४४ ॥

### दुर्गेश्वरप्रासादानां स्थानानि

**दुर्गेश्वरगृहस्थानं ब्रह्मणः परितो भवेत् ॥ ४४ ॥**
**वैवस्वतेऽथवार्यम्णो मैत्रे पृथ्वीधरेऽपि वा ।**
**यथा पुरे पुरा प्रोक्तं स्थानं दुर्गेऽपि तत् तथा ॥ ४५ ॥**

दुर्ग नायक के घर का स्थान ब्रह्म स्थान के चारो ओर होवे, वैवस्वत, अर्यमन्, मैत्र अथवा पृथ्वीधर वास्तु पदों के इन किसी देव पदों पर दुर्गेश्वर का स्थान विनिवेश्य है । जैसा पुर में पहले कहा गया है उसी प्रकार दुर्ग में भी स्थान कहा गया है ॥ ४४-४५ ॥

### दुर्गरक्षार्थं स्थाप्यानां वीराणां लक्षणम्

**वीराः शुभाः ह्यदोषाश्च भूमिपालस्य संमताः ।**
**धनुर्वेदविधिज्ञाश्च कृतास्त्राः शास्त्रपारगाः ॥ ४६ ॥**

**दुर्ग के रक्षार्थ सैनिकों का निवास स्थान**—दुर्ग में वीर सैनिकों के गृहों की स्थापना परमावश्यक है । ये वीर शुभ, निर्दोष एवं राजा के प्रिय, धनुर्वेद विधि को जानने वाले, अस्त्र-शस्त्र चलाने में निपुण और युद्ध कला में निष्णात् एवं शास्त्र में पारङ्गत होने चाहिये ॥ ४६ ॥

### अन्तःपुरादीनामपि तत्र निवेशनीयत्वकथनम्

**दुर्गे स्थाप्याः सुरूपाश्च बहवश्च वरस्त्रियः ।**
**अन्तःपुरं च कोशं च कुमारांश्चात्र वासयेत् ।**

इनके अतिरिक्त बहुत सी सुन्दरी वीराङ्गनाओं को भी उस दुर्ग में स्थापित करवाना चाहिए । इसमें अन्तःपुर पृथक् बनवाना चाहिए । कोशागार (खजाने) का निर्माण भी कराना चाहिए और कुमारों को यहाँ पर निवास कराना चाहिए ॥ ४७ ॥

**एवं दुर्गविधानस्य समासोऽयमुदाहृतः ॥ ४७ ॥**

**इत्यष्टाङ्गो वास्तुशास्त्रस्य सारः**
**संक्षेपेण स्पष्टमस्माभिरुक्तः ।**
**यत्र ज्ञाते शिल्पिवद् वास्तुविद्या-**
**पाथोनाथं सन्तरन्त्यप्रयासात् ॥ ४९ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे अष्टाङ्गलक्षणं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥**

इस प्रकार से दुर्ग विधान का संक्षेप में निरूपण किया गया है । वास्तु शास्त्र का यह अष्टाङ्ग सार संक्षेप से यहाँ स्पष्ट बता दिया गया है, जिसके जानने से शिल्पी वास्तु-विद्या रूप समुद्र को बिना प्रयास पार कर लेता है ॥ ४७-४९ ॥

**इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'अष्टाङ्गलक्षण' नामक पैंतालिसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ४५ ॥**



# अथ षट्चत्वारिंशोऽध्यायः

## * तोरणभङ्गादिशान्तिकः[1] *

## (The Pacificatory Rite on the Collapse of an Arched Portal)

पुरातनं नवं वापि कृतं वाथार्धनिर्मितम् ।
देवतानां नृपाणां च तोरणं निपतेद् यदि ॥ १ ॥
भज्यते दह्यते वाथ नमते सज्जतेऽथवा ।
दवविद्युज्जलाद्यैर्वा हन्यते तत् कदाचन ॥ २ ॥
तत्र दोषान् प्रवक्ष्यामो दोषप्रशमनानि च ।

**तोरण आदि के भग्न होने पर शान्ति प्रयोग**—पुरातन या नवनिर्मित अथवा अर्ध निर्मित देवताओं का किं वा राजाओं का तोरण, यदि गिर जावे, टूट जावे, जल जावे अथवा लच जावे, सट जावे या दावाग्नि (= आकाशीय बिजली) और जल आदि से वह कदाचित् नष्ट हो जावे तो उनके दोषों का वर्णन करता हूँ और साथ ही साथ उन दोषों के शान्ति का उपाय बताता हूँ ॥ १-३ ॥

### तोरणभङ्गे प्लोषादिषु दोषाः

तोरणं निपतेत् सर्वं शिरो वास्य कथञ्चन ॥ ३ ॥
राज्ञां सेनापतीनां च प्रतीहारपुरोधसाम् ।
प्रधानाश्वगजानां च विप्रपौरजनस्य च ॥ ४ ॥
तत्र मृत्युभयं विद्याद् दुर्भिक्षं चापि निर्दिशेत् ।

**तोरण के भङ्ग पर या झुकने पर दोष**—यदि सम्पूर्ण तोरण गिर जावे अथवा किसी बुर्जी का शिर किसी तरफ गिर जावे तो राजाओं के लिए, सेनापतियों के लिए, प्रतीहारों और पुरोहितों के लिए, प्रधान घोड़ों और हाथियों के लिए, ब्राह्मणों और पुरवासियों के लिए मृत्यु भय समझना चाहिए और इस अपशकुन से दुर्भिक्ष भी निर्दिष्ट किया गया है ॥ ३-५ ॥

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह सैंतीसवाँ अध्याय है ।

**तस्मात् प्रशमहेत्वर्थं विधिं कुर्यादिमं बुधः ॥ ५ ॥**
**ऋत्विग्भिर्ब्राह्मणैर्धीरैः स्थपतिः सपुरोहितैः ।**
**रात्रौ होमबलिं कुर्यान्नगरे तु चतुर्दिशम् ॥ ६ ॥**
**कर्णचत्वरशृङ्गाटेष्ववनीपालवेश्मनि ।**
**स्थानेष्वेतेषु विप्राद्यैर्वेदिं निष्पाद्य साक्षताम् ॥ ७ ॥**
**कलशैर्द्रव्यगन्धैश्च श्वेतमाल्याम्बरैर्वृताम् ।**
**तत्र होमं प्रकुर्वीत शान्तिकं बलिमेव च ॥ ८ ॥**
**एवं प्रशमयेत् सर्वं यत्किञ्चिद् दुरितोत्थितम् ।**

इसलिए उसकी शान्ति के लिए विद्वान् को यह विधान करना चाहिए—धीर स्थपति, यज्ञकर्ता ब्राह्मणों और पुरोहितों के साथ, नगर की चारों दिशाओं में रात में होम के सहित बलि देवे । कोनों पर, चत्वरों (= चबूतरों) पर, शृङ्गाटों में, राजवेश्म में, इन स्थानों में ब्राह्मणों आदि से अक्षत सहित सुगन्धित द्रव्यों से, कलशों से, सफेद मालाओं और वस्त्रों से ढकी हुई वेदी का निष्पादन करवा कर वहाँ पर शान्तिकारक होम और बलि प्रदान कर्म करवाना चाहिए । इस प्रकार से जो कुछ पाप अथवा दोष उत्थित होता है वह सब शान्त हो जाता है ॥ ५-९ ॥

### तत्प्रशमनविधिश्च

**तोरणं भज्यते चेत् तद्राष्ट्रभङ्गं विनिर्दिशेत् ॥ ९ ॥**
**अस्य प्रशमहेत्वर्थं पूर्वोक्तं कारयेद् विधिम् ।**

**तोरण भङ्ग की शान्ति**—तोरण का भङ्ग राष्ट्रभङ्ग निर्देश करता है अतः इसकी शान्ति के लिए पूर्व प्रतिपादित विधान करवाना चाहिए ॥ ९-१० ॥

**तदेवैकं प्रदह्येत तोरणं नगरे (यं?य)दि ॥ १० ॥**
**तदा वह्निभयं ब्रूयाद् राष्ट्रस्य नगरस्य च ।**
**सबाह्याभ्यन्तरं विप्रैर्विधिमेनं प्रयोजयेत् ॥ ११ ॥**

यदि नगर में कोई एक तोरण भी जल जावे (या गिर जावे) तो राष्ट्र और नगर के लिए अग्निभय समझना चाहिए और बाहर तथा भीतर ब्राह्मणों को इसी शान्ति कर्म की विधि का प्रयोग करना चाहिए ॥ १०-११ ॥

**नते वा शीर्णभग्ने वा व्याधिपीडां विनिर्दिशेत् ।**
**होमं बलिं च कुर्वीत पुनः संस्कारमस्य च ॥ १२ ॥**

तोरण के नत (झुके) होने पर अथवा शीर्ण, अथवा भग्न होने पर व्याधि एवं

पीड़ा विनिर्दिष्ट होती है । अतः इसके पुनः संस्कार के लिए होम और बलि कर्म करना चाहिये ॥ १२ ॥

**वातेन विद्युता वापि तोरणं यदि भज्यते ।**
**तस्मिन् रोगाः प्रवर्तन्ते कुलपीडाधनक्षयाः ॥ १३ ॥**
**शान्तिकर्म प्रकुर्वीत ततः शान्तिकरं भवेत् ।**
**एवमादौ कृते पश्चात् पुनः संस्कारयेद् बुधः ॥ १४ ॥**

हवा से अथवा बिजली गिरने से यदि तोरण टूट जावे तो उस गृह में रोग प्रवर्तित होते हैं और कुल की पीड़ा तथा धन का क्षय भी वहाँ आपतित होता है। अतः शान्ति कर्म अवश्य करना चाहिए जिससे वह गृह शान्तिकर हो जावे । इस प्रकार से पहले शान्ति कर्म करने के बाद फिर उस गृह के तोरण का संस्कार (मरम्मत) करना चाहिए ॥ १३-१४ ॥

**पूर्वावयवनिर्माणाद् विशिष्टं रचयेत् पुनः ।**
**दृढसन्धिनिगूढं च दृढद्रव्यसमन्वितम् ॥ १५ ॥**
**विविधं रूपकर्माढ्यं सुसंस्थानं मनोरमम् ।**
**अकुब्जमनतं चैव पूर्वोत्कृष्टतरं तथा ॥ १६ ॥**
**नियुक्ते तु पुनः शान्तिं ब्राह्मणान् वाचयेत् ततः।**

इसके संस्कार में यह आवश्यक है कि पूर्व तोरण से उसके अवयव लेकर इस तोरण का विशिष्ट निर्माण होना चाहिए । दृढ़ द्रव्यों से युक्त, दृढ़ सन्धियों से निगूढ़, विविध चित्र रूप कर्म से युक्त, मनोरम, सुस्थान वाला, अकुब्ज (टेढ़ा न) हो, अनत (झुका न) हो और पहले से उत्कृष्टतर बना कर उसका न्यास करे और फिर ब्राह्मणों से शान्तिपाठ करावे ॥ १५-१७ ॥

### गृहे कपोतप्रवेशे फलम्

**पुराणे वा नवे वाथ कृते वार्धकृतेऽथवा ॥ १७ ॥**
**प्रासादे वा गृहे वापि कपोतः प्रविशेद् यदि ।**
**तत्र दोषा प्रपद्यन्ते शान्तिकर्म तथैव च ॥ १८ ॥**

**गृह में कबूतर के प्रवेश से दोष**—पुराने अथवा नये बनाए हुए अथवा आधे बनाए हुए प्रासाद में अथवा घर में यदि कबूतर प्रवेश कर जावे तो दोष पैदा होते हैं और उसी प्रकार से शान्तिकर्म करना चाहिए ॥ १७-१८ ॥

### प्रासादं गृहं वा प्रविष्टाः सन्तो दोषसूचकाश्चतुर्विधाः कपोताः

**कालमूर्तिः कपोतश्च पापमूलकरण्डकम् ।**

**विहङ्गापशदो हीनः कृष्णचारी विहङ्गमः ॥ १९ ॥**

**चतुर्विध कपोत तथा उसके प्रवेश में दोष**—यह कपोत पाप की जड़ है वह नीच पक्षी कहलाता है। यह साक्षात् कालमूर्ति माना गया है। उड़ने वाले पक्षियों में यह कृष्णचारी है और अत्यन्त हीन विहङ्गम कहा गया है ॥ १९ ॥

**चतुर्विधः समाख्यातो मुनिभिः स तपोधनैः।**
**श्वेतो विचित्रकण्ठश्च विचित्रोऽन्योऽथ कृष्णकः ॥ २० ॥**

तपोधन मुनियों के द्वारा चार प्रकार के कबूतर बताए गए हैं—श्वेत, विचित्र कण्ठ, विचित्र तथा कृष्णक ॥ २० ॥

**तत्प्रवेशफलं च**

**कपोतो भवने यस्य श्वेतवर्णो विशेत् क्वचित्।**
**कीर्तिविद्याधनं पुण्यं शीघ्रं च नयते क्षयम् ॥ २१ ॥**
**नित्यं रोगाः प्रवर्धन्ते शिशुपीडा च जायते।**

**कबूतरों के गृह में प्रवेश करने पर दोष और उसका फल**—यदि भवन में कहीं पर श्वेत कबूतर प्रविष्ट कर जावे तो गृहस्वामी की कीर्ति, विद्या, धन और समस्त पुण्य शीघ्र नष्ट हो जाते हैं और वहाँ नित्य रोग बढ़ते हैं तथा शिशु पीड़ा भी उत्पन्न होती है ॥ २१-२२ ॥

**चित्रकण्ठो हरेज्जायां पुत्रान् सर्वान् विचित्रकः ॥ २२ ॥**
**सर्वाः सिद्धीश्च कृष्णाङ्गः प्रदुष्य च कुलं हरेत्।**
**रोगाः सर्वेऽपि वर्धन्ते विपदो व्यसनानि च ॥ २३ ॥**
**बन्धनानि च जायन्ते प्रविष्टे तु कपोतके।**
**तस्माद् यत्नपरो भूत्वा प्रायश्चित्तं समाचरेत् ॥ २४ ॥**

विचित्र कण्ठ कबूतर यदि गृह में प्रवेश करे तो स्त्री का नाश करता है और विचित्र कबूतर सभी पुत्रों को (रोगादि से) नष्ट करता है। कृष्ण कबूतर यदि गृह में प्रवेश करे तो गृहस्वामी की समस्त सिद्धियों को नष्ट कर कुल का नाश करता है। वहाँ सब प्रकार के रोग बढ़ते हैं, विपदाएँ आ जाती हैं और मद्य आदि व्यसन तथा बन्धन आदि दोष इस कपोताधम के प्रविष्ट होने पर उत्पन्न होते हैं। इसलिए यत्नपूर्वक गृहस्वामी को कबूतर के गृह में प्रवेश से उत्पन्न दोष का प्रशमन या प्रायश्चित्त अवश्य करना चाहिए ॥ २२-२४ ॥

**कपोतप्रवेशदोषप्रशमनविधिः**

**स्नातस्त्रिकालशुद्धात्मा सोपवासो जितेन्द्रियः।**

**देवपूजार्चनरतो नित्यं दानपरः शुचिः ॥ २५ ॥**

**कपोत प्रवेश पर शान्ति कर्म एवं प्रायश्चित्त विधान**—गृहस्वामी स्नान कर, त्रैकालिक सन्ध्योपासन से शुद्धात्मा होकर, एक दिन उपवास रखकर, इन्द्रियों को वश में रखकर, देवताओं के पूजार्चन में संलग्न होकर नित्य दान-दक्षिणा देता हुआ पवित्र रहे ॥ २५ ॥

**यवान्नप्रायभोजी च नित्यं होमपरायणः ।**
**गुरुविप्ररतश्चैव श्वेतमाल्याम्बरस्तथा ॥ २६ ॥**
**गृही सगृहिणीकस्तु व्रतमेतत् समाचरेत् ।**

फिर दूसरे दिन केवल यवान्न का भोजन करते हुए एवं नित्य प्रति हवन करता हुआ रहे । गुरुओं और ब्राह्मणों में भक्ति रखता हुआ, सफेद वस्त्र और माला पहने हुए गृहस्वामी को अपनी गृहिणी के साथ निम्नविधि से व्रत का आचरण करना चाहिये ॥ २६-२७ ॥

**श्वेतके पञ्चरात्रं च चित्रकण्ठे दशैव तत् ॥ २७ ॥**
**चित्रे पञ्चदशाहानि कृष्णे दिवसविंशतिः ।**
**व्रतस्थेन तु कर्तव्यमग्निकार्यं मनोरमम् ॥ २८ ॥**

श्वेत कपोत के प्रवेश करने से उत्पन्न दोष में पाँच रातें, चित्रकण्ठ कबूतर के प्रवेश दोष में दस रातें, विचित्रकण्ठ (= चित्तीदार) कपोत के गृह में प्रवेश दोष में पन्द्रह दिन और कृष्ण कबूतर के गृह में प्रवेश करने से उत्पन्न दोष में बीस दिन तक व्रत में स्थित होकर मनोरम अग्निकार्य करना चाहिए ॥ २७-२८ ॥

**यथालाभं समादाय तस्य देहं सपिच्छकम् ।**
**निकृन्तेत् खण्डखण्डानि विभागाष्टशतानि तम् ॥ २९ ॥**
**घृतप्लुतानि पुण्यानि मधुलाजान्वितानि च ।**
**पञ्चवारुणसंज्ञेन वह्निकार्ये कृतेऽक्षतैः ॥ ३० ॥**

फिर यथालाभ उसका सपिच्छ (= पंख सहित) शरीर लाकर उसके खण्ड-खण्ड काटे और उसके ८०० टुकड़े करे और फिर उसी से होम करे । घी में सानकर पुण्य मधु अर्थात् शहद से और लाजाओं से युक्त कर पञ्च वारुण संज्ञा वाले मन्त्रों से, अक्षतों से, अग्निकार्य सम्पादन करके वह मन्त्रवित् साधक हव्य मात्रा के अनुसार मांस की आहुति देवे ॥ २९-३० ॥

**ततश्च मांसं जुहुयाद्धव्यमात्रेण मन्त्रवित् ।**
**हुते क्रव्ये ततः क्षीरं दधि मध्वाज्यमेव च ॥ ३१ ॥**

**सम्पूजयेद् ग्रहान् सर्वान् ब्राह्मणान् वाचयेत् ततः ।**

मांस की आहुति देने के बाद दूध, दही, शहद और घृत से आहुति देवे और फिर सब ग्रहों की पूजा करे तथा ब्राह्मणों से स्वस्तिवाचन करावे ॥ ३१-३२॥

**स्ववित्तपादं श्वेते तु विप्रेभ्यः प्रतिपादयेत् ॥ ३२ ॥**
**वित्तार्धं चित्रकण्ठे तु पादोनं सर्वचित्रके ।**
**कृष्णे सर्वधनत्यागः कर्तव्यो ब्राह्मणान् पुनः ॥ ३३ ॥**

तदनन्तर अपने धन का श्वेत कपोत की शान्ति में एक चौथाई भाग ब्राह्मणों को अर्पण करे, चित्रकण्ठ में आधा, सर्व-चित्रक में तीन चौथाई और कृष्णक में सब धन ब्राह्मणों को दे देवे ॥ ३२-३३ ॥

**एवं शान्तिर्भवेद् गेहे सर्वदोषक्षयावहा ।**
**महतीं श्रियमाप्नोति धनलाभश्च जायते ॥ ३४ ॥**

इस प्रकार से घर में सभी दोषों का निराकरण करने वाली शान्ति प्राप्त होती है। गृहस्वामी महती श्री प्राप्त करता है और उसे धन-लाभ भी होता है ॥३४॥

**पुत्रैः पौत्रैर्वृद्धिमाप्नोत्यनन्ता-**
**मायुर्दीर्घं प्राप्नुयात् संयतात्मा ।**
**एतत् कृत्वा मुच्यते सर्वपापै-**
**र्मेघैर्यद्वच्छारदः शीतरश्मिः ॥ ३५ ॥**

**॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे तोरणभङ्गादिशान्तिको नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥**

...✿...

पुत्रों तथा पौत्रों से शान्ति कर्म वृद्धि को प्राप्त करता है और वह संयत आत्मा दीर्घायु को प्राप्त करता है तथा वह इस प्रकार की शान्ति कर्म करके, जिस प्रकार शरत्कालीन चन्द्र मेघों से मुक्त होकर उज्ज्वलता को प्राप्त करता है, उसी के समान वह सब पापों से विमुक्त हो जाता है ॥ ३५ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'तोरणभङ्गादिशान्ति' नामक छियालिसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ४६ ॥**

...✿...

## समीक्षात्मक टिप्पणी

### कपोत प्रवेश में शान्ति (श्लोक ४६.१७-३४)

१. कपोत शान्ति के विषय में नारद का वचन इस प्रकार है—

**अथ कपोतशान्तिः**

नारदः—

आरोहयेद् गृहं यस्य कपोतो वा प्रवेशयेत् ।
स्थानहानिर्भवेत्तस्य यद्वाऽनर्थपरम्परा ॥
दोषाय धनिनां गेहे दरिद्राणां शिवाय च ।
तस्य शान्तिश्च कर्त्तव्या जपहोमविधानतः ॥
ब्राह्मणान् वरयेत् तत्र स्वस्तिवाचनपूर्वकम् ।
षोडशद्वादशाष्टौ वा श्रौतस्मार्त्तक्रियापराः ॥
देवाः कपोत इत्यादि ऋचाभिः पञ्चभिर्जपम् ।
लक्षं कृत्वा प्रयत्नेन स्वगृह्योक्तविधानतः ॥
ऐशान्यां स्थापयेद्वह्निं मुखान्तेऽष्टोत्तरं शतम् ।
प्रत्येकं समिदाज्यान्नैः प्रतिप्रणवपूर्वकम् ॥

मुखान्ते अग्निमुखान्ते ।

यत इन्द्र भयामहे स्वस्तिदेति त्रियम्बकैः ।
त्रिभिर्मन्त्रैश्च जुहुयात् तिलान् व्याहृतिभिस्तथा ॥
जयाहुतीस्ततो हुत्वा कुर्यात्पूर्णाहुतिं स्वयम् ।
विप्रेभ्यो दक्षिणां दद्यात् द्यौः शान्तिं च ततो जपेत् ॥
ब्राह्मणान् भोजयेत्पश्चात्स्वयं भुञ्जीत बन्धुभिः ।
एवं यः कुरुते सम्यक् तस्माद्दोषात्प्रमुच्यते ॥
पिङ्गलायाः स्वरेऽप्येवं मधु-वल्मीकयोरपि ।
सम्पूर्णे मन्दिरे हानिः शून्यसद्मनि मङ्गलम् ॥
प्राकारे च पुरद्वारे रथ्यादिषु च वीथिषु ।
ग्रामस्य तत्फलं चैव गुरुकल्पनया ततः ॥
शान्तिकर्माऽखिलं कार्यं पूर्वोक्तेन क्रमेण तु ॥

॥ इति कपोतादिशान्तिः ॥



# सप्तचत्वारिंशोऽध्यायः

## * वेदीलक्षणम् *

## (The Definition of Vedī)

**वेद्यश्चतस्रो विज्ञेया या पुरा ब्रह्मणोदिताः ।**
**वयं ताः सम्प्रवक्ष्यामो नामसंस्थानमानतः ॥ १ ॥**

वेदी चार प्रकार की कही गई है जैसा कि पुराकाल में ब्रह्मा ने बतलाया था । सम्मान के योग्यतानुसार अब उन वेदियों के नाम और उनके प्रयोग के संस्थान का निरूपण करते हैं ॥ १ ॥

**प्रथमा चतुरस्रा स्यात् सभद्रा च द्वितीयका ।**
**तृतीया श्रीधरी नाम चतुर्थी पद्मिनी स्मृता ॥ २ ॥**

**वेदियों के प्रकार**—प्रथम वेदी **चतुरस्रा** (= चौकोर) होती है और **सभद्रा** नामक द्वितीय वेदी होती है । तृतीय वेदी **श्रीधरा** नाम से पुकारी जाती है और चौथी वेदी **पद्मिनी** नाम से विद्वानों द्वारा अभिहित है ॥ २ ॥

**यज्ञकाले तथोद्वाहे देवस्थापनेषु च ।**
**नीराजनेषु सर्वेषु वह्निहोमे च नित्यशः ॥ ३ ॥**

**वेदियों के प्रयोग का काल**—यज्ञ के समय एवं विवाह के समय और देवता की स्थापना के समय एवं किसी भी प्रकार के (नीराजन) पूजा के समय तथा नित्य अग्निहोत्र (होम) के समय इन वेदियों का प्रयोग किया जाता है ॥ ३ ॥

**नृपाभिषेचने चैव शक्रध्वजनिवेशने ।**
**नृपयोग्या भवन्त्येता वर्णानामनुपूर्वशः ॥ ४ ॥**

राजा के अभिषेक के समय और इन्द्रध्वज के उत्सव के समय तथा नृप के योग्यतानुसार एवं वर्णों के आनुपूर्वी क्रम से वेदियों का प्रयोग होता है ॥ ४ ॥

**चतुरस्रा तु या वेदि नवहस्ता समन्ततः ।**
**अष्टहस्ता प्रमाणेन सर्वभद्रा प्रकीर्तिता ॥ ५ ॥**

**वेदियों का प्रमाण**—'चतुरस्त्रा' नामक वेदी का प्रमाण चारो ओर से नौ हाथ का कहा गया है । किन्तु सभद्रा (= सर्वभद्रा) संज्ञक वेदी का मान आठ हाथ बतलाया गया है ॥ ५ ॥

**श्रीधरी सप्त विज्ञेया हस्तान् मानेन वेदिका ।**
**षड्ढस्ता चैव शास्त्रज्ञैर्नलिनीह विधीयते ॥ ६ ॥**

श्रीधरी नामक वेदी का प्रमाण सात हाथ होता है तथा पद्मिनी (= नलिनी) नामक वेदी का प्रमाण वास्तुविद शास्त्रकारों ने छह हाथ का कहा है ॥ ६ ॥

**चतुरस्त्रा तु कर्त्तव्या चतुरस्त्रा समन्ततः ।**
**भद्रैस्तु सर्वतोभद्रा भूषणीया चतुर्दिशम् ॥ ७ ॥**

**वेदी निर्माण**—१. चतुरस्त्रा वेदी को चारो ओर चौकोर बनाना चाहिए । २. सर्वतोभद्रा (= सभद्रा) वेदी को चारो दिशाओं में सुन्दर (= भद्र) आभूषणों (= पुष्पों) से सुसज्जित करना चाहिए ॥ ७ ॥

**श्रीधरी चापि विज्ञेया कोणविंशतिसंयुता ।**
**नलिनीति च विज्ञेया पद्मसंस्थानधारिणी ॥ ८ ॥**

३. श्रीधरी वेदी बीस कोणों से युक्त बनाई जाती है । ४. नलिनी (= पद्मिनी) वेदी का आधार कमल के सदृश निर्मित होता है ॥ ८ ॥

**कर्तव्याः स्वस्वविस्तारादुच्छ्रयेण त्रिभागिकाः ।**
**कुर्यान्मन्त्रवतीभिस्ता इष्टकाभिस्तु चाय(यि) ताः ॥ ९ ॥**

ये चारों वेदियाँ अपने-अपने प्रमाण के अनुसार तीन भाग (त्रिकोण) में विस्तार वाली एवं अपने-अपने मान के अनुसार गहरी बनाई जाती हैं । इन वेदियों की चारो ओर की चुनाई मन्त्र से अभिमन्त्रित ईंटों द्वारा करनी चाहिए ॥ ९ ॥

**चतुरस्त्रा यज्ञकाले विवाहे श्रीधरी स्मृता ।**
**देवतास्थापने वेदीं सर्वभद्रां निवेशयेत् ॥ १० ॥**

**वेदियों का प्रयोग**—इन चारों वेदियों में 'चतुरस्त्रा' वेदी का प्रयोग यज्ञ-काल में किया जाता है और 'श्रीधरी' नामक वेदी का प्रयोग विवाह के समय होता है । देवता की स्थापना (= प्राणप्रतिष्ठा) के समय 'सर्वतोभद्रा' वेदी का प्रयोग किया जाता है ॥ १० ॥

**नीराजने साग्निकार्ये तथा राजाभिषेचने ।**
**वेदी पद्मावती या च तथा शक्रध्वजोच्छ्रये ॥ ११ ॥**

पूजा अर्चना (नीराजन) एवं साग्निक कर्म में तथा राज्याभिषेक के समय और इन्द्रध्वज के उत्थान के समय पद्मिनी वेदी का प्रयोग किया जाता है ॥ ११ ॥

**चतुर्मुखा तु कर्त्तव्या सोपानैश्च चतुर्दिशम् ।**
**प्रतीहारसमायुक्ता चार्धचन्द्रोपशोभिता ॥ १२ ॥**

वेदी को चतुर्मुख (चार द्वार वाली) बनाना चाहिए तथा उसमें चारों ओर सभी दिशाओं में सोपान (सीढ़ियाँ) होना चाहिए । वेदी के एक भाग में द्वार होना चाहिए या वह द्वार एक प्रतिहारी (= द्वारपाल) से युक्त हो यह वेदी अर्ध चन्द्र के सदृश शोभा सम्पन्न बनाना चाहिए ॥ १२ ॥

**चतुःस्तम्भसमायुक्ता चतुष्कुम्भविराजिता ।**
**काञ्चनै राजतैस्ताम्रैर्मृन्मयैः कलशैस्तथा ॥ १३ ॥**

चारो दिशाओं में चार खम्भे बनाना चाहिए जिन स्तम्भों पर चार (जलपूर्ण) कलश सुशोभित हों । ये कलश स्वर्ण निर्मित हों अथवा चाँदी के कलश हो या फिर ताँबे का किं वा मिट्टी का ही बना हो ॥ १३ ॥

**कोणे कोणे तु विन्यस्तैर्वल्गुवानरभूषितैः ।**
**स्तम्भप्रमाणं वेदीनां कार्यं छाद्यवशेन च ॥ १४ ॥**

वेदी के चारो कोनों पर आकर्षक (=वल्गु) वानर का खिलौना सजाना चाहिए । सभी स्तम्भों का प्रमाण वेदी के छाजन के अनुसार रखना चाहिए ॥ १४॥

**विमर्श**—वेदी के कोनों पर आकर्षक बन्दरों को रखना इन्द्रियासक्त मनुष्यों का प्रतीक मात्र है ।

**एकेन द्वित्रिभिर्वापि च्छाद्यैः सामलसारिकैः ।**
**स्तम्भमूलानि चाभ्यज्य गुडेन मधुसर्पिषा ॥ १५ ॥**

वेदी का छाजन एक, दो अथवा तीन आच्छादनों से आमलकसार (= आमड़ा फल) के ऊपरी डण्ठल के सदृश बनाना चाहिए । स्तम्भ के मूल में गुड़, मधु एवं घृत सिक्त करना चाहिए ॥ १५ ॥

**विमर्श**—'सामलसारिकै' का अर्थ है—आँवले की टहनियों की छाजन ।

**परमान्नेन वाभ्यज्य तान् विन्यस्येद् यथातथम् ।**
**देवताः पूजयित्वा तु ब्राह्मणान् स्वस्ति वाचयेत् ॥ १६ ॥**

यह वेदी परमान्न (= खीर) से सिञ्चित करनी चाहिए अथवा उसे अपने-अपने स्थान पर 'बलि स्वरूप' ही रखना चाहिए । फिर गृह स्वामी देवता की पूजा करके ब्राह्मणों से स्वस्तिवाचन कराए ॥ १६ ॥

चतुर्विमितीरितं यदिह वेदिकालक्षणं
समग्रमपि वर्तते मनसि यस्य तच्छिल्पिनः ।
स याति भुवि पूजयतामवनिभोक्तुराप्नोति च
श्रियं स्थपतिसंसदि स्फुरित चास्य शुभ्रं यशः ॥ १७ ॥

॥ इति श्रीमन्महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे वेदीलक्षणं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

...❀...

इस तरह यहाँ पर चार प्रकार के लक्षणों से युक्त जो वेदियों का निरूपण किया गया है उन सभी लक्षणों को शिल्पियों को अपने ध्यान में अवश्य रखना चाहिए । जो शिल्पकार स्थपति इस प्रकार जानता है वह पृथ्वी पर पूजनीय होता है और इस पृथ्वी का वही उपभोग भी कर सकता है । उस स्थपति को लक्ष्मी की प्राप्ति होती है और वह राजा की सभा में आदृत होकर अत्यन्त शुभ्र यश को प्राप्त करता है अर्थात् समस्त संसार में इसका यश फैल जाता है ॥ १७ ॥

**॥ इस प्रकार श्रीमन्महाराजाधिराजश्रीभोजदेवविरचित समराङ्गण-सूत्रधार-अपरनाम वास्तुशास्त्र के 'वेदीलक्षण' नामक सैंतालिसवें अध्याय की महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत 'सरला' हिन्दी पूर्ण हुई ॥ ४७ ॥**



## समीक्षात्मक टिप्पणी

### वेदी का लक्षण (श्लोक ४७.१-१७)

**१. वास्तुमण्डन** (८.४८-५० ) ग्रन्थ में भी इसी प्रकार वेदी का लक्षण वर्णित है—

चतुष्कोणा तु या वेदी स्वस्तिकां साशुभाप्तये।
विवाहेष्वासने यज्ञे राज्ञां देवार्चनादिषु ॥
चतुर्भद्रैर्युता भद्रा लिङ्गादिस्थापने हिताम् ।
श्रीधरि कोणविंशत्या देवतास्थापनेऽर्चने ॥
वेदी पद्मदलाकारं वसुकोणा तु पद्मिनी ।
देवीपूजाप्रतिष्ठाभिषेकनीराजनादिषु ॥

चतुष्कोण स्वस्तिक वेदी को शुभ बतलाया गया है । विवाह, आसन, यज्ञादि

कार्य तथा राजाओं और देवार्चन आदि के लिए इसका प्रयोग विहित है । चतुर्भद्र भद्रा नामक वेदी को शिवलिङ्गादि की स्थापना के अवसर पर निर्मित किया जाना चाहिए । श्रीधरि संज्ञक वेदी का निर्माण देवताओं के स्थापन-कार्य तथा उनके अर्चनादि के समय विहित है । पद्मदलाकार अष्टकोण से निर्मित पद्मिनी वेदी को भगवती की पूजा-कर्म, प्रतिष्ठा, अभिषेक या नीराजनादि कार्य के लिये उपयुक्त बतलाया गया है ।

**२. वास्तुराजवल्लभ** (८.१६ ) में भी इसी प्रकार वेदी का लक्षण बतलाया गया है—

वेदी कोणचतुष्टयं च सकले पाणिग्रहे स्वस्तिका
कल्याणं रविकोणकैश्च नृपतेः स्याद् भद्रिका सर्वयः।
कोणैः श्रीधरिका च विंशतिमितैस्तिस्रोऽमराणां गृहे
कोणैरष्टभिरन्विता च शुभदा चण्डार्च्चने पद्मिनी॥

**३. अपराजितपृच्छा** (७७.१३-१५) में भी इसी प्रकार उपरोक्त नाम और लक्षणादि कहे गए हैं—

स्वस्तिका भद्रिका चैव श्रीधरी पद्मिनी तथा ।
चतुर्विधा भवेद् वेदी सर्वशान्तिकरी नृणाम् ।।
स्वस्तिका चतुरस्रा स्याद् भद्रिका भद्रसंयुता ।
श्रीधरी विंशतिकोणा प्रतिभद्रैर्विभूषिता ।
पद्मिनी वै पद्मदला ह्यष्टकोणैर्विभूर्षिता ।।

**४. सिद्धान्तशेखर** (मण्डपकुण्डसिद्धि में २०-२१ पर ठद्धृत) में भी इसी तरह उपरोक्त चार प्रकार की वेदियों का वर्णन किया गया है—

चतुष्कोण वेदी फलप्रदाता कही गई है । जलाशय, बावली, कूप, आदि की स्थापना या प्रतिष्ठा में आठ कोण वाली पद्मिनी संज्ञक वेदी, राजाओं के अभिषेक-काल में बारह कोण की सर्वतोभद्र वेदी प्रशस्त कही गई है । विवाहादि कार्य में बीस कोण वाली श्रीधरी वेदी शुभ कही गई है ।

वेदी चतुर्विधा प्रोक्ता चतुरस्रा तु पद्मिनी ।
श्रीधरी सर्वतोभद्रा दीक्षासु स्थापनादिषु ।।
चतुरस्रा चतुष्कोणा वेदी सर्वफलप्रदा ।
तडागादिप्रतिष्ठायां पद्मिनी पद्मसन्निभा ।।
राज्ञां स्यात्सर्वतोभद्रा चतुर्भद्राभिषेचने ।
विवाहे श्रीधरी वेदी विंशत्यस्रसमन्विता ।।
दर्पणादरसङ्काशा निम्नोन्नत विवर्जिता ।।

## वर्णानुसार वेदी-प्रकार ( ४७.४ )

**१. वास्तुमण्डन** (८.५१-५२) में वर्णों के अनुसार वेदी के प्रकार इस प्रकार बतलाए गए हैं—

विप्रादीनां क्रमात् सप्तषट्पञ्चयुगहस्तका ।
त्रिद्व्येकहस्तादीनानां व्यास त्र्यंशोन्नता शुभम् ॥
विवाहेऽब्धिकरा वेदी गृहस्थैशेऽथवामृतः ॥

विप्रादि क्रम से ब्राह्मण को सात हाथ की वेदी, क्षत्रिय को छह, वैश्य को पाँच तथा शूद्र को चार हाथ जितनी लम्बाई की वेदी का निर्माण करवाना चाहिए। इनका व्यास क्रमशः तीन, दो, एक हाथ तथा ऊँचाई व्यास का तीन अंश रखना शुभ होता है । गृहस्थ को विवाह इत्यादि तथा संवत्सरादि (जन्मदिन) जैसे कार्यों हेतु इसी प्रकार की वेदी का निर्माण करवाना चाहिए अन्यथा मृत्यु कही गई है ।

**२. वास्तुराजवल्लभ** (८.१७) में वर्णानुसार वेदी का क्रम इस प्रकार कहा गया है—

विप्रे सप्तकरा च भूपसदने षट् पञ्च वैश्ये तथा
कुर्याद् हस्तचतुष्टयं च वृषले त्रिद्व्येकतो हीनके ।

**३. अपराजितपृच्छा** (७७.१५-१८) में इसी प्रकार वर्णानुसार वेदी के क्रम बतलाए गए हैं—

विप्राणां सप्तहस्ता च क्षत्रियाणां तु षट्करा ॥
वैश्यानां पञ्चहस्ता च शूद्राणां वेदहस्तिका ।
विवाहेषु च सर्वेषु वस्तिका सर्वकामदा ।
भद्रा भद्रा नरेन्द्राणां सर्वकल्याणकारिका ॥
देवतास्थापने चैव स्वस्तिका भद्रा श्रीधरी ।
देवानां च प्रतिष्ठादौ पूजायां चैव पद्मिनी ॥



# अथाष्टाचत्वारिंशोऽध्यायः

## * गृहदोषनिरूपणम्[1] *

## (The Normed Defects of House)

### गृहविधौ वर्ज्या भूमयः

**अतः परं गृहादीनामप्रशस्तसमुच्छ्रितम् ।**
**क्रियते कथितं यस्मादेकत्र सुसमं भवेत् ॥ १ ॥**

**गृह के लिए वर्ज्य भूमि**—अब इस अध्याय में गृह आदि के अप्रशस्त तथा समुच्छ्रित गृह दोषों का यहाँ संग्रह कर उनका वर्णन करते हैं क्योंकि एक ही जगह संग्रह से आसानी होती है । अतः यहाँ एक स्थान पर संग्रह कर कहते हैं ॥ १ ॥

### भूप्लवनम्

**रक्षोऽम्बुनाथकीनाशमरुद्दहनदिक्प्लवा ।**
**मध्यप्लवा च भूर्व्याधिदारिद्र्यमरकावहा ॥ २ ॥**

**भूमि के नीचा-ऊँचा होने का फल**—सर्वप्रथम 'भूमि-प्लव' (ढलान) का निरूपण करते हैं । नैर्ऋत्य, वारुण, याम्य, वायव्य और आग्नेय इन दिशाओं की ओर जो भूमि नीची होती है वह निन्दित कही गई है । इसी प्रकार मध्यप्लवा अर्थात् बीच में नीची भूमि व्याधि प्रदान करती है । अरकावहा भूमि दारिद्रता देती है ॥२॥

**वह्निप्लवा वह्निभिये मृतये दक्षिणप्लवा ।**
**रुजे रक्षःप्लवा प्रत्यक्प्लवा धान्यधनच्छिदे ॥ ३ ॥**

'वह्नि-प्लवा भूमि' (आग्नेय कोण में नीची) अग्नि का भय लाती है, 'दक्षिण-प्लवा भूमि' मृत्यु लाती है, 'रक्ष-प्लवा' (नैर्ऋत्य कोण में झुकी) भूमि रोग लाती है और पश्चिम प्लवा (पश्चिम में झुकी हुई) भूमि धान्य और धन का नाश करती है ॥ ३ ॥

---

१. पं. द्विजेन्द्रनाथशुक्ल के संस्करण में यह अड़तीसवाँ अध्याय है ।

**कलहाय प्रवासाय रोगाय च मरुत्प्लवा ।**
**मध्यप्लवा तु भूमिर्या सर्वनाशाय सा भवेत् ॥ ४ ॥**

'मरुत्प्लवा' उत्तर-पश्चिम में झुकी भूमि कलह, प्रवास और रोग उत्पन्न करती है तथा मध्य-प्लवा (बीच में नीची) भूमि सर्वनाश का कारण बनती है ॥४॥

**तुषास्थिकेशकीटत्व(क्) शङ्खभस्मोषरान्विताम् ।**
**कर्पराङ्गारिणीं दुष्टसत्वानार्यजानां त्यजेत् ॥ ५ ॥**

**गृह के लिए त्याज्य भूमि**—तुषा (भूसी), हड्डी, केश, कीड़ों की खाल, शङ्ख, भस्म युक्त एवं ऊषर आदि से युक्त भूमि तथा कर्परों और अङ्गारों वाली, दुष्ट जन्तुओं एवं दुष्ट मनुष्यों वाली भूमि निवास हेतु त्याज्य कही गई है ॥ ५ ॥

### चैत्रादिमासेषु निर्मितानां गृहाणां फलम्

**चैत्रे शोककरं वेश्म ज्येष्ठे मृत्युप्रदायकम् ।**
**पशुनाशनमाषाढे शून्यं भाद्रपदे कृतम् ॥ ६ ॥**
**आश्विने कलहाय स्यात् कार्त्तिके भृत्यनाशनम् ।**
**माघे चाग्निभयाय स्यान्मासेष्वेषु न कारयेत् ॥ ७ ॥**

**चैत्र आदि वर्जित मासों में गृहनिर्माण का फल**—**चैत्र** में भवन निर्माण करने पर वह शोककारक गृह कहा गया है । **ज्येष्ठ** में मृत्यु प्रदायक, **आषाढ़** में पशुनाश करने वाला, **भाद्रपद** में धनशून्य, **आश्विन** में लड़ाई झगड़ा वाला, **कार्तिक** में नौकरों का नाश करने वाला और **माघ** में गृहारम्भ अग्निभय देने वाला होता है । अतः इन महीनों में गृह का निर्माण नहीं कराना चाहिए ॥ ६-७॥

### कीलकादीनां स्थानकथनम्

**पावकस्य पदे पृष्ठवंशस्यापि च पश्चिमे ।**
**पुरप्रासादकर्णे च कीलादि प्राक् प्रयोजयेत् ॥ ८ ॥**

**कीलक आदि का स्थान**—वह्नि के पद में तथा पृष्ठ-वंश के पश्चिम भाग में तथा नगर प्रासाद कर्ण (कोने) में कील (स्तम्भ) आदि की योजना पूर्व दिशा में करनी चाहिए ॥ ८ ॥

**विमर्श**—चौंसठ पद वास्तु चक्र में वह्नि का स्थान जहाँ होता है उससे पश्चिम भाग में स्तम्भ की योजना की जाती है ॥ ८ ॥

### तत्तद्दिङ्मूढेषु निवेशनेषु फलम्

**पूर्वपश्चिमदिङ्मूढं वास्तु स्त्रीनाशकृद् भवेत् ।**

**उदङ्मूढं न निष्पत्तिं याति सर्वं च नाशयेत् ॥ ९ ॥**
**यत्तु दक्षिणदिङ्मूढं जायते मरणाय तत् ।**

**विभिन्न दिङ्मुख वास्तु का फल**—पूर्व-पश्चिम-दिङ्मूढ वास्तु स्त्री नाश करने वाला होता है और उत्तर-दिङ्मूढ-वास्तु निर्माण समाप्ति को प्राप्त नहीं होता है। दक्षिण-दिङ्मुख वास्तु मृत्युदायक कहा गया है ॥ ९-१० ॥

**पुरे प्रासादादीनां निवेशस्थानम्**

**प्राग्वास्तुनि (तु) कुर्वीत प्रासादं मन्दिरं पुरे ॥ १० ॥**

**नगर में पूर्वाभिमुख वास्तु का फल**—अतः नगर में 'प्रासाद' एवं 'मन्दिर' का निर्माण पूर्वाभिमुख ही प्रशस्त कहा गया है ॥ १० ॥

**वलितादीनि चतुर्विधानि दुष्टगृहाणि**

**वलितं चलितं भ्रान्तं विसूत्रं च समुत्सृजेत् ।**
**यत् स्यान्मुखविनिष्क्रान्तं वलितं तत् प्रकीर्तितम् ॥ ११ ॥**

**वलित आदि चतुर्विध अशुभ गृह**—१. वलित (Wrinkled), २. चलित, ३. भ्रान्त तथा ४. विसूत्र वास्तु त्याज्य होता है। जो वास्तु मुख-विनिष्क्रान्त होता है उसे 'वलित' (= Bent low) कहते हैं ॥ ११ ॥

**चलितं पृष्ठनिष्क्रान्तं दिङ्मूढं भ्रान्तमुच्यते ।**
**विसूत्रं कर्णहीनं स्यात् फलमेषां प्रचक्ष्महे ॥ १२ ॥**

पृष्ठ-विनिष्क्रान्त-वास्तु को 'चलित' (Quaking) कहते हैं। 'भ्रान्त-संज्ञक' वास्तु दिङ्मूढ (revolving) होता है और कर्णहीन (बिना माप का) प्रासाद 'विसूत्र' (reft of a measuring tape) कहलाता है। अब इन चारों का फल कहते हैं ॥ १२ ॥

**तेषां लक्षणं फलं च**

**वलिते चलति स्थानं चलिते विग्रहो भवेत् ।**
**भ्रान्तं योषिद्विनाशाय विसूत्रं भूरिशत्रुकृत् ॥ १३ ॥**

**वलित आदि के लक्षण एवं फल**—वलित में स्थान परिवर्तन, चलित में लड़ाई झगड़ा, भ्रान्त में स्त्री विनाश तथा विसूत्र भूमि शत्रुकारक कही गई है ॥१३॥

**मूषकोत्करादिभिर्दुष्टानां भुवां वर्जनीयत्वकथनम्**

**मूषकोत्करवल्मीकप्रान्ता वक्रा भुजङ्गवत् ।**

**छिन्ना भिन्ना विकर्णा च न वास्तुनि शुभा क्षितिः ॥ १४ ॥**

**मूषकादि जन्तुओं से आकीर्ण भूमि का वर्जन**—मूषकोत्कर (चूहों के बिल वाली) भूमि तथा बांबी (चींटी) वाली भूमि और सर्प के समान टेढ़ी भूमि, छिन्न, भिन्न और विकर्ण (ऊबड़-खाबड़) भूमि विद्वानों द्वारा वास्तु (गृह) कर्म में शुभ नहीं मानी गई है ॥ १४ ॥

तासु वास्तुनिवेशने फलम्

**मूषकोत्करवत्यर्थं हन्ति वल्मीकिनी सुतम् ।**
**विकर्णा कुरुते कर्णरोगं छिन्ना विनाशिनी ।**
**भिन्ना भेदं करोत्युर्वी कुटिला मतिवक्रताम् ॥ १५ ॥**

**गृह के लिए उनके प्रयोग का फल**—मूषकोत्कर भूमि अर्थ का नाश करती हैं, वल्मीकिनी (बांबी चींटी वाली) पुत्र का नाश करती है और विकर्ण (अनेक कोण वाली) भूमि कर्णरोग पैदा करती है । छिन्ना भूमि विनाश करने वाली होती है और भिन्न भूमि भेद करने वाली तथा कुटिला भूमि मति में (स्वभावगत) वक्रता उत्पन्न करने वाली कही गई है ॥ १५ ॥

वेशमस्वनिष्टो मुखायामः

**सपादं सत्रिभागं वा सार्धं द्विगुणमेव च ।**
**यत् स्यान्मुखायतं वेश्म तदनिष्टफलप्रदम् ॥ १६ ॥**

**भवन के अशुभ मुखायाम**—पाद सहित अथवा तीन भाग सहित या डेढ़ और दुगुना ही भाग का जो मुखायत वेश्म होता है वह अनिष्ट फलदायक कहा गया है ॥ १६ ॥

मानुषशालायां मूषालिन्दयोरावश्यकता, देवागारशालायां तदभावश्च

**यद् द्विशालं त्रिशालं वा चतुःशालमथापि वा ।**
**मूषया रहितं वेश्म तदनिष्टफलप्रदम् ॥ १७ ॥**
**पुरतः पृष्ठतः पार्श्वे यदि वालिन्दवर्जिता ।**
**गृहे न शस्यते शाला देवागारे तु शस्यते ॥ १८ ॥**

**गृह में अलिन्द एवं मूषा की आवश्यकता**—जो द्विशाल, त्रिशाल अथवा चतुःशाल भवन मूषा रहित होता है वह भी अनिष्ट फलप्रदायक कहा गया है । सामने से, पीछे से अथवा बगल से यदि अलिन्द वर्जित शाला होती है तो वह गृह में प्रशस्त नहीं कही गई । हाँ देव मन्दिर में वह ठीक है ॥ १७-१८ ॥

**खादकाख्यस्य वेश्मनो लक्षणं फलं च**

**अन्यपृष्ठस्थितद्वारं वेश्म खादकमुच्यते ।**
**परस्परविरोधाय तद् वेश्म गृहिणोस्तयोः ॥ १९ ॥**

**खादकाख्य गृह के लक्षण एवं फल**—दूसरे के घर के पृष्ठ पर स्थित द्वार वाला वेश्म 'खादक' कहा गया है । ऐसा वह वेश्म दोनों गृहस्वामियों के लिए परस्पर विरोध (जागृत करने) के लिए होता है ॥ १९ ॥

**सशल्यादिकं मर्मदोषचतुष्टयम्**

**सशल्यं पादहीनं च समसन्धि शिरोगुरु ।**
**वेश्मनामिदमुद्दिष्टं मर्मदोषचतुष्टयम् ॥ २० ॥**

**वेश्म-मर्म-दोष-चतुष्टय**—वेश्मों के चार मर्म दोष कहे गए हैं—१. सशल्य, २. पादहीन, ३. समसन्धि तथा ४. शिरोगुरु ॥ २० ॥

**छिन्नाख्यस्य वास्त्वङ्गस्य लक्षणं फलं च**

**वास्तुक्षेत्रस्य यत्राङ्गे यस्य वर्त्म प्रवर्तते ।**
**तदङ्गं वास्तुनस्तस्यच्छिन्नं तेनेति निर्दिशेत् ॥ २१ ॥**
**छिन्नाङ्गं विकलं तत् स्यात् भीतिदं सर्वदोषकृत् ।**
**तद्भर्तुर्भज्यतेऽङ्गं तद्वेधस्तस्याफलोऽन्यथा ॥ २२ ॥**

वास्तु क्षेत्र में जिस अङ्ग में जिसका रास्ता प्रवर्तित होता है उस वास्तु का वह अङ्ग 'छिन्न' निर्दिष्ट किया गया है । अतः उस छिन्नाङ्ग भवन को 'विकल' कहते हैं और वह भयदायक तथा सर्वदोषकारक कहलाता है । वह गृह-स्वामी के उसी अङ्ग का भङ्ग करता है जिस (मर्म दोष) से वह स्वयं छिन्न अथवा विकल रहता है । अतः उसका वेध भी अन्यथा फल देने वाला होता है ॥ २१-२२ ॥

**स्वगृहद्वयमध्येन वर्त्मनो निर्वाहे फलम्**

**स्वगृहद्वयमध्येन निर्वाहो यदि वर्त्मनः ।**
**द्वारवेधोदितान् दोषांस्तदा प्राप्नोति निश्चितम् ॥ २३ ॥**

**अपने ही दो गृहों के मध्य मार्ग का फल**—यदि मार्ग का अपने दोनों घरों के मध्य से निर्वाह होता है तो द्वार-वेध प्रतिपादित दोषों को निश्चय ही वह गृह प्राप्त कर लेता है ॥ २३ ॥

**मार्गवेधस्य स्वरूपं फलं च**

**मार्गश्चैको यदा गच्छेदुभयोर्गृहपार्श्वयोः ।**

**मार्गविधस्तदा स स्याच्छोकसन्तापकारकः ॥ २४ ॥**

**मार्ग वेध का स्वरूप और फल**—अपने ही दोनों घरों के पार्श्वों में जब एक ही मार्ग जाता है तो उसे 'मार्गविध' कहते हैं और वह गृहस्वामी के लिए शोक एवं सन्तापकारक होता है ॥ २४ ॥

**उत्सङ्गादीनां चतुर्ण्णां प्रवेशानां स्वरूपं फलं च**

**उत्सङ्गः पूर्णबाहुश्च हीनबाहुस्तथापरः ।**
**प्रत्यक्षाय इति प्रोक्तं प्रवेशानां चतुष्टयम् ॥ २५ ॥**

**उत्सङ्गादि-प्रवेशद्वार-चतुष्टय**—प्रवेश द्वार चार प्रकार के बताये गए हैं—१. उत्सङ्ग, २. पूर्णबाहु, ३. हीनबाहु और ४. प्रत्यक्षाय ॥ २५ ॥

**गृहस्य सम्मुखं यत्र द्वारं भवति वास्तुनः ।**
**उत्सङ्ग इति स प्रोक्तः पूर्णबाहुः प्रदक्षिणः ॥ २६ ॥**
**वामतो हीनबाहुः स्यात् प्रत्य(क्षो वा?क्षाय)स्तु पृष्ठतः ।**
**चतुर्थोऽयं समुद्दिष्टः प्रवेशो वास्तुनो बुधैः ॥ २७ ॥**

**उत्सङ्गादि प्रवेशद्वार के लक्षण**—जहाँ पर वास्तु का द्वार गृह के सम्मुख होता है उसको 'उत्सङ्ग' कहते हैं । प्रदक्षिण (गृह के दक्षिण भाग से) प्रवेश से गृह 'पूर्णबाहु' कहलाता है । बायें से यदि प्रवेश होता है तो हीनबाहु और पीछे से यदि वास्तु में प्रवेश किया जाता है तो विद्वानों ने उसे 'प्रत्यक्षाय' नाम से समुद्दिष्ट किया है ॥ २६-२७ ॥

**उत्सङ्गाख्ये प्रवेशे स्यात् प्रजाहानिः कुटुम्बिनः ।**
**धनधान्यक्षयो वास्य मरणं वा ध्रुवं भवेत् ॥ २८ ॥**

उत्सङ्ग नामक प्रवेश वाले गृह में कुटुम्बी की सन्तान हानि होती है अथवा उसके धन-धान्य का नाश होता है या उसकी निश्चय ही मृत्यु होती है ॥ २८ ॥

**पूर्णबाहौ पुत्रपौत्रा धनधान्यसुखानि च ।**
**भवन्ति वसतो नित्यं गृहिणस्तत्र वास्तुनि ॥ २९ ॥**

पूर्णबाहु नामक प्रवेश द्वार वाले वास्तु में बसने वाले स्वामी को पुत्र-पौत्र एवं नित्य धन-धान्य सुख प्राप्त होते हैं ॥ २९ ॥

**अल्पमित्रो गृही हीनबाहावत्यल्पबान्धवः ।**
**स्याद् वाल्पवित्तो जीयेत स्त्रीभिः पीड्येत वामयैः ॥ ३० ॥**

हीनबाहु वामावर्त प्रवेश वाले घर का मालिक अल्पमित्र, अत्यल्प बान्धव

वाला अथवा अल्पवित्त अर्थात् समृद्धिहीन होता है । वह स्त्रियों से जित और विभिन्न रोगों से पीड़ित रहता है ॥ ३० ॥

**प्रत्यक्षायप्रवेशस्तु विहितो यत्र वेश्मनि ।**
**तस्मिन् निवसतां पुंसां निश्चितः स्याद् धनक्षयः ॥ ३१ ॥**

जिस भवन में प्रत्यक्षाय (पीछे से) प्रवेश विहित होता है उसमें रहने वाले मनुष्यों का निश्चित ही धन नाश होता है ॥ ३१ ॥

**शालाभेदस्य स्वरूपं फलं च**

**मूषास्वस्थानयुक्तासु शालाभेद इति स्मृतः ।**
**प्राप्नोति तत्र निवसन् मृत्युं दुःखं सरोगताम् ॥ ३२ ॥**

**शालाभेद रूपदोष का स्वरूप एवं फल**—मूषाओं की अ-स्थान-योजना से 'शालाभेद-दोष' प्राप्त होता है । वहाँ पर रहने वाला मनुष्य मृत्यु, दुःख एवं रुग्णता को प्राप्त करता है ॥ ३२ ॥

**उदग्दक्षिणशालासु पूर्वापरगतासु च ।**
**अन्यथा वा स्थिरं द्वारं वधबन्धनकारकम् ॥ ३३ ॥**

उत्तर-दक्षिण शालाओं में और पूर्व-पश्चिम अभिमुख शालाओं में अन्यथा स्थित द्वार वधकारक एवं बन्धनकारक होता है ॥ ३३ ॥

**मूषागतान् भ्रमान् कुर्यान्न शालां प्रतिभेदयेत् ।**
**भ्रमभग्नासु शालासु विपद्यन्ते कुटुम्बिनः ॥ ३४ ॥**
**शालाभेदो भवेद् यत्र पृष्ठतः पार्श्वतोऽपि वा ।**
**धनधान्यक्षयस्तत्र गृहिणो जायते ध्रुवम् ॥ ३५ ॥**

मूषागत भ्रमों (= चक्करदार) वाले दोष को तो कर भी दे परन्तु शाला का भेद दोष नहीं करना चाहिए क्योंकि भ्रम-भग्न शालाओं में कुटुम्बी विपत्ति प्राप्त करते हैं । किन्तु जहाँ पर पीछे से अथवा बगल से शालाभेद दोष होता है वहाँ पर निश्चित रूप से गृहस्वामी का धननाश कहा गया है ॥ ३४-३५ ॥

**विकोकिलगृहस्य स्वरूपं फलं च**

**यत्र प्रत्यङ्मुखे शाले गृहं तत् स्याद् विकोकिलम् ।**
**आयुश्चतुष्पदं धान्यं वसतां तत्र नश्यति ॥ ३६ ॥**

**विकोकिल गृह का स्वरूप एवं फल**—जहाँ पर पश्चिमाभिमुख दो शालाएँ

होती हैं उसे 'विकोकिल' संज्ञक भवन कहते हैं, वहाँ पर रहने वालों की आयु, पशु तथा धान्य नाश को प्राप्त होते हैं ॥ ३६ ॥

### सीमाशालाप्रभिन्नेषु प्रासादादिषु फलम्

**सीमाशालाप्रभिन्नस्य प्रासादस्य गृहस्य च ।**
**अस्थिरा जायते ऋद्धिः स्थितिश्च न भवेच्चिरम् ॥ ३७ ॥**

**सीमाशाला से भिन्न प्रासाद आदि का फल**—सीमा-शाला में प्रभिन्न प्रासाद और गृह की ऋद्धि (संमृद्धि) अस्थिर होती है और उसकी स्थिति चिरकाल तक सम्भव नहीं है ॥ ३७ ॥

### गर्भे चन्द्रावलोकिताया निषेधः, गवाक्षके मूषानिवेशनस्यावश्यकता

**सर्वदोषकरी ज्ञेया गर्भे चन्द्रावलोकिता ।**
**मूषां विना विनाशाय कामोच्छित्यै गवाक्षकः ॥ ३८ ॥**

**गर्भ में चन्द्रावलोकित का निषेध**—गृह के गर्भ (Basement) में चन्द्रावलोकना सर्वदोष करने वाली समझनी चाहिए । वहाँ पर मूषा के बिना वह स्थान विनाश के लिए ही होता है और विना मूषा के गवाक्ष के होने पर मनोरथों का उच्छेद हो जाता है ॥ ३८ ॥

### गण्डकुक्षिपृष्ठकक्षाख्यानामङ्गानां गृहात् पृथक्करणे फलम्

**यदा गण्डोऽथवा कुक्षिः पृष्ठं कक्षाथ भिद्यते ।**
**दारिद्र्यं जायते भर्तुस्तदानीमतिदुस्सहम् ॥ ३९ ॥**

**गण्ड-कुक्षि-पृष्ठ एवं कक्षा नामक अङ्गों को गृह से अलग करने का फल**—जब गण्ड अथवा कुक्षि, पृष्ठ और कक्षा भेद (गृह से बाहर) को प्राप्त होते हैं तब गृहस्वामी दुःसह दारिद्र्य को प्राप्त होता है ॥ ३९ ॥

### गण्डादीनां स्वरूपनिर्देशः

**गर्भादुभयतो गण्डौ कक्षे स्तः कर्मभित्तिगे ।**
**दक्षिणोत्तरयोः कुक्षी पृष्ठतः पृष्ठमादिशेत् ॥ ४० ॥**

**गण्ड आदि का स्वरूप**—गर्भ भाग से दोनों तरफ दोनों गण्डों का विधान है तथा कर्ण भित्ति तक जाने वाले दोनों कक्षों (= कमरों) का विधान किया गया है। दक्षिण और उत्तर में दोनों कुक्षियों को संयोजित करे और पीछे से पृष्ठ को भी नियोजित किया जाता है ॥ ४० ॥

स्थापितानां द्वाराणां संरोधे फलम्

**स्थापितद्वारसंरोधे गृहिणो जायतेऽश्मरी ।**
**द्वारे तु विहिते तस्मिन्नर्थस्तस्य न जायते ॥ ४१ ॥**

**स्थापित द्वार के संरोध का फल**—स्थापित द्वार के संरोध होने पर गृहस्वामी को अपस्मार (मिरगी) रोग होता है और वहाँ द्वार के बनाने पर उसका अनर्थ ही होता है ॥ ४१ ॥

गृहश्रोत्रादीनां रोधे फलम्

**पूर्वद्वारनिरोधं तु नवमार्गं कदाचन (?) ।**
**श्रोत्ररोधेऽश्मरीदोषः कृत्त श्रोत्रे ह्य नम्यता(?)॥ ४२ ॥**

**गृह-श्रोत्र आदि के रोध का फल**—पूर्वद्वार के निरुद्ध होने से नया मार्ग होता है । श्रोत्र के निरुद्ध होने पर गृहस्वामी को पथरी (मूत्रकृच्छ्र) रोग होता है और श्रोत्र के कट जाने पर नम्रता समाप्त हो जाती है ॥ ४२ ॥

कृत्तानां गवाक्षालोकनानां चयने फलम्

**कृत्तानि यत्र चीयन्ते गवाक्षालोकनानि च ।**
**तत्र प्रसूतिर्न भवेन्निष्पन्नापि विनश्यति ॥ ४३ ॥**

**कृत्त गवाक्ष एवं अवलोकन का फल**—जहाँ पर कटे-पिटे गवाक्ष और अवलोकन बनाये जाते हैं वहाँ पर प्रसूति (= सन्तान) नहीं होती है और यदि वह होती भी है तो नष्ट हो जाती है ॥ ४३ ॥

प्राच्यादिषु चीयमानायां भित्तेर्बहिर्गमने फलम्

**चीयमाना यदा भित्तिर्दक्षिणा स्याद् बहिर्मुखी ।**
**तदा व्याधिभयं विद्यान्नृपदण्डभयं तथा ॥ ४४ ॥**

**दीवाल की चुनाई में भित्ति के बाहर जाने का फल**—दक्षिण की दीवाल के चुनने पर यदि वह बाहर चली जाती है तो वहाँ व्याधि का भय और नृपदण्ड समझना चाहिए ॥ ४४ ॥

**यदा तु पश्चिमं कुड्यं प्रयाति बहिरग्रतः ।**
**धनहानिं विजानीयाच्चौरेभ्यश्च भयं तदा ॥ ४५ ॥**

जब पश्चिम दीवाल आगे से बाहर निकल पड़ती है तो धनहानि समझनी चाहिए और चोरों से भय भी आपतित होता है ॥ ४५ ॥

**उत्तरं तु यदा कुड्यं चीयमानं बहिर्व्रजेत् ।**
**गृहभर्तुश्च कर्तुश्च व्यसनं स्यात् तदा महत् ॥ ४६ ॥**

जब उत्तर की दीवाल चुनने पर बाहर निकल जाती है तो गृहस्वामी और राजमिस्त्री (स्थपति) दोनों के लिए बड़ा भारी व्यसन उपस्थित होता है ॥ ४६ ॥

**यदाग्रं चीयमानायाः पूर्वभित्तेर्बहिर्व्रजेत् ।**
**तदा गृहपतेस्तीव्रं राजदण्डभयं भवेत् ॥ ४७ ॥**

जब पूर्वाभिमुख भित्ति के चयन में उसका अग्रभाग बाहर निकलता है तब गृहपति के लिए तीव्र राजदण्ड का भय कहा गया है ॥ ४७ ॥

**चीयमानानां प्राग्दक्षिणादिकर्णानां बहिर्गमने फलम्**

**प्राग्दक्षिणो यदा कर्णश्चीयमानो बहिर्व्रजेत् ।**
**तत्राग्निभीतिरतुला संशयश्च प्रभोर्भवेत् ॥ ४८ ॥**

**चीयमान प्राक्दक्षिण कर्ण के भित्ति से बाहर निकलने का फल**—जब चीयमान दीवाल का प्राग्दक्षिण कर्ण बाहर निकल पड़ता है तो वहाँ पर भीषण अग्निभय और राजा का भी भय समुपस्थित होता है ॥ ४८ ॥

**बहिर्मुखो यदा गच्छेत् कर्णो दक्षिणपश्चिमः ।**
**कलहोपद्रवस्तत्र स्याद् भार्यायाश्च संशयः ॥ ४९ ॥**

दक्षिण-पश्चिम कर्ण जब बहिर्मुख होता है तो वहाँ पर गृह कलह आदि उपद्रव और भार्या का संशय कहा गया है ॥ ४९ ॥

**यत्रोत्तरापरः कर्णश्चीयमानो व्रजेद् बहिः ।**
**पुत्रवाहनभृत्यानां भवेत् तस्मिन्नुपद्रवः ॥ ५० ॥**

जहाँ पर उत्तर-पश्चिम कर्ण चुने जाने पर बाहर निकल पड़ता है तो वहाँ पर पुत्र, वाहन और नौकरों के लिए उपद्रव उत्पन्न होता है ॥ ५० ॥

**यदा प्रागुत्तरः कर्णो बहिर्गच्छति वेश्मनः ।**
**तदा गवां वृषाणां च गुरूणां च क्षयो भवेत् ॥ ५१ ॥**

जब चुनाई होने पर पूर्वोत्तर कर्ण बहिर्मुख हो जाता है तब गऊओं का, बैलों का और गुरुओं का नाश होता है ॥ ५१ ॥

**मल्लिकाकृतिमन्दिरस्य लक्षणम्**

**चतस्रो भित्तयो तस्य बहिर्निर्यान्ति वेश्मनः ।**

**चीयमानास्तदत्रोक्तं मन्दिरं मल्लिकाकृति ॥ ५२ ॥**

**मल्लिका कृति भवन का लक्षण एवं फल**—जिस भवन की चुनाई की गई चारों दिवालें बाहर निकल जाती हैं तो वहाँ पर उसे 'मल्लिका-कृति' भवन की संज्ञा से पुकारा जाता है ॥ ५२ ॥

तत्रायव्ययव्यवस्था

**तादृग् गृहे न तत्रायो व्ययो भवति यादृशः ।**
**कर्शितोऽस्यैव दोषेण तस्य भर्ता पलायते ॥ ५३ ॥**

**मल्लिकाकृतिभवन में आय-व्यय व्यवस्था**—उस प्रकार के घर में जैसा व्यय होता है वैसी आय नहीं होती है और उसके ही दोष से दुःखित होकर उस घर का स्वामी भाग जाता है ॥ ५३ ॥

संक्षिप्तगृहस्य लक्षणं फलं च

**संक्षिप्यते तु यद् वेश्म चीयमानं समन्ततः ।**
**संक्षिप्तमिति तज्ज्ञेयं तत्र राजभयं भवेत् ॥ ५४ ॥**
**यत् स्यादन्तेषु संक्षिप्तं विस्तृतं चापि मध्यतः ।**
**मृदङ्गाकृतिसंस्थानं तत्र व्याधिभयं भवेत् ॥ ५५ ॥**

**संक्षिप्त गृह का लक्षण एवं फल**—चुनाई करते हुए जो वेश्म चारों तरफ से संक्षिप्तता को प्राप्त करता है उसको 'संक्षिप्त गृह' कहा गया है और वह यदि मध्य से विस्तृत होता है तो उसको 'मृदङ्गाकृति संस्थान' की संज्ञा से पुकारते हैं और वहाँ पर सदैव व्याधि का भय उपस्थित होता है ॥ ५४-५५ ॥

**आद्यन्तविस्तृतं यत् स्यात् संक्षिप्तं चापि मध्यतः ।**
**मृदुमध्यं तदुद्दिष्टं क्षुद्भयं तत्र जायते ॥ ५६ ॥**

आदि से और अन्त से विस्तृत तथा मध्य से संक्षिप्त जो वेश्म होता है वह वेश्म मृदुमध्य के नाम से उद्दिष्ट किया गया है और वहाँ पर क्षुधा का भय उपस्थित होता है ॥ ५६ ॥

कर्णेषु विषमोन्नतेषु फलम्

**विषमैरुन्नतैः कर्णैर्धनक्षयकरं गृहम् ।**
**भित्तिवच्चापि कर्णेषु प्रागुक्तं फलमादिशेत् ॥ ५७ ॥**

**कर्ण (= कोना) के विषम या उन्नत होने का फल**—विषम एवं उन्नत कर्णों

वाला घर क्षयकारी होता है । दीवालों के समान पूर्व प्रतिपादित कर्णों में भी यही फल विहित है ॥ ५७ ॥

गृहमध्ये द्वारकरणनिषेधः

**मध्ये द्वारं न कर्तव्यं मनुजानां कथञ्चन ।**
**मध्ये द्वारे कृते तत्र कुलनाशः प्रजायते ॥ ५८ ॥**

**भवन के मध्य में द्वार का निषेध**—मनुष्यों के भवन में द्वार मध्य में बीचो-बीच कभी भी नहीं करना चाहिए । गृह के मध्य में द्वार करने से कुल का नाश होता है ॥ ५८ ॥

द्वारवेधेऽनिष्टद्रव्ययोजने च फलम्

**द्वारं द्वारेण वा विद्धमशुभायोपपद्यते ।**
**अनिष्टद्रव्यसंयुक्तं धनधान्यविनाशनम् ॥ ५९ ॥**

**द्वार वेध एवं अनिष्ट द्रव्य के प्रयोग का फल**—एक द्वार दूसरे द्वार से विद्ध होने पर अशुभकारक होता है और अनिष्ट द्रव्य से संयुक्त वह धन-धान्य का विनाशकारी होता है ॥ ५९ ॥

नवेन पुराणयोजने फलम्

**नवं पुराणसंयुक्तमन्यं स्वामिनमिच्छति ।**
**अधोग्रं राजदण्डाय विद्धं द्वारं विगर्हितम् ॥ ६० ॥**

**नवीन द्वार के साथ पुराने द्वार के संयोजन का फल**—नवीन द्वार पुराने द्वार से संयुक्त होने पर दूसरे भवन-स्वामी की इच्छा करता है । नीचे से ऊपर विद्ध द्वार राजदण्ड देने वाला होता है और वह निन्दित कहा गया है ॥ ६० ॥

मिश्रजातिद्रव्योत्थेषु गृहादिषु फलम्

**नवं पुराणसंयुक्तं द्रव्यं तु कलिकारकम् ।**
**न मिश्रजातिद्रव्योत्थं द्वारं वा वेश्म वा शुभम् ॥ ६१ ॥**

**मिश्र जाति के द्रव्य से बने भवन का फल**—नया द्रव्य पुराने से संयुक्त होने पर कलिकारक अर्थात् झगड़ा करने वाला होता है इसीलिए मिश्रजाति के द्रव्य से निर्मित द्वार अथवा वेश्म शुभ नहीं कहा गया है ॥ ६१ ॥

तत्तत्स्थानेष्वधिवास्य प्रतिष्ठितानां पुनश्चालने फलम्

**गृहस्थानेषु यद् द्रव्यमधिवास्य प्रतिष्ठितम् ।**

**तच्चालनेन चलनं गृहभर्तुः प्रजायते ॥ ६२ ॥**

**प्रतिष्ठित हुए द्वार आदि के हटाने बढ़ाने का फल**—घर के स्थानों में जो द्वार द्रव्य अधिवासित (= पूजन) कर प्रतिष्ठित किया जाता है, उसके चालन (= हटाने बढ़ाने) से गृहस्वामी का भी चलन उत्पन्न होता है ॥ ६२ ॥

**अन्यवास्तुच्युतस्यान्यवास्तौ योजने फलम्**

**अन्यवास्तुच्युतं द्रव्यमन्यवास्तौ न योजयेत् ।**
**प्रासादे न भवेत् पूजा गृहे च न वसेद् गृही ॥ ६३ ॥**

**अन्य वास्तुच्युत द्रव्य का अन्य वास्तु में संयोजन का निषेध**—दूसरे वास्तु से च्युत द्रव्य दूसरे वास्तु में प्रयुक्त नहीं करना चाहिए । ऐसे प्रासाद में पूजा नहीं होती है और न गृह में गृहपति बस पाता है ॥ ६३ ॥

**देवदग्धेन द्रव्येण गृहकरणे फलम्**

**द्रव्येण देवदग्धेन भवनं यद् विधीयते ।**
**न तत्र वसति स्वामी वसन्नपि विनश्यति ॥ ६४ ॥**

**देवदग्ध द्रव्य से गृहकरण का फल**—देव-दग्ध द्रव्य (भग्नावशेष) से जो भवन बनाया जाता है उसमें गृहस्वामी निवास नहीं कर पाता है और यदि निवास करता भी है तो नाश को प्राप्त होता है ॥ ६४ ॥

**विमर्श**—दैवी प्रकोप से अर्थात् विद्युत् या आँधी आदि पानी में क्षत हुए वृक्ष आदि भी 'देवदग्ध' होते हैं ।

**सूर्यद्रुमध्वजच्छायानां गृहद्वारातिक्रमणे फलम्**

**सूर्योद्भवा द्रुमच्छाया ध्वजच्छाया च गर्हिता ।**
**द्वारातिक्रमणादेताः क्षुद्व्याधिकलिकारकाः ॥ ६५ ॥**

सूर्योद्भव वृक्ष (गुलमोहर) की छाया और ध्वज (प्रासाद के शिखर) की छाया निन्दित कही गई है । द्वार पर पड़कर अतिक्रमण करने वाली यह छाया क्षुधा, व्याधि और कलहकारक होती है ॥ ६५ ॥

**ध्वजच्छायायाः स्वरूपनिर्देशः**

**प्रासादशिखरच्छाया ध्वजच्छायेति कीर्तिता ।**

**ध्वज छाया का लक्षण**—वास्तुविदों ने प्रासाद के शिखर की छाया को 'ध्वजछाया' कहा है ॥ ६६ ॥

**निषिद्धा गृहतारा:**

**त्रिपञ्चसप्तमी भर्तुर्गृहतारा न शोभना ॥ ६६ ॥**

**निषिद्ध गृहतारा**—तीसरी, पाँचवी, सातवीं गृह ताराएँ गृहपति के लिये शुभ नहीं कही गई हैं ॥६६॥

**निम्नोन्नत्वादिदोषयुक्तस्याग्रतरद्वारस्य करणे फलम्**

**निम्नोन्नतं करालं च सम्मुखं पृष्ठदेशगम् ।**
**वामावर्तं च न शुभं द्वारमग्रतरं गृहे ॥ ६७ ॥**

**निम्नोन्नतादि द्वार का फल**—निम्न, उन्नत, कराल, सम्मुख, पृष्ठ देशगामी, वामावर्त, अग्रतर (घर से आगे निकला हुआ) द्वार घर में गृह स्वामी के लिए शुभ नहीं कहा गया है ॥ ६७ ॥

**निम्ने स्यात् स्त्रीजितो भर्ता दुर्जनस्थितिरुन्नते ।**
**सम्मुखे सुतपीडा स्यात् पृष्ठगे चपला: स्त्रियः ॥ ६८ ॥**

निम्न द्वार में गृहस्वामी स्त्रीजित होता है । उन्नत द्वार में दुर्जन प्रवेश की स्थिति कही गयी है । सम्मुख प्रवेश द्वार में सुतपीड़ा और पृष्ठाभिमुख द्वार में स्त्रियाँ चपल हो जाती हैं ॥ ६८ ॥

**वामे वित्तक्षयो द्वा(रि?रे) भवत्यग्रतरे प्रभोः ।**
**द्वारं तस्मान्न कर्तव्यमीदृग्रूपं विचक्षणैः ॥ ६९ ॥**

गृह में घुसते हुए वाम प्रवेशद्वार में धननाश और अग्रतर प्रवेशद्वार में प्रभु (= स्वामी) का नाश होता है । अतः इस प्रकार का द्वार शास्त्रज्ञ विचक्षणों को नहीं बनवाना चाहिए ॥ ६७-६९ ॥

**नागदन्तादीनां द्वारमध्ये निवेशस्य, तेषां विषमस्थितेश्च निषेधः**

**नागदन्ततुलास्तम्भभित्तिमूषागवाक्षका: ।**
**द्वारमध्ये न दातव्या न चैते विषमस्थिताः ॥ ७० ॥**

**द्वारमध्य में खूँटी आदि का निषेध**—नागदन्त, तुला, स्तम्भ, भित्ति, मूषा और गवाक्ष—इनको न तो द्वार के मध्य-भाग में देना चाहिए और न इनको विषम भाग में स्थित करना चाहिए ॥ ७० ॥

**गृहे इतिहासाद्युक्तवृत्तान्तप्रतिरूपणस्य निषेधः**

**इतिहासपुराणोक्तं वृत्तान्तं प्रतिरूपकम् ।**
**निन्दितं च गृहे नेष्टं शस्तं देवकुलेषु तत् ॥ ७१ ॥**

**गृह में इतिहास-पुराण के चित्रों का निषेध**—इतिहासों और पुराणों में प्रतिपादित वृतान्तों के प्रतिरूपक चित्रों से चित्रित आलेख्य गृह में लगाना निन्दित तथा इष्ट नहीं कहा गया है। किन्तु देवमन्दिरों में वे प्रशस्त माने गये हैं ॥ ७१ ॥

**इन्द्रजालतुल्यानां, मिथ्याकृतानां भीषणानां च प्रतिरूपणस्य निषेधः**

**यानीन्द्रजालतुल्यानि यानि मिथ्याकृतानि च।**
**भीषणानि च यानि स्युर्न कुर्यात् तानि वेश्मसु ॥ ७२ ॥**

**इन्द्रजाल के चित्रों का गृह में निषेध**—जो इन्द्रजाल के समान झूठे तथा भीषण प्रतिरूप वाले चित्र हैं वे भी वेश्मों में नहीं बनवाने चाहिए ॥ ७२ ॥

**स्वयमुद्घाटनं कुर्वतः, सशब्दस्य, पादशीतलस्य च द्वारस्य निवेशने फलम्**

**स्वयमुद्घाटितं द्वारमुच्चाटनकरं भवेत्।**
**धनहृद् बन्धुवैरं स्यादथवा कलिकारकम् ॥ ७३ ॥**

**स्वयं बन्द होने वाले द्वार का निषेध**—अपने आप उद्घाटित (खुल जाने वाले) द्वार उच्चाटनकारी होते हैं। वह धन क्षय, बन्धु वैर अथवा गृह कलह कराने वाला होता है ॥ ७३ ॥

**स्वयं यत् पिहितं द्वारं तद् भवेद् बहुदुःखदम्।**
**सशब्दं भयकृत् पादशीतलं गर्भपातनम् ॥ ७४ ॥**

जो द्वार अपने आप बन्द हो जाता है वह गृहस्वामी के लिए बड़ा दुःखदायी होता है। आवाज के साथ बन्द होने वाला द्वार भी स्वामी के लिए भयकारक, पाद शीतल और गर्भ पातक भी होता है ॥ ७४ ॥

**अधोमुखत्वेन प्रत्यग्याम्याननत्वेन च द्रव्यस्य निवेशने फलम्**

**द्रव्यं नाधोमुखं कार्यं प्रत्यग्याम्याननं न च।**
**पश्चिमाग्रे परिक्लेशो दक्षिणाग्रे तु शून्यता ॥ ७५ ॥**

द्रव्य अधोमुख नहीं करना चाहिए और न पश्चिम-दक्षिणाभिमुख भी नहीं करना चाहिए क्योंकि पश्चिमाभिमुख द्रव्य में परिक्लेश उत्पन्न होता है और दक्षिणाभिमुख द्रव्य में शून्यता प्राप्त होती है ॥ ७५ ॥

**स्तम्भद्वारस्य भित्तेश्च वैपरीत्येन निवेशनस्य निषेधः**

**स्तम्भद्वारं च भित्तिं च विपरीतं न कारयेत्।**
**अमीषां वैपरीत्येन दोषाः स्युर्बहवो नृणाम् ॥ ७६ ॥**

**स्तम्भद्वार एवं दीवाल के विपरीत बनाने का निषेध**—स्तम्भद्वार और दीवार को विपरीत नहीं बनवाना चाहिए क्योंकि इनके वैपरीत्य से मनुष्यों को बहुत प्रकार के दोष प्राप्त होते हैं ॥ ७६ ॥

**उपर्युपरिभूमिकाकल्पने तत्र क्षणक्लृप्तौ च नियमाः**

**मूलसूत्रानुसारेण कर्तव्या भूमिकोपरि ।**
**उपर्युपरि यद् वेश्मसमं सन्तापकारकम् ॥ ७७ ॥**
**अधोभूमौ क्षणा ये स्युस्तत्समांश्चोर्ध्वभूमिषु ।**

**ऊपर की मञ्जिल निर्माण के नियम**—मूलसूत्र (= नींव) के अनुसार ऊपर की भूमि (दीवाल) का निर्माण (कम करके) करना चाहिए जो वेश्म नीचे से ऊपर तक बराबर निर्मित होते हैं वह सन्ताप कारक होते हैं। नीचे की भूमि में जो क्षण (भित्ति) होते हैं उनके समान ऊँचे की भूमि में भी वे ही क्षण होने चाहिए ॥ ७७-७८ ॥

**शालाया निम्नत्वे अलिन्दस्याधिक्ये च फलम्**

**परित्यजन्नपहिता (?) न कुर्वीत यथोत्तरम् ॥ ७८ ॥**
**शाला निम्ना भवेद्यस्मिन्नलिन्दस्त्वधिको भवेत् ।**
**निधनं जायते तत्र सदा शोकभयानि च ॥ ७९ ॥**

**शाला और बरामदे की ऊँचाई के नियम**—जिस भवन में शाला (= कमरा) नीची होती है और अलिन्द (= बरामदा) अधिक (ऊँचा) होता है वहाँ पर निधन, शोक और भय समुपस्थित होते हैं ॥ ७८-७९ ॥

**उपरिभूमिषु द्वारनिवेशने नियमाः**

**मूलद्वारानुसारेण द्वाराण्युपरिभूमिषु ।**
**कुर्याद् भयप्रदानि स्युर्विहितान्यन्यथा पुनः ॥ ८० ॥**

**दूसरे मञ्जिल पर द्वार के ऊपर द्वार बनाने का नियम**—मूलद्वार के अनुसार ही ऊपर के खण्डों में दरवाजों को बनाना चाहिए । इसके विपरीत द्वारों के सन्निवेश भयप्रदायक माने गए हैं ॥ ८० ॥

**आध्मातादिद्वाराणां निवेशने फलम्**

**क्षुद्भयप्रदमाध्मा (नं?)तं कुब्जं कुलविनाशनम् ।**
**अत्यर्थं पीडितं पीडां करोत्यन्तनतं क्षयम् ॥ ८१ ॥**
**प्रवासो बाह्यविनते दिग्भ्रान्ते दस्युतो भयम् ।**

